# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




४९ वर्षे

३–४ अङ्कौ

मार्गशीर्ष-फाल्गुनपूर्णिमे

दिसम्बर–मार्च, १९९४-९५ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः

**डॉ० आद्याप्रसादमिश्रः**

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी




४९ वर्षे

३-४ अङ्कौ

वार्षिकं मूल्यम्—१०० रूप्यकाणि

दिसम्बर–मार्च, १९९४-९५ ई०

❀ ❀ ❀

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

मुद्रकः —
विजय-प्रेस,
सरसौली, भोजूबीर
वाराणसी

प्राप्तिस्थानम्—
विक्रय-विभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१ ००२

# विषयानुक्रमणी





# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ४९ वर्षे | मार्गशीर्ष—फाल्गुनपूर्णिमे, वि० सं० २०५१ | ३–४ अङ्कौ |
|---|---|---|

## कतिपयपाणिनीयसूत्रमीमांसा*

आचार्यश्रीरामप्रसादत्रिपाठी
व्याकरण-योगतन्त्रागमविभागाध्यक्षचर।
वेदवेदाङ्गसङ्कायाध्यक्षचरश्च
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

### [ तुल्यास्यप्रयत्नं सवर्णम्—अष्टा० १।१।९ ]

ताल्वादिस्थानमाभ्यन्तरप्रयत्नश्चैतद्द्वयं यस्य येन तुल्यं तन्मिथः सवर्णसंज्ञं स्यात् ।

### [ नाज्झलौ—अष्टा० १।१।१० ]

आकारसहितोऽच् आच् स च हल् चेत्येतौ मिथः सवर्णौ न स्तः । अनयोर्मध्ये तुल्यास्यप्रयत्नमिति सूत्रं सामान्यधर्मावच्छिन्नोद्देश्यताकमिति उत्सर्गसूत्रम्, नाज्झलाविति तु विशेषधर्मावच्छिन्नोद्देश्यताकतयाऽपवादशास्त्रम् ।

सामान्यधर्मश्चात्र तुल्यास्यप्रयत्नत्वसम्बन्धेन वर्णविशिष्टवर्णत्वरूपः ।

विशेषधर्मश्च—तुल्यास्यप्रयत्नत्वसम्बन्धेन आकारसहितोऽच् विशिष्टहल्वृत्तिहल्त्वरूपः । अनयोरेव धर्मयोः सूत्रद्वयीयोद्देश्यतावच्छेदकत्वं क्रमेण बोद्धव्यम् ।

* निबन्धोऽयं "सारस्वती सुषमायाः" षट्चत्वारिंशद्वर्षीयतृतीय-चतुर्थाङ्कतः क्रमशः प्रचलन्नस्ति।

एवञ्च विशेषशास्त्रेण नाज्झलावित्यनेन सामान्यशास्त्रस्य तुल्यास्यप्रयत्नं सवर्णमित्यस्य बोधो भवति। ततश्च विशेषधर्मावच्छिन्नातिरिक्तत्वेन सामान्यधर्मावच्छिन्ने उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवति। एवञ्चाज्भिन्नेन तुल्यास्यप्रयत्नेन सह सवर्णसञ्ज्ञं भवतीति फलति।

यदि तु स्वजनकस्थान प्रयत्नजन्यत्व, स्वाजनकस्थानप्रयत्नाजन्यत्वोभयसम्बन्धविशिष्टसम्बन्धप्रतियोगित्वसम्बन्धेन वर्णविशिष्टो वर्णः सवर्णसंज्ञको भवतीत्यर्थः स्वीक्रियते। वैशिष्ट्यञ्च स्वीयानुयोगिता समानाधिकरणप्रतियोगिताकत्व, स्वीयप्रतियोगितासमानाधिकरणानुयागिताकत्व-स्ववृत्तिसंसर्गतावच्छेदकरूपावच्छिन्नत्व, स्वभिन्नत्वेतच्चतुष्टयसम्बन्धेन। सम्बन्धश्च—स्वघटितवाक्यप्रतिपाद्यतया तात्पर्यविषयीभूतो ग्राह्यः। तात्पर्यज्ञानं तूद्बोधकान्तरादेव।

अस्मिन् पक्षे ईदृशवर्णविशिष्टवर्णत्वं तुल्यास्यशास्त्रीयोद्देश्यतावच्छेदकं तदेव च व्यापकतावच्छेदकमपि। एवमेव नाज्झलावित्यस्यापि परिष्कृतेऽर्थे व्याप्यतावच्छेदकं परिचेतव्यम्, तदवच्छिन्नातिरिक्तत्वेनोत्सर्गशास्त्रोयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो विधातव्यः।

## [ आद्यन्तौ टकितौ—अष्टा० १।१।४६ ]

टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः।

## [ षष्ठीस्थाने योगा—अष्टा १।१।४९ ]

अनिर्धारितसम्बन्धविशेषा षष्ठी स्थाने योगा बोध्या। यत्र यत्र आद्यन्तौ टकितावित्यस्य प्राप्तिस्तत्र तत्र षष्ठीस्थाने इत्यस्य प्राप्तिरस्त्येव। यद्यपि चरेष्टः गापोष्टक् इत्यादौ परश्चेति सूत्रस्यापि एतद्विषयेऽस्ति प्राप्तिस्तथापि पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान् इति न्यायेन आद्यन्ताविति सूत्रं स्थाने योगषष्ठ्या अपवादो न तु परश्चेत्यस्यापि इति स्पष्टं भाष्ये। एवञ्च षष्ठीस्थाने योगा इत्यस्योद्देश्यतावच्छेदकम्—तत्तत्सूत्रीयानिर्धारितसम्बन्धविशेषबाधकषष्ठीत्वम्।

आद्यन्तावित्यस्य टित्किदन्यतरनिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकपदघटकषष्ठीत्वम्। तत्र तत्तत्सूत्रीयानिर्धारितसम्बन्धविशेषबोधकषष्ठीत्वम् व्यापकम्। आद्यान्तावित्यस्योद्देश्यतावच्छेदकं टित्किदन्यतरनिष्ठविधेयतानिरूपितोद्देश्यताप्रयोजकपदघटकषष्ठीत्वं च व्याप्यमिति व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचात् नुट्सुडादिविधायकेषु शास्त्रेषु न प्रवृत्तिः षष्ठीस्थाने योगा इत्यस्येति कृत्वा तत्र तत्राद्यन्तावित्यस्यैव प्रवृत्तिः।

## [ मिदचोऽन्त्यात्परः—अष्टा० १।१।४७ ]

अचः इति निर्धारणे षष्ठी। अचां मध्ये योऽन्त्योऽच् तस्मात्परस्तस्यैवान्तावयवो मित् स्यात्।

अत्र मिदचोऽन्त्यात्पर इति सूत्रं बाध्यसामान्यचिन्ताश्रयणेन षष्ठीस्थाने योगा इत्यस्योद्देश्यतावच्छेदकमुक्तमेव, परश्चेत्यस्योद्देश्यतावच्छेदकं प्रत्ययसञ्ज्ञकत्वम्। तत्रानयोरन्यतरत्वेनात्र व्यापकता बोध्या। एवञ्च यत्र यत्र मिदचोऽन्त्यात्पर इत्यस्य प्राप्तिः तादृशं स्थलं तु नपुंसकस्य झलचः इति सूत्रस्य रुधादिभ्यः श्नम् इत्यस्य च विषये बोध्या। अत्र बाध्यसामान्यचिन्ताश्रयणे—'तृणह इम्' इति सौत्रे निर्देशा मानम्। स्पष्टञ्चैतत्सर्वं भाष्ये।

## [ अलोऽन्त्यस्य—अष्टा० १।१।५२ ]

षष्ठी निर्दिष्टोऽन्त्यस्याल आदेशः स्यात्।

## [ आदेः परस्य—अष्टा० १।१।५४ ]

परस्य यद् विहितं तत्तस्यादेर्बोध्यम् यत्र यत्र आदेः परस्येत्यस्य प्राप्तिस्तत्र तत्रालोऽन्त्यस्येत्यस्य प्राप्तिरिति द्वयोर्व्याप्य व्यापकभावः। तत्रालोऽन्त्यस्येत्युत्सर्गशास्त्रं तदीयोद्देश्यतावच्छेदकं स्थानेयोगषष्ठ्या विधीयमान कार्यत्वम्—इदमेव च व्यापकम्। आदेः परस्येत्यस्योद्देश्यतावच्छेदकं परत्वेन बोधितस्य स्थान षष्ठ्यन्तबोध्यस्य स्थाने विधीयमानकार्यत्वम्। इदमेव च व्याप्यम् एतद्धर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचे सति आदेः परस्येत्यस्य विषयेऽलोऽन्त्यसूत्रस्याप्रवृत्तिः। अत एव 'उदः स्था स्तम्भोः पूर्वस्य' शसो न इत्यादिस्थले अलोऽन्त्यसूत्रस्य प्रवृत्त्यभावो जातः।

## [ अलोऽन्त्यस्य अनेकाल्शित्सर्वस्य—अष्टा० १।१।५५, १।१।५३ ]

यत्र यत्र अनेकाल्शित्सर्वस्येतिसूत्रस्य प्राप्तिस्तत्र तत्र सर्वत्र अलोऽन्त्यस्येत्यस्य प्राप्तिरिति अनेकालिति सूत्रमपवादसूत्रम्। तदीयोद्देश्यतावच्छेदकम् अनेकाल् शिदादेशान्यतरत्वम्। अलोऽन्त्यसूत्रीयोद्देश्यतावच्छेदकमनुपदमेवोक्तम्। अतः अनेकालिति सूत्रीयोद्देश्यताऽवच्छेदकावच्छिन्नातिरिक्तत्वेनालोऽन्त्यसूत्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचे सति 'इदं किमोरीश्की' इत्यादौ अनेकाल् शिद् विषयेऽलोऽन्त्यस्येति सूत्रस्य प्रवृत्तिर्न भवति।

## [ अनेकाल्शित्सर्वस्य, ङिच्च—अष्टा० १।१।५५, १।१।५३ ]

अयमप्यन्त्यस्यैव स्यात् । यत्र यत्र ङिच्चेति सूत्रस्य प्राप्तिस्तत्र सर्वत्रानेकाल् शित्सर्वस्येति सूत्रस्य प्राप्तिरिति ङिच्चेति सूत्रमपवादो भूत्वाऽनेकाल् सूत्रं प्रबाधते। अतश्चावङ् स्फोटायनस्य इत्यादिविषये ङित्वेनाऽन्त्याल एवादेशः, न तु सर्वादेशः। ङिच्चेत्येतदुद्देश्यतावच्छेदकम् ङित्वविशिष्टमनेकालादेशत्वम्, तच्च व्याप्यम्। अनेकालित्यस्योद्देश्यतावच्छेदकमुक्तमेवेति ङिच्चेत्येतच्छास्त्रायोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेनानेकालिति शास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवति।

## [ स्थानिवदादेशः—अष्टा० १।१।५६ ]

आदेशः स्थानिवत्स्यात् । अनल्विधौ—न तु स्थान्यलाश्रयविधौ। अत्र स्थानिवदादेशोऽनल्विधाविति एकमेव सूत्रम्, यदि विधिनिषेधात्मकवाक्यविभागेन योगद्वयघटितं क्रियते, तदा भवत्युत्सर्गापवादभावः। प्रथमं विधिवाक्यमुत्सर्गवाक्यम्। द्वितीयं निषेधवाक्यम्। तत्रापवादशास्त्रीयोद्देश्यतावच्छेदकं स्थान्यलाश्रयविधिकर्तव्यताविशिष्टमादेशत्वम्। उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकमादेशत्वम्। यत्र यत्र स्थान्यलाश्रयविधिकर्तव्यताविशिष्टमादेशत्वम्। तत्र तत्र सामान्यतो यत् किञ्चिद् विधिकर्तव्यताविशिष्टमादेशत्वम्, अस्त्येवेति भवत्येव द्वयोर्व्याप्यव्यापकभाव इति उत्सर्गशास्त्रस्य बाध्यत्वम्। अपवादशास्त्रे एव बाधकत्वं प्रतिफलति।

## [ अचः परस्मिन् पूर्वविधौ—अष्टा० १।१।५७ ]

परनिमित्तोऽजादेशः स्थानिवत्स्यात्, स्थानिभूतादचः पूर्वत्वेन दृष्टस्य विधौ कर्तव्ये।

## [ न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु—अष्टा० १।१।५८ ]

पदस्य चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत्। स्थानिवत्। अत्राचः परस्मिन् पूर्वविधाविति उत्सर्गशास्त्रं न पदान्तद्विर्वचन···· इति त्वपवादशास्त्रम्। तत्र नपदान्तस्योद्देश्यतावच्छेदकम् पदसम्बन्धिचरमावयवद्विर्वचनादिविधेयताविशिष्टो यः परनिमित्तोऽजादेशस्तद्वृत्ति अजादेशत्वम्। अचः परस्मिन्नित्यस्योद्देश्यतावच्छेदकम् स्थानिभूताजवधिकपूर्वत्वोपलक्षितसम्बन्धिविधिकर्तव्यताविशिष्टपरनिमित्ताजादेशत्वम्, तत्र तत्रोक्तपरनिमित्ताजादेशत्वमस्त्येवेति व्याप्यव्यापकभावेन बाध्यबाधकभावः समागतः। न पदान्तस्येत्यस्य बाधकता, अचः परस्मिन्नित्यस्य बाध्यतेति भावः।

## [ अणुदित्सवर्णस्य चाप्रत्ययः—अष्टा० १।१।६९ ]

अविधीयमानोऽणुदिच्च सवर्णस्य सञ्ज्ञा स्यात्।

## [ तपरस्तत्कालस्य—अष्टा० १।१।७० ]

तः परो यस्मात्स च तात्परश्चोच्चार्यमाणः समकालस्यैव संज्ञा स्यात्। गुणानां भेदकत्वपक्षेऽनणि विधित्त्वेऽपि वृद्धिरादैजित्यादौ आकारांशे सावकाशेनानेन 'अतो भिस्ऐस्' इत्यादौ परत्वेनाणुदित्सूत्रस्य बाधः। गुणानामभेदकत्वपक्षे तु अनवकाशत्वाद् बाधः। एतेन लघुशब्देन्दुशेखरग्रन्थेन पाक्षिकापवादत्वमत्रायाति। अतो व्याप्यव्यापकभावो विचार्यते। तत्राविधीयमानमण्त्वमणुदित्सूत्रीयाद्देश्यतावच्छेदकम्। तपरपदबोध्यत्वविशिष्टमविधीयमानाण्त्वं तपरसूत्रीयोद्देश्यतावच्छेदकम्। अनयोर्द्वयोर्व्याप्यव्यापकभावो वर्तते इति कृत्वा उत्सर्गापवादभावः सङ्गच्छते। तत्र अविधीयमानाण्त्वस्य व्यापकत्वम्, तपरशब्दबाध्यत्वविशिष्टाण्त्वस्य व्याप्यत्वमिति 'तपरस्तत्कालस्येत्यनेनाणुदित्सूत्रस्य अपवादत्वाद् बाधो भवति। अतश्च प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते इति परिभाषयाऽणुदित्सूत्रं स्वापवादविषये न प्रवर्तते। अत एव वृद्धिरादैजित्यत्रैच्पदबोध्ये ऐकारे औकारे चाणुदित्सूत्राप्रवृत्या द्विमात्रिकस्यैव तपरपदबोध्यत्वं फलतीति त्रिमात्रिकयोरैकारौकारयोर्वृद्धिसंज्ञाप्रसङ्गः।

## [ हलन्त्यम्— अष्टा० १।१।३ ]

इदमुत्सर्गसूत्रम्। उपदेशेऽन्त्यं हल् इत्स्यात्।

## [ न विभक्तौ तुस्माः— अष्टा० १।३।४ ]

इदमपवादसूत्रम्। विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। उत्सर्गापवादभावसमन्वये सर्वत्रैष एव विशेषः यदपवादशास्त्रम् व्याप्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रमुच्यते, उत्सर्गशास्त्रं तु सामान्य-सामान्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रम्। सामान्यधर्मश्च व्यापकधर्मः, तदवच्छिन्नोद्देश्यताकं शास्त्रं बाध्यं भवति। व्याप्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रं बाधकं भवति—इत्येषा रीतिः, सर्वत्रोत्सर्गापवादभावस्थले द्रष्टव्या भविष्यति। प्रकृते च हलन्त्यमित्यस्य औपदेशिकमाद्योच्चारणविषयीभूतं यदन्त्यं हल् तद्वृत्ति–अन्त्यहल्त्वमुद्देश्यतावच्छेदकम्। न विभक्तावित्यस्य विभक्तिसंज्ञकसुप्तिङ्घटकतवर्गसकारमकारान्यतमत्वमुद्देश्यतावच्छेदकम्। अनयोर्द्वयोर्व्याप्यव्यापकभावो वर्तत एव। यत्र-यत्र विभक्ति-

घटकतवर्गसकारमकारान्यतमत्वम्—तत्र-तत्रौपदेशिकान्त्यहल्त्वम्। यथा यत्र-यत्र धूमस्तत्र तत्राग्निरिति धूमाग्न्योर्व्याप्यव्यापकभावः। एवञ्च व्याप्यधर्मावच्छिन्नोद्देश्यताकेन शास्त्रेण न विभक्ताविल्यनेन व्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य हलन्त्यमित्यस्य बाधो भवति। अतोऽपवादशास्त्रीयोद्देश्यातिरिक्तत्वेन हलन्त्यमिति सामान्यधर्मावच्छिन्नोद्देश्ये सङ्कोचेन विभक्तिघटकेषु तवर्गसकारमकारेषु हलन्त्यमित्यनेन इत्संज्ञाया अप्रवृत्तिर्भवति। अयमेवानयोर्द्वयोरुत्सर्गापवादभावो द्रष्टव्यः।

## [ स्वादिष्वसर्वनामस्थाने—अष्टा० १।४।१७ ]

कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं स्यात्। अपवादशास्त्रमिदम्। अस्योद्देश्यतावच्छेदकं रूपम्—कप्प्रत्ययावधिकसर्वनामस्थानभिन्नयकारादि—अजाद्यन्यतरस्वाद्यव्यवहितपूर्वतदादित्वम्, व्याप्यं चैतद् रूपम्। व्यापकञ्चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकम्, तच्च कप्प्रत्ययावधिकसर्वनामस्थानभिन्नस्वादिप्रत्ययाव्यवहितपूर्वतदादित्वम्।

अनयोर्द्वयोर्व्याप्यव्यापकभावे सति उत्सर्गापवादभावः फलत्येव। तत्र भसंज्ञाऽनवकाशा सती पदसंज्ञां बाधते। यद्यपि आकडारादेकासंज्ञा—इति सूत्रस्य व्याख्यानप्रसङ्गे कौमुदीकृतोक्तम् अस्ति। यद् या परानवकाशा चेति। तत्र पूर्वपरयोरुभयोरपि सावकाशत्वे परा, अन्यतरस्यानवकाशत्वे सैव। सा पूर्वा स्यात् परा वा। तत्र भसंज्ञा परा सती अनवकाशत्वात्पदसंज्ञां बाधते। भवदीय इति प्रयोगे तु भवतष्ठक्छसाविति छस् प्रत्यये कृते सति सिति'चे'ति सूत्रं निरवकाशत्वात् परामपि भसंज्ञां बाधते। स्वातन्त्र्येण परत्वादित्यस्योदाहरणम्—अपादानमुत्तराणि कारकाणि बाधन्ते गां दोग्धि पयः इति। अत्राकथितञ्चेति प्रत्याख्यानपक्षे कर्त्तुरिति कर्मसंज्ञा परत्वादपादानसंज्ञाया बाधिका भवति। एवं च या पराऽनवकाशा चेति कौमुदीग्रन्थे 'परा' इति कथनं वस्तुसत्ताबोधकं न तु परत्वादित्यत्र हेतौ तात्पर्यपरम्।

## [ उपसर्गाः क्रियायोगे, गतिश्च—अष्टा० १।४।५९, १।४।६० ]

एतयोश्चार्थौ—क्रियायोगे प्रादय उपसर्गसंज्ञाः स्युर्गतिसंज्ञाश्च। अयमाशयः—क्रियानिरूपितद्योत्यद्योतकभाव सम्बन्धानुयोगिनः प्रादिगणपठिताः शब्दाः प्रनिष्ठप्रथमावयवतानिरूपकसमुदायावयवाः गति-उपसर्ग एतत्संज्ञाद्वयं युगपल्लभन्ते इति। तत्फलञ्च प्रतिप्रणीतमिति लक्ष्ये प्रतीत्यस्यापसर्गत्वाद् नीतमित्यत्र नीधातोर्नकारस्य उपसर्गादसमासेऽपि णोपदेशस्येति णत्वं भवति। तथा गतिसंज्ञकोऽप्यस्ती इति प्रति इति गतिसंज्ञकस्य गतिर्गताविति सूत्रेणानुदात्तः सिद्ध्यति। अन्यथा स्वरविधाने प्रतिप्रनीतमिति स्यात्—उपसर्गत्वाभावेन णत्वाप्रवृत्तेः।

अनयोरुत्सर्गसूत्रयोरुद्देश्यतावच्छेदकम्—क्रियाप्रतियोगिकद्योत्यद्योतकभावसम्बन्धानुयोगित्वविशिष्टं प्रादिशब्दत्वम् । तच्च व्यापकम् । अनुर्लक्षणे इत्येतदोयोद्देश्यतावच्छेदकं प्रति । अतश्चेदं कर्मप्रवचनीयसंज्ञा विधायकम्, गत्युपसर्गसंज्ञाविधायकशास्त्रयोरपवादत्वेन बाधकं भवति ।

ननु जपमनु प्रावर्षत् इत्यत्रानोः कर्मप्रवचनीयसंज्ञा प्राप्ताऽस्ति, भवत्यपि । तत्रैव चानोर्गत्युपसर्गसंज्ञे प्राप्ते स्तः, तदेतन्न सम्भवति । गणपठितानां प्रादीनामनुकरणभूतानां क्रियायोगा सम्भवादिति-इति चेदुच्यते – अनुकार्यानुकरणयोर्भेदपक्षे प्रादिगणपठितानुपूर्वीभिन्ना ये प्रयोगस्थास्ते ग्राह्याः । अभेदपक्षे तु लक्ष्यस्थेऽनुकार्ये यदि क्रियायोगस्तर्हि अनुकरणेऽपि स्यादेवेति न कोऽपि दोषः । अनुकार्यानुकरणयोर्भेदपक्षे एव अनुर्लक्षणे इति सूत्रेऽनुरिति विभक्त्यन्तमुच्चारयामास भगवान् सूत्रकारः । अभेदपक्षे च प्र, परा, अप, सम, अनु इत्यादि निर्विभक्त्यन्तं पठितवान् । यतो हि–भेदकल्पेऽनुकार्यनिरूपिताशक्तिरनुकरणे स्वीक्रियते इति शक्तिमत्त्वादर्थवत्त्वेन प्रातिपदिकसंज्ञा भवति । अभेदपक्षे तु शक्तिर्नाभ्युपेयते, सादृश्यादेव अर्थबोधो भवतीति प्रातिपदिकसंज्ञाया अभावे विभक्त्युत्पत्तिर्न जायते । परन्तु तावताऽपि "अपदं न प्रयुञ्जीत" इति निषेधो न प्रसरति, अपरिनिष्ठितं न प्रयुञ्जीत इत्यस्य तदर्थत्वात् । परिनिष्ठितत्वञ्च—अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वरूपम् । स्पष्टञ्चेदं लघुशब्देन्दुशेखरेऽजन्तपुल्लिङ्गप्रकरणे ।

## [ तङानावात्मनेपदम्—अष्टा० १।४।१०० ]

तङ् प्रत्याहारः शानच्कानचौ चैतत्संज्ञाः स्युः, पूर्वसंज्ञापवादः । अदसीयोत्सर्गसूत्रन्तु 'लः परस्मैपदम्' तस्यार्थस्तु लादेशाः परस्मैपदसंज्ञाः स्युरिति । सूत्रे ल इति षष्ठ्यन्तं पदमस्ति, अतश्च लकारस्थाने जायमानानामेव तिबादीनां परस्मैपदसंज्ञा न तु लकार निमित्तकानां सिजादीनामिति भावः इति केषाञ्चित् व्याख्यानं तु नातिरमणीयम् । ल इत्यस्य षष्ठ्यन्तत्वे तु लकारस्य परस्मैपद संज्ञा स्याद् इत्येव सूत्रार्थः स्यात्—यथा तपरस्तत्कालस्येत्यनेन तपरवर्णस्य समकालबोधकता । अणुदित्सवर्णस्येत्यनेनाविधीयमानस्याणः सवर्णबोधकता, तद्वत् अत्रापि स्यात् । पुनश्च लकारस्थानिकादेशे सा परस्मैपदसंज्ञा स्थानिवद्भावेन । एवञ्च ल इति प्रथमा बहुवचनान्तम् । तङानावात्मनेपदम् इत्यत्र तङानावित्यस्य प्रथमाद्विवचनान्तवत् । यदि षष्ठ्ययन्तताऽभिप्रेता स्यात्तर्हि तत्र लस्य परस्मैपदमिति ब्रूयात् । लस्येत्यधिकारसूत्रे लस्येतिवत् । अतश्च—लः कर्मणि च भावे चाकर्मकेभ्य इतिवत् ल इति प्रथमान्तमेव । स्वरूपसल्लकारः क्वापि न प्राप्यते इति लकारस्थानिकादेशेषु लक्षणा कृताऽस्ति । अतश्च लकारनिष्ठस्थानितानिरूपितादेशतावन्तः प्रत्ययाः परस्मैपद-

संज्ञाः स्युरिति सूत्रार्थः सम्पद्यते। न चैवं सिचोऽपि परस्मैपदसंज्ञा स्यात्, तस्यापि च्लेः स्थाने जायमानतया लकारस्थानिकत्वस्याक्षतत्वादिति वाच्यम्, लकारमात्रनिष्ठस्थानितानिरूपितादेशताश्रयाः परस्मैपदसंज्ञाः इत्यर्थकरणेनादोषात्। ननु तावताऽपि लटः स्थाने जायमानस्य शतृ प्रत्ययस्येयं संज्ञा न स्यादिति चेत्तर्हि—लकारात्प्राग्वर्णवृत्तिधर्मानवच्छिन्नलत्वावच्छिन्नस्थानितानिरूपितादेशतावन्तः परस्मैपदसंज्ञाः स्युरित्यर्थेन शतुः संग्रहो भविष्यति। च्लेः स्थाने जातस्य सिचस्तु व्यावृत्तिरपि सुलभा भविष्यति, लकारात्प्राक् चकारस्यापि तत्र स्थानित्वात्क्रान्तत्वात् तत्र स्थानितायाः चत्व-लत्व-इत्वेति धर्मत्रितयावच्छिन्नत्वात्।

प्रकृते तु—तङानावात्मनेपदमित्यत्र तङ्प्रत्याहारे शानच् कानचोश्चोक्तलत्वावच्छिन्नस्थानितायाः सत्वेन जायत एव लः परस्मैपदमिति परस्मैपदसंज्ञायाः प्रसक्तिः। अतश्च परस्मैपदसंज्ञाया अपवादत्वमात्मनेपदसंज्ञायां सम्यगेवास्ति।

## [ अनुर्लक्षणे—अष्टा० १।४।८४ ]

लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यात्। गत्युपसर्गसंज्ञापवादः। इदमपवादसूत्रम्। अत्र कर्मप्रवचनीयाः इत्यस्याधिकार आयाति, लक्षण इति विषयसप्तमी, द्योतकतारूपा विषयता चाऽत्र ग्राह्या। द्योतकता च नित्यमेव द्योत्यत्वांशे साकांक्षास्तीति कृत्वा द्योत्यद्योतकभावसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणताया लाभो भवति। कर्मप्रवचनीया इति महासंज्ञाकरणेन योगार्थस्य लाभः। तथाहि कर्म क्रियां प्रोक्तवन्त इति कर्मप्रवचनीयाः क्रियामुक्त्वा इदानीं क्रियानिरूपितं सम्बन्धं द्योतयन्तीति भावः। लक्षणपदं भावनिर्देशमहिम्ना लक्षणत्वपरम्। लक्षणत्वञ्च लक्ष्यत्वे नित्यसापेक्षमिति कृत्वा लक्ष्यलक्षणभावसम्बन्धनिष्ठा या द्योत्यद्योतकभाव सम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतानिरूपकोऽनुशब्दः कर्मप्रवचनीयपदप्रयोज्यबोधीयविषयतावान् स्यादिति सूत्रार्थः सम्पद्यते। फलितार्थदृष्ट्या उक्तं कौमुद्याम्—लक्षणे द्योत्येऽनुरुक्तसंज्ञः स्यादिति। अस्योद्देश्यतावच्छेदकम्—क्रियाप्रतियोगिक, लक्ष्यलक्षणभावसम्बन्धिनिष्ठद्योत्यत्वनिरूपितद्योतकत्वविशिष्टमनुशब्दत्वम्। इदं च व्याप्यम् अदसीयमुत्सर्गसूत्रम्—उपसर्गाः क्रियायोगे इत्यादिपूर्वमेवोक्तम्। तदीयमुद्देश्यताऽवच्छेदकं रूपम्—क्रियासम्बन्धविशिष्टप्राधान्यतमत्वम्। अतश्चास्याधिकदेशवृत्तितयाव्यापकत्वम्—इति द्वयोर्व्याप्यव्यापकभावे उत्सर्गापवादभावः सम्पन्नः।

## [ तिष्ठद्गुप्रभृतीनि च—अष्टा० २।१।१७ ]

एतानि निपात्यन्ते। स च निपातनात् सिद्धः समासोऽव्ययीभावसंज्ञको मन्तव्यः। विभाषितोऽयं विधिः अव्ययीभावसमासरूपः। तिष्ठन्ति गावो यस्मिन्

काले स तिष्ठद्गु दोहनकालः। आयतीगवम्। इह शत्रादेशः, पुंवद्भावविरहः समासान्तश्च निपात्यत इत्यादि। अत्र द्वयोरपि उदाहरणयोः प्रथमासमानाधिकरणे शत्रादेशस्यासम्भवात् शत्रादेशनिपातनं बोध्यम्। पुंवद्भावविरह-समासान्त इत्येतद्द्वयं तु द्वितीय एवोदाहरणे।

समासान्तश्चेत्यत्र चशब्देनाऽन्यपदार्थेऽव्ययीभाव उभयोरपि निपातनविषयतां भजते। अन्यथा बहुव्रीहिः प्रसज्येत। एवञ्च तस्यापवादोऽयमिति विभावनीयम्। तत्र कालविशेष एवाऽन्यपदार्थेऽयमव्ययीभावः, 'तिष्ठद्गु कालविशेषे' इति वार्तिकात्। तत्त्वबोधिनीटीकायाम्—तिष्ठद्गुरिति प्रतीकं धृत्वा गोस्त्रियोरिति ह्रस्व इति व्याख्यातम्। तत्र 'सः', 'दोहनकालः' इत्यनयोः पुँल्लिङ्गयोर्विशेष्यत्वाद् विशेषणेऽपि पुल्लिङ्गत्वमेवेति मन्यमानेन केनचित् विद्वन्मानिना सोधितं वर्तते। टीकाकर्त्तुरेष प्रमादो नास्ति। अतश्च, अव्ययीभावश्चेति सूत्रद्वयेनाव्ययत्वक्लीबत्वाभ्यां विभक्त्यभावह्रस्वत्वे निश्चिते 'तिष्ठद्गु' इति निर्विभक्तिक एव पाठो बोध्यः। अथात्रोत्सर्गापवादयोर्व्याप्यव्यापकभावो विचार्य्यते।

अत्र 'अनेकमन्यपदार्थे' इत्युत्सर्गसूत्रम्। तदीयोद्देश्यतावच्छेदको धर्मः — अन्यपदार्थनिरूपितवृत्तिविशिष्टानेकप्रथमान्ततदादित्वम्। अपवादशास्त्रम्—'तिष्ठद्गुप्रभृतीनि च'। तदीयोद्देश्यतावच्छेदको धर्मः — अन्यपदार्थविशेषनिरूपितपरिगणितप्रथमान्ततदादित्वम्, अयं व्याप्यो धर्मः। उत्सर्गसूत्रीयोद्देश्यतावच्छेदको धर्मश्च व्यापक इति व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचे कृते सति अत्राऽव्ययीभावविषये बहुव्रीहिसमासस्य प्रवृत्तिर्वारिता भवति।

## [ पारे मध्ये षष्ठ्या वा — अष्टा० २।१।१८ ]

पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते। एदन्तत्वं चानयोर्निपात्यते। पक्षे षष्ठीतत्पुरुषः। पारेगङ्गादानय, गङ्गापारात्। मध्येगङ्गात्, गङ्गामध्यात्।

महाविभाषया वाक्यमपि। गङ्गायाः पारात्, गङ्गाया मध्यात्। अत्र तत्त्वबोधिनीकारः 'निपात्यते' इति प्रतीकमादाय व्याचष्टे—यत्र सप्तम्यर्थो न सम्भवति, तदर्थमेकारान्तत्वनिपातनम्। सप्तम्यर्थसम्भवे तु 'तत्पुरुषे कृति बहुलम्' इति बहुलग्रहणाद् अलुकासिद्धेः, अतोऽत्र सप्तम्यर्थाभावसूचनाय पञ्चम्यन्तमुदाहरति—पारेगङ्गादिति। षष्ठीतत्पुरुषस्यापवादोऽयम्। तत्र 'षष्ठी' इत्युत्सर्गसूत्रम्। तदीयोद्देश्यतावच्छेदको धर्मः — षष्ठ्यन्ततदादिप्रतियोगिकसाहित्यविशिष्टसमर्थप्रातिपदिकप्रकृतिकसुबन्ततदादित्वम्। पारे मध्ये—इति त्वपवादसूत्रम्, तदीयोद्देश्यतावच्छेदको धर्मः — पारे-मध्ये इत्येतत्प्रतियोगिकसाहित्यविशिष्टसमर्थषष्ठ्यन्ततदादित्वम्।

अयं व्याप्यो धर्मः, एतद्धर्मावच्छिन्नातिरिक्तत्वेन षष्ठीसूत्रीयव्यापकोद्देश्यताऽवच्छेदकधर्मावच्छिन्ने संकोचेनैतद्विषये षष्ठीतत्पुरुषस्याप्रवृत्तिर्भवति। परन्तु सा विभाषिता, अत्र सूत्रे वाग्रहणात्।

यदि तु अपवादेऽव्ययीभावे महाविभाषया विकल्पिते, पक्षे तदुत्सर्गः षष्ठीतत्पुरुषः प्रवर्तते। तस्यापि विभाषाधिकारस्थत्वेन वैकल्पिकत्वात् पक्षे वाक्यमपि सिद्धयतीति सूत्रे वाग्रहणं व्यर्थमेवेति सन्दिह्यते। तदोच्यते—महाविभाषया एकार्थीभावस्य पाक्षिकत्वे विवक्षिते यदा एकार्थीभावस्तदा षष्ठीसमासं बाधित्वा नित्यमव्ययीभावे प्राप्ते पक्षे षष्ठीसमाससमावेशार्थमत्र वाग्रहणम्।

'व्यपेक्षासामर्थ्यमेके' इति पक्षे तु वृत्तावपि व्यपेक्षालक्षणमेव सामर्थ्यमिति वाक्यस्य नित्यं बाधे प्रसक्ते तया वृत्तिर्विकल्प्यते। तथा चाव्ययीभावे विकल्पिते पूर्वोक्तरीत्या पक्षे तत्पुरुषः, तस्यापि वैकल्पिकत्वाद् वाक्यमपि सिद्धयत्येव। तथापि यत्रोत्सर्गापवादौ महाविभाषया विकल्प्येते, तत्राऽपवादेन मुक्ते पुनरुत्सर्गो न प्रवर्तते, इति ज्ञापनायेदम्। तेन पूर्वं कायस्येत्येकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति। दक्षस्यापत्यं दाक्षिरित्यत्र अत इञा मुक्ते अण् न भवति किन्तु उभयत्र वाक्यमेवेति निष्कर्षः॥

## [ संख्या वंश्येन — अष्टा० २।१।१९ ]

वंशो द्विधा—विद्यया जन्मना च। तत्र भवो वंश्यः। तद्वाचिना सह संख्या वा समस्यते। द्वौ मुनी वंश्यौ द्विमुनि, व्याकरणस्य त्रिमुनि विद्यातद्वतोरभेदविवक्षया त्रिमुनि व्याकरणम्। एकविंशतिभारद्वाजम्। व्याकरणस्येति सम्बन्धे षष्ठी। स्वपदार्थप्राधान्येऽयं समासः। यदा त्वन्यपदार्थप्रधानविवक्षा त्रयो मुनयो वंश्या यस्येति तदा बहुव्रीहिरेव।

"त्रिमुनि व्याकरणम्" यद्यप्येतद् बहुव्रीहिणाऽप्युपपन्नं भवति तथापि विभक्त्यन्तरे रूपेऽपि विशेषोऽस्त्येव। वस्तुतस्तु 'लक्षणेनाभिप्रती आभिमुख्ये' (अष्टा० २।१।१४) इति सूत्रे आभिमुख्यग्रहणस्य फलम्—'अभ्यङ्का गावः' इत्यादावेतत्समासाभावरूपमुक्तमस्ति। अभिनवः अङ्को यासामिति विग्रहश्च दर्शितोऽस्ति तत्त्वबोधिन्याम्। अङ्को ह्यत्र भवति गवां लक्षणम्, आभिमुख्यं तु नास्ति। ननु उत्सर्गतोऽव्ययार्थप्राधान्य एवाऽव्ययीभावस्य स्वीकारात् कथमिह तत्प्राप्तिरिति चेदुच्यते — इह प्रकरणे बहुव्रीहिविषये भवत्यव्ययीभाव इति ज्ञापनार्थमस्य सार्थक्यम्।

तत्फलञ्च—"संख्या वंश्येन" इत्यनेन "द्विमुनि व्याकरणम्" इत्यादि सिद्धयति।

अतश्चेदमायातं यद् बहुव्रीहिविधायकम् "अनेकमन्यपदार्थे" इत्युत्सर्गसूत्रम्। "संख्या वंश्येन" इत्यपवादसूत्रम्। उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकं रूपं पूर्वं लिखितमेव। अपवादशास्त्रस्योद्देश्यतावच्छेदकं रूपम्—द्वौ मुनी वंश्यौ यस्य व्याकरणस्येत्येवमन्यपदार्थप्राधान्यविवक्षायामन्यपदार्थनिरूपितवृत्तिविशिष्टसंख्यावाचकप्रातिपदिकप्रकृतिकसुबन्ततदादिप्रतियोगिकसाहित्यविशिष्टसमर्थवंशवाचिप्रातिपदिकप्रकृतिकसुबन्ततदादित्वम्। एतच्चोत्सर्गशास्त्रीयोद्देश्यतावच्छेदकव्याप्यमस्त्येव। अतश्चैतद्रूपावच्छिन्नातिरिक्तत्वेनोत्सर्गशास्त्रीयतादृशरूपावच्छिन्ने संकोचः क्रियताम्। तेन बहुव्रीहिविषयेऽपि अयमव्ययीभावः। परन्तु ज्ञापकसिद्ध एवायं बाध्यबाधकभावः। नोत्सर्गापवादभावरूपोऽयम्। यतो हि–'द्वौ मुनी वंश्यौ' इति स्वपदार्थप्राधान्येऽप्यस्य प्रवृत्तिर्भवति। तत्र न बहुव्रीहिप्रसङ्गः, अपि तु कर्मधारयस्य।

यदि तु कर्मधारय–बहुव्रीहि–एतद्द्वयान्यतरत्वेन व्यापकता गृह्येत। अत्रापि अन्यतरत्वेनोद्देश्यतावच्छेदकद्वयस्य व्याप्यता गृह्येत, तदा उत्सर्गापवादभावः कथञ्चिद् वक्तुं शक्यः।

## [ नदीभिश्च — अष्टा० २।१।२० ]

नदीभिः सह संख्या प्राग्वत्। समाहारे चायमिष्यते। सप्तगङ्गम्, द्वियमुनम्। इति सिद्धान्तकौमुदी।

अत्र तत्त्वबोधिनी—स्वरूपस्य संज्ञायाश्च नेह ग्रहणम्, बहुवचननिर्देशात्, किन्त्वर्थस्य, न च तस्य समासः सम्भवति, अतस्तद्वाचिनामयं समासः, ते च न केवलं विशेषशब्दा एव, किन्तु सामान्यशब्दा अपि, तेन 'पञ्चनदम्', 'सप्तगोदावरम्' इति सिद्धम्। 'गोदावर्य्याश्च नद्याश्च' इति वक्ष्यमाणेन समासान्तोऽच्। चकारेण संख्येत्यनुकृष्यत इत्याह—'संख्या' इति। स्यादेतत्, पुरस्तादपवादन्यायेन 'पूर्वकालैक....' इत्यस्यैव इदं बाधकं स्यात्, ततश्चेकनदीत्यत्राऽव्ययीभावे तन्निबन्धनस्य 'नदीपौर्णमास्या ....' इति टचः प्रसङ्गः। समाहारे तु परत्वाद् द्विगुरेव स्यात् इत्यतः आह—समाहारे चायमिति। एवकारार्थश्चकारः। एवञ्च द्विगोरपवादोऽयं अव्ययीभाव इति फलितमिति।

अनेन विवरणेन स्फुटमायातं यद् द्विगोरपवादोऽयम्, न तु 'पूर्वकालैक....' इत्यस्य। समाहार एव प्रवृत्तिस्वीकारात्, तत्र च द्विगोरेव प्रसङ्गात्। अस्तु द्विगोरुद्देश्यतावच्छेदकधर्मस्य स्वरूपं विचार्य्यते। स चायं समासः— 'तद्धितार्थोत्तरपदसमाहारे च' इति सूत्रेण संख्याशब्दपूर्वपदकतया विधीयमानः 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञां लभते। एवञ्च तद्धितार्थे विषये उत्तरपदे परतः समाहारे च वाच्ये

समर्थसमानाधिकरणवाचकशब्दप्रकृतिकसुबन्ततदादिप्रतियोगिकसाहित्यविशिष्टसंख्यावाचकशब्दप्रकृतिकसुबन्ततदादित्वम्—उद्देश्यतावच्छेदकरूपं द्विगुसमासस्य।

'नदीभिश्च' इत्यपवादसूत्रम्, तदीयोद्देश्यतावच्छेदकरूपम्—नद्यर्थवाचिप्रातिपदिकप्रकृतिकसुबन्ततदादिप्रतियोगिकसाहित्यविशिष्टसमर्थसंख्यावाचिशब्दप्रकृतिकसुबन्ततदादित्वं सम्पद्यते। एतच्च व्याप्यम्, द्विगुसमासीयोद्देश्यतावच्छेदकम् पूर्वमुक्तम्, तच्च व्यापकम्। एवञ्च व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचेन सप्तगङ्गमित्यादावव्ययीभाव एव भवति। तेन सप्तगङ्गम्, द्वियमुनमित्यादिषु विभक्त्यन्तरूपेषु विशेषो भवति।

समाहारे चायमित्यत्र चकारोऽवधारणार्थकः। समाहार एवेत्यर्थः। तेन समाहारस्याविवक्षायां पूर्वकालैक···' इति समासे एकनदीतर इति सिद्ध्यति। अन्यथा समानाधिकरणतत्पुरुषं बाधित्वाऽव्ययीभावे नपुंसकह्रस्व आपद्येत।

'गोदावर्य्याश्च नद्याश्च संख्याया उत्तरे यदि' इत्यच् तु न भवति, भाष्यकृताऽनुक्तत्वात्।

## [ अन्य पदार्थे च संज्ञायाम् — अष्टा० २।१।२१ ]

अन्यपदार्थे विद्यमानं सुबन्तं नदीभिः सह नित्यं समस्यते संज्ञायाम्। विभाषाऽधिकारेऽपि वाक्येन संज्ञाऽनवगमादिह नित्यसमासः। उन्मत्तगङ्गं नाम देशः, लोहितगङ्गम्। अत्र तत्त्वबोधिनी—संज्ञाऽनवगमादिति—सम्यग् ज्ञायते इति संज्ञा, 'आतश्चोपसर्गे' इति कर्मणि अङ्। संज्ञिनो देशविशेषस्याऽनवगमादित्यर्थः। अन्यपदार्थानवगमादिति तु नोक्तम्, यस्येत्यादिपदान्तरसमभिव्याहारेणाऽन्यपदार्थप्रतीतेरिति। एवञ्चात्र बहुव्रीहौ प्राप्ते सत्यस्य प्रकृतिरपवादतया बोध्या।

अतश्च—'अनेकमन्यपदार्थे' इत्युत्सर्गसूत्रम्। तदीयोद्देश्यतावच्छेदको धर्मः—अन्यपदार्थनिरूपितवृत्तिविशिष्टानेकसमानाधिकरणप्रथमान्ततदादित्वम्। 'अन्यपदार्थे च संज्ञायाम्' इति सूत्रमपवादसूत्रम्, तदीयोद्देश्यतावच्छेदको धर्मः — अन्यपदार्थनिरूपितवृत्तिविशिष्टनद्यर्थवाचिशब्दप्रकृतिकसुबन्ततदादिप्रतियोगिकसाहित्यविशिष्टसमर्थसुबन्ततदादित्वम्।

अयञ्च धर्मो व्याप्यः। अनेकमित्युत्सर्गशास्त्रीयोद्देश्यतावच्छेदको धर्मो व्यापकोऽस्ति। अतश्चापवादशास्त्रीयव्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचेनैतद्विषये बहुव्रीहिर्निरस्तः। अन्यथा 'उन्मत्तगङ्गो देशः' इत्यादि प्रयोगः स्यात्।

## [ न निर्धारणे — अष्टा० २।२।१० ]

निर्धारणे या 'षष्ठी' सा न समस्यते। नृणां द्विजः श्रेष्ठः। अत्र 'षष्ठी' इति सूत्रेण 'नृणाम्' इत्यस्य द्विजशब्देन समासः प्राप्तः, अनेन निषिध्यते। अतश्चेदमपवाद-सूत्रमिति मन्तव्यम्। एतदीयोद्देश्यतावच्छेदकरूपम्—निर्धारणषष्ठ्यन्ततदाद्यनुयोगिक-साहित्यविशिष्टसमर्थप्रकृतिकसुबन्ततदादित्वम्। 'षष्ठी'-सूत्रमुत्सर्गसूत्रम्, तदीयोद्देश्य-तावच्छेदकं रूपम्—षष्ठ्यन्ततदाद्यनुयोगिकसाहित्यविशिष्टसमर्थप्रकृतिकसुबन्त-तदादित्वम्, एतद्रूपावच्छिन्ने निर्धारणषष्ठ्यन्ततदाद्यनुयोगिकसाहित्यविशिष्टसमर्थ-प्रकृतिकसुबन्ततदादित्वरूपावच्छिन्नातिरिक्तत्वेन सङ्कोचे कृते सति 'न निर्धारणे' इत्यस्य विषये षष्ठी इति सूत्रं न प्रवर्तते। तेन 'निर्द्विजः श्रेष्ठः' इति न भवति।

एवमेव प्रतिपदविधाना षष्ठी न समस्यते, 'पूरणगुणसुहितार्थसदव्ययतव्य-समानाधिकरणेन', 'क्तेन च पूजायाम्', 'अधिकरणवाचिना च', 'कर्मणि च', 'तृज-काभ्यां कर्त्तरि', 'कर्त्तरि च' इत्यादिनिषेधवचनानां षष्ठी-सूत्रापवादत्वं ज्ञेयम्। तत्र तत्रोद्देश्यतावच्छेदको धर्मो व्याप्यतया सङ्ग्राह्यः। षष्ठी-सूत्रीयस्तादृशो धर्मो व्यापक-त्वेन ग्राह्यः। पूर्ववत् सङ्कोचसरणिरुपास्या।

## [ पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे — अष्टा० २।२।१ ]

अवयविना सह पूर्वादयः समस्यन्ते, एकत्वसंख्याविशिष्टश्चेदवयवी। षष्ठी-समासापवादः। पूर्वं कायस्य पूर्वकायः। षष्ठीसमासे सति तु 'कायपूर्वः' इति प्रयोगः स्यात्। यद्यपि 'ऊर्ध्वकायः' इतिवत् 'पूर्वकायः' इत्याद्यपि कर्मधारयेनैव सिद्ध्यति, तथापि 'कायपूर्वः' इति प्रयोगस्य वारणाय तस्य सार्थक्यम्। अदसीयोद्देश्यतावच्छेदकं रूपम्—अवयविवाचकप्रातिपदिकप्रकृतिकसुबन्ततदादिप्रतियोगिकसाहित्यविशिष्ट-समर्थपूर्वादिप्रकृतिकसुबन्ततदादित्वम्। इदं रूपं व्याप्यम्।

उत्सर्गसूत्रं षष्ठी इति। तदीयोद्देश्यतावच्छेदकम्—समर्थप्रकृतिकसुबन्त-तदादिप्रतियोगिकसाहित्यविशिष्टषष्ठ्यन्ततदादित्वम्, एतच्च व्यापकम्। एवञ्च उक्तव्याप्यरूपावच्छिन्नातिरिक्तत्वेन प्रकृतव्यापकरूपावच्छिन्ने सङ्कोचेनैत-द्विषये षष्ठीसमासो न भवति। यद्यपि दृशि दृष्टो शब्दो दिक्शब्द इति व्याख्यानेन 'अन्यारादि'त्यनेन सम्प्रत्यदिग्वृत्तिनापि योगे पञ्चमी स्वीकृतेति षष्ठी दुर्लभा

तथापि 'तस्य परमाम्रेडितम्' इति लिङ्गाद् 'अवयववाचिदिक्शब्दयोगे पञ्चमी न' इति ज्ञापितत्वात् षष्ठ्येव भवतीति भावः।

भगवता भाष्यकृता तु कर्मधारयं स्वीकृत्य सूत्रमेतत् प्रत्याख्यातम्। एवञ्च 'पूर्वश्चासौ कायश्च' इति विगृह्य कर्मधारयेण साधितम्। अतश्च—'कायस्य पूर्वः' इति वाक्यमेव साधुतां भजते।

एवमेव—अर्धं नपुंसकमिति सूत्रस्याऽपि षष्ठीसमासापवादत्वं सुतरां सिद्धमस्ति।

## [ द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् — अष्टा० २।२।३ ]

एतान्येकदेशिना सह प्राग्वद् वा। द्वितीयं भिक्षाया द्वितीयभिक्षा। एकदेशिना किम्—द्वितीयं भिक्षाया भिक्षुकस्य। अन्यतरस्यां ग्रहणसामर्थ्यात् 'पूरणगुणे'ति निषेधं बाधित्वा पक्षे षष्ठीसमासः। भिक्षाद्वितीयम्। अत्र तत्त्वबोधिनी—षष्ठीसमासापवादोऽयं योग इति वृत्तिकृतोक्तमयुक्तमिति ध्वनयन्नाह—निषेधं बाधित्वेति। एवञ्चात्र षष्ठीसमासापवादता निराकृता।

## [ कालाः परिमाणिना — अष्टा० २।२।५ ]

परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते। मासो जातस्य यस्य स मासजातः। अत्र तत्त्वबोधिनी—मासजात इति। यद्यपि 'मासो जातो यस्य सः' इति विग्रहे बहुव्रीहिणाऽपीदं सिद्ध्यति, 'जातिकालसुखादिभ्यः परानिष्ठा वाच्या' इति वचनात्। न च स्वरे विशेषः, वा जाते, इत्यन्तोदात्तत्वस्याऽपि सिद्धेः। तथापि षष्ठीसमासापवादार्थमिदमारम्भणीयमेव। किञ्च मासो जातवतो यस्य स मासजातवानित्येतदर्थमपीदमारम्भणीयमिति दिक्।

अतश्च—'कालाः परिमाणिना' इत्यपवादसूत्रम्। तदीयोद्देश्यतावच्छेदकं परिच्छेद्यवाचिप्रकृतिकसुबन्ततदादित्वम्। इदं रूपं व्याप्यम्। 'षष्ठी' इति सूत्रन्तु उत्सर्गसूत्रम्, तदीयोद्देश्यतावच्छेदकं पूर्वमुक्तमेव। तच्च व्यापकम्। एवञ्चापवादशास्त्रीयोक्तव्याप्यरूपावच्छिन्नातिरिक्तत्वेन उत्सर्गशास्त्रीयोक्तव्यापकरूपावच्छिन्ने सङ्कोचे कृते सत्येतादृशविषये षष्ठीसमासो न प्रवर्तते। अन्यथा 'जातमास' इत्यनिष्टं प्रसज्येत।

## [ पापाणके कुत्सितैः — अष्टा० २।१।५४ ]

पूर्वसूत्रापवादः। पापनापितः, अणककुलालः। अत्र 'कुत्सितानि कुत्सनैः' इति पूर्वसूत्रेण कर्मधारयसमासः सिद्ध एव। किन्तु तेन समासे पापाणकयोः परनिपातः स्यात्, तस्मात् पूर्वनिपातनियमार्थमिदं सूत्रमित्यभिप्रेत्योच्यते—पूर्वसूत्रापवाद इति।

अस्योद्देश्यतावच्छेदकं रूपम्—पाप-अणक-एतदन्यतरप्रकृतिकसुबन्ततदादित्वम्—समर्थसमानाधिकरणकुत्स्यमानवाचिप्रातिपदिकप्रकृतिकसुबन्ततदादिप्रतियोगिकसाहित्यविशिष्टम्। वैशिष्ट्यं च स्वानियोगिवृत्तित्वसम्बन्धेन।

एतच्च व्याप्यं रूपम्। उत्सर्गशास्त्रम् 'कुत्सितानि कुत्सनैः' इति। तदीयोद्देश्यतावच्छेदकं रूपम् कुत्साकरणवाचिप्रकृतिकसुबन्ततदादिप्रतियोगिकसाहित्यविशिष्टसमर्थसमानाधिकरणकुत्स्यमानवाचिशब्दप्रकृतिकसुबन्ततदादित्वम्, इदञ्च व्यापकं रूपम्। यत्र यत्र 'पापाणके कुत्सितैः' इत्यस्योद्देश्यतावच्छेदकं रूपं तत्र तत्र 'कुत्सितानि कुत्सनैः' इत्यस्योद्देश्यतावच्छेदकमिति कृत्वा द्वयोर्धर्मयोर्व्याप्यव्यापकभावः सुस्थिरः। ततश्च व्याप्यधर्मावच्छिन्नातिरिक्तत्वेन व्यापकधर्मावच्छिन्ने सङ्कोचे कृते सति एतद्विषये पूर्वसूत्रस्य प्रवृत्तिर्न जाता। अतश्च 'पापनापित': इत्येव, न तु नापितपाप इति।

## [ न दधिपय-आदीनि — अष्टा० २।४।१४ ]

एतानि नैकवत्स्युः। दधिपयसी, इध्माबर्हिषी, निपातनाद् दीर्घः। ऋक्सामे वाङ्मनसे। अत्र तत्त्वबोधिनीकृतोच्यते—'दधिपयसी' इत्यत्र 'विभाषा वृक्षमृग–'इत्यत्र व्यञ्जनग्रहणाद् विकल्पित एकवद्भावः प्राप्तः। इह 'ब्रह्म-प्रजापती', 'शिववैश्रवणौ' इत्यादौ समाहारद्वन्द्वनिषेधमुखेन इतरेतरयोगद्वन्द्वोऽनेन व्यवस्थाप्यते। तत्साहचर्य्याद् दधिपयसी इत्यादावपि तथैव। तेन तत्र व्यञ्जनत्वप्रयुक्तविकल्पे निषिद्धेऽपि जातिलक्षणो नित्यमेकवद्भावोऽस्त्विति न शङ्कनीयम्। किञ्च नेह लक्षणविशेष आग्रहः। 'एतानि नेकवत्स्युः' इत्येकवद्भावमात्रस्य निषेधादिति।

एवञ्च—एकवद्भावविधायकानां समेषामुद्देश्यतावच्छेदकरूपमन्यतमत्वेन गृहीत्वा तद्रूपावच्छिन्ने दधिपय आदिगणपठितशब्दोद्देश्यकद्वन्द्वसमासत्वावच्छिन्नातिरिक्तत्वेन सङ्कोचे कृते सति एतद्विषय एकवद्भावस्य प्रसक्तिर्वारिता भवति।

## [ अधिकरणैतावत्वे च — अष्टा० २।४।१५ ]

द्रव्यसंख्यावगमे एकवद्वेति नियमो न स्यात्। दशदन्ताष्ठाः। अत्र तत्त्वबोधिनीकाराणामयमाशयः — समासार्थस्याश्रयोऽधिकरणं वर्तिपदार्थः। तस्यैतावत्वं परिगणननियमः, तस्मिन् गम्यमान इति व्याचष्टे। द्रव्यसंख्यावगम इति। नियमो न स्यादिति। न चेह प्राण्यङ्गत्वात् प्रा तस्य एकवचनमेवेति नियमस्य प्रतिषेधेऽपि 'चार्थे द्वन्द्वः' इति समाहारद्वन्द्वः स्यादिति वाच्यम्, 'सविशेषणानां वृत्तिर्न' इत्यभ्युपगमेन समाहारद्वन्द्वस्य प्राप्त्यभावात्।

न चोक्तन्यायेनेतरेतरयोगद्वन्द्वोऽपि न स्यादिति वाच्यम्, 'सामान्याप्रयोगे' इति लिङ्गात् प्रधानस्य सापेक्षत्वेऽपि तदभ्युपगमात्। उक्तं हि भाष्ये–'भवति वै प्रधानस्य सापेक्षस्यापि वृत्तिः' इति।

स्यादेतत्—समाहारद्वन्द्वस्यात्र प्राप्त्यभावे 'द्वन्द्वश्च प्राणितूर्य·····' इति नियमाप्रवृत्त्या इतरेतरयोगद्वन्द्वो निर्बाध एवेति सूत्रमिदमकिञ्चित्करमिति चेत्, अत्राहुः — नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे 'द्वन्द्वश्च प्राणितूर्य·····'इति सूत्रं केवलमितरेतरयोगद्वन्द्वनिषेधपरम्। तथा चेतरेतरयोगनिषेधस्य निषेधद्वारा इतरेतरयोगप्रापणार्थमिदमिति। एवञ्च निषेधमुखप्रवृत्तिपक्षस्य ज्ञापनमिदमिति फलितमिति दिक्।

[ क्रमशः ]

# रसविमर्शः

प्रो० पी० रामचन्द्रुडुः

आचार्यचरः, संस्कृतविभागस्य

उस्मानिया-विश्वविद्यालये

❀❀❀

## रसध्वनिः, पण्डितराजाभिमतं रसस्वरूपम्, ध्वनिसिद्धान्तश्च

आलङ्कारिकैः प्रतिपादितेषु काव्यसम्बद्धेषु विषयेषु रसोऽतीवोन्नतं प्रधानं च स्थानम्र अलङ्करोति। रसस्यास्य न केवलं भारतीयसाहित्ये विश्वस्मिन्नपि विश्वसाहित्ये, सर्वासु च संगीत-चित्रलेखन-मूर्तिनिर्मित्याद्यासु ललितकलासु अकुण्ठिता प्रवृत्तिरिति निःसंशयं निरूपयितुं शक्यते यदि विमृश्यते निष्पक्षपातया बुद्धया। रसप्रतिपादकं भरतस्य **"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः"** इति सूत्रं बहुभिर्बहुधा व्याख्यायि विपश्चिद्भिः। ध्वनिसिद्धान्तपोषकोऽभिनवगुप्तः सूत्रस्यास्य प्राक्तनैः कृता व्याख्या व्युदस्य स्वमतं प्राचीकटद् अभिनवभारत्यां लोचने च।

अभिनवभारत्यां पूर्वोक्तसूत्रव्याख्याप्रसङ्गे तेनेत्थं न्यरूपि रसस्वरूपम्— "तत्र लोकव्यवहारे कार्यकारणसहचारा(र्या)त्मकलिङ्गदर्शने स्थाय्यात्मपरचित्तवृत्त्यनुमानाभ्यासपाटवादधुना तैरेवोद्यानकटाक्षवीक्षादिभिर्लौकिकीं कारणतादिभुवम् अतिक्रान्तैर्विभावनानुभावनासमुपरञ्जकत्वमात्रप्राणैः, अत एवालौकिकविभावनादिव्यपदेशभाग्भिः, प्राच्यकारणादिरूपसंस्कारोपजीवनख्यापनाय विभावादिनामव्यपदेश्यैः.........गुणप्रधानतापर्यायेण सामाजिकधियि सम्यग्योगम्, सम्बन्धम्, ऐकाग्र्यं वा आसादितवद्भिः, अलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरतां नीतोऽर्थः, चर्व्यमाणैकसारः, न तु सिद्धस्वभावः, तात्कालिक एव न तु चर्वणातिरिक्तकालावलम्बी स्थायिवि( यिल )लक्षण एव रसः"[1]।

"अनुभावविभावावबोधनोत्तरमेव तन्मयीभवनयुक्त्या तद्विभावानुभावोचितचित्तवृत्तिवासनानुरञ्जितस्वसंविदानन्दचर्वणागोचरोऽर्थो रसात्मा स्फुरति"[2]।

---

१. ना० शा०, प्रथम-भागः, पृ० २८२ ; २. लोचनम्, पृ० १-४।

एवमभिनवगुप्तेन तत्तत्स्थानेषु प्रतिपादितं रसस्वरूपं किञ्चित् स्वाभिमताद्वैतवेदान्तफक्किकासमन्वयपूर्वकं रसगङ्गाधरेऽन्ववदद् जगन्नाथः पण्डितराजः —

"समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः, सहृदयहृदयं प्रविष्टैः, तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीत्वादिभिः, अलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैः, चन्द्रिकादिभिरुद्दीपनकारणैः, अश्रुपातादिभिः कार्यैः, चिन्तादिभिः सहकारिभिश्च सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिर्वर्तितानन्दांशावरणाज्ञानेन, अत एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः, तथा चाहुः —

व्यक्तः स तैर्विभावाद्यैः स्थायिभावो रसः स्मृतः" इति ।

व्यक्तो व्यक्तिविषयीकृतः । व्यक्तिश्च भग्नावरणा चित् । यथा हि शरावादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितान् पदार्थान् प्रकाशयति, स्वयं च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन् । अन्तःकरणधर्माणां साक्षिभास्यत्वाभ्युपगतेर्विभावादीनामपि स्वप्नतुरगादीनामिव रङ्गरजतादीनामिव साक्षिभास्यत्वम् अविरुद्धम्"[१] ।

ध्वनिप्रस्थानस्य स्थापयितुरानन्दवर्धनस्य कृतेर्ध्वन्यालोकस्य व्याख्यात्रा अभिनवगुप्तेन प्रतिपादितं रसस्वरूपम् आनन्दवर्धनोक्तयैव विधया भवेदिति प्रायो वयं चिन्तयामः ; परन्तु सूक्ष्मेक्षिकया परिशील्यमाने आनन्दवर्धनोक्तो रसध्वनिरन्यः, अभिनवोक्तश्चान्य इति प्रतिभाति । तथा हि —आनन्दवर्धनो वस्तुध्वनिः, अलङ्कारध्वनिः, रसध्वनिश्चेति त्रैविध्यं ध्वनेरङ्गीकृत्य तान् भेदान् सोदाहरणं न्यरूपयत् । तत्र वस्तुध्वनेरुदाहरणतया—

"भ्रमधार्मिकविस्रब्धः स शुनकोऽद्य मारितस्तेन ।
गोदावरीनदीकूललतागहनवासिना दृप्तसिंहेन" ॥

इत्यादयः श्लोकाः प्रदर्शिताः, एतच्छ्लोकश्रवणसमनन्तरमेव विदितवाच्यार्थः, प्रकरणाद्यभिज्ञश्च सहृदयः "मा भ्रमीः" इत्यादिकम् अर्थान्तरमपि जानाति, यदेवोच्यते वस्तुध्वनिरिति । अत्र—"चतुरोऽयं कविः, कविनिबद्धो वक्ता, वक्त्री वा वाच्यार्थाद् भिन्नम् अर्थान्तरमपि प्रतिपिपादयिषति भङ्ग्यन्तरेण" इति ज्ञात्वाऽसौ सहृदयश्चमत्कारभरितान्तरङ्गो भवति । एवमेवालङ्कारध्वन्युदाहरणतया प्रदर्शितेषु—

१. र० ग०, पृ० २५-२६ ।

"वीराणां रमते घुसृणारुणे न तथा प्रियास्तनोत्सङ्गे ।
दृष्टी रिपुगजकुम्भस्थले यथा बहलसिन्दूरे"[१] ॥

इत्यादिषु श्लोकेष्वपि प्रथमं प्रतिपन्नवाच्यार्थः सहृदयः प्रतीयमानमलङ्कारमपि प्रत्यभिज्ञाय—'अहो ! निपुणोऽयं कविः । अत्रालङ्कारं वाच्यतया अनुपनिबध्य रुचिरया भङ्ग्या त प्रतीतिपथगोचरं करोति' इति क्षणं चमत्कृतिभरितान्तरङ्गोऽग्रतः प्रसरति पठने । एतावदेव खलु विवक्षितम् आनन्दवर्धनेन सोदाहरणं वस्त्वलङ्कारध्वनी लक्षयता । रसध्वनिविषयेऽपीयमेव रीतिरभिप्रेता आनन्दवर्धनस्य । गृहीतविभावादिप्रतिपादकवाच्यार्थं पठित्वा "कविरयं तत्तन्नायकादिषु स्थितान् रत्यादिभावान्, य एव काव्यादिगतत्वाद् रसशब्दवाच्याः, व्यञ्जयितुम् उद्युङ्क्ते" इत्यवगच्छति । तादृशरसप्रत्यभिज्ञानानन्तरं कथं कस्यानुभूतिः, इत्यन्यो विषयः । वस्तुध्वन्यलङ्कारध्वन्योरपि अस्त्येव चमत्कारहेतुता । कुतोऽयं भवति चमत्कारः ? विवक्षितस्यार्थस्य व्यञ्जने प्रदर्शितं कविकौशलम्, अर्थगता रमणीयता, विशेषतश्च श्रोतुः सरसहृदयता काव्यवासनावासितान्तःकरणतारूपा अत्र हेतुरिति वक्तव्यम्, अत एव लौकिकव्यवहारैकप्रवणः जडमतिर्वा—"साक्षादेव वक्तुं शक्यते किल, किमनया द्राविडप्राणायामरीत्या वक्रः पन्था अनुस्रियते ?" इति वदन् न कमपि चमत्कारलेशम् अनुभवति । सर्वेऽपि रत्यादयो भावाः सामाजिकस्य पठितुर्वा मनसि निलीना अनुद्बुद्धा वर्तन्ते, अन्यत्र तादृशभावग्रहणसमनन्तरमेव त उद्बुद्धा भवन्ति । तादृश एव किलोच्यते 'सहृदयः', 'सवासनः', 'हृदयसंवादवान्' चेति । तदा चायं भावोद्रेकेण अपूर्वां काञ्चिन्मानसीं दशाम् अनुभवति । तत्प्राप्तौ प्रक्रिया का ? किं सा स्थितिः आनन्दमयी, सुखदुःखमिश्रा, मोहरूपा, सुखदुःखादिरूपेण अनिर्वचनीया इत्यादि तु स्वस्वमतानुसारेण प्रतिपाद्यतां तैस्तैर्विमर्शकैः; परन्तु विभावादिगतो व्यञ्जनाव्यापारो नायकादिगतरसव्यञ्जनयैवोपक्षीयते । न खल्वयं तत्तन्नायकादिसम्बद्धत्वेनोपनिषद्धानां विभावादीनां व्यञ्जनाव्यापारः सामाजिकादिगतान् भावान् व्यञ्जयितुं पारयति । अतो नायकादिगतस्य रसस्य ध्वनिरेव आनन्दवर्धनाभिमतो रसध्वनिरिति प्रतीयते, अनुमानादिना प्रतीतिविषयीकृताद् रामादिगतरसात् सहृदयस्य कथं वा आनन्द इति यथा लोल्लट-श्रीशङ्कुकादिभिर्नैव निरूपितं तथैवानन्दवर्धनेनापि न किमप्युक्तम् । वस्तुध्वन्यादिषु या प्रक्रिया तत्सदृशी अत्रापि गृह्यताम् इत्येव भवेत्तस्याशयः । प्रायो ध्वनिविरोधिनः सर्वेऽप्याचार्याः, महिमभट्ट-कुन्तक-भोज-धनञ्जयादयः काव्ये रसस्य प्राधान्यम् अङ्गीकुर्वन्ति । यदि सामाजिकादिगतस्यापि रसस्य ध्वन्यमानत्वमेवेत्याग्रहः, तदा तैः (ध्वनेरनङ्गीकर्तृभिः) अङ्गीकृतस्य रसस्य का वा स्थितिर्भवेत् ?

---

१. ध्व० २।२७।४ ।

वस्तुतोऽभिनवगुप्ताङ्गीकृतस्यापि रसस्य नैव व्यञ्जनाविषयत्वमिति उपपादयिष्यते ।

तैस्तैर्विभावादिभिर्व्यज्यमानो रामादिगतः स्थायिभाव एव रसतयाऽभिमत आनन्दवर्धनस्येति इतोऽपि ज्ञायते । तथा हि—**"निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः"**[1] इति कालिदासस्योक्तिमनुवदत्यानन्दवर्धनः —**"तथा चादिकवेः पुरा । क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः"**[2] इति । "मुनेर्मुखादप्रयत्नं निर्गतः श्लोकः 'मा निषाद' इत्यादिर्मुनिगतं शोकं सूचयति" इत्येव किल कालिदासस्याशयः । तामेव कालिदासोक्तिमुदाहरता आनन्दवर्धनेनापि—"मा निषादेत्यादिना वाल्मीकिगतः शोक एव व्यज्यते, स एव करुणरसः"इत्यङ्गीकृतमिति स्पष्टं प्रतीयते । "तथा चादिकवेर्वाल्मीकेर्निहतसहचरीविरहकातरक्रौञ्चाक्रन्दजनितः शोक एव श्लोकतया परिणतः । शोको हि करुणस्थायिभावः"[3] इति वदता आनन्दवर्धनेन, "यस्य शोकः" इति कालिदासेन च मुनेः शोक इति स्पष्टतया प्रतिपादितम् । रामायणगतस्य तस्य प्रकरणस्य परिशीलनेऽपि मुनेः शोकाविष्टता स्पष्टीभवति । एवं स्थिते आनन्दवर्धनोक्तिमिमां स्वमतानुसारेण व्याख्यातुं प्रवृत्तेनाभिनवगुप्तेन—"न तु मुनेः शोक इति मन्तव्यम्" इत्यादि यदुक्तं तत् प्रौढिवादमात्रमेव । अतश्च "रामादिगता एव रत्यादयो व्यञ्जनया व्यज्यन्ते । तेषामेव काव्यादिगतत्वाद् रसध्वनिरिति नाम" इत्यानन्दवर्धनोऽभिप्रैतीति प्रतीयते ।

सर्वेषां रसानामेकया विधया सुखरूपताऽपि नाङ्गीक्रियते आनन्दवर्धनेन—**"शृङ्गार एव मधुरः परः प्रह्लादनो रसः"**[4] इति वदता । मधुरतायां चायम् आह्लादजनकतां द्रुतिकारणतां चोभयमप्यङ्गीकरोतीव । आह्लादजनकता केवलं शृङ्गारविषयैव, द्रुतिकारणता तु करुणेऽपीति सूचयति—

"शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् ।
माधुर्यमार्द्रतां याति यतस्तत्राधिकं मनः[5]" ॥

इति वदन् । अन्यथा "शृङ्गार एव मधुरः परः प्रह्लादनो रसः", "शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत्" इत्यनयोर्वाक्ययोः परस्परं विरोधः स्यात् । अभिनवस्तु स्वमतानुगुण्येन यथाकथञ्चिद् विरोधं परिहर्तुं प्रायतत । एवमानन्दवर्धनो रामादिगतस्यैव रसस्य रसध्वनिताम्, सुखादिरूपताम् अङ्गीकरोति, अभिनवस्तु सामाजिकगतस्य रसस्य रसध्वनिताम्, रसमात्रस्य सुखैकरूपतां चाङ्गीकरोति ।

---

१. रघु० १४।७०; २. ध्व० १।५; ३. तत्रैव—१।५ ।
४. तत्रैव—२।७; ५. तत्रैव—२।८ ।

अत एव प्रतापरुद्रीये विश्वनाथो रत्नापणाख्यतद्व्याख्यानिर्माता च कुमारस्वामी लौकिकरसः, अलौकिकरसश्चेति रसस्य द्वैविध्यम्, रामादिगतस्य लौकिकत्वम्, सामाजिकगतस्य चालौकिकत्वं प्रतिपादयाम्बभूवतुः — "तत्र रसो नायकाश्रय एव। यदि परं निपुणनटचेष्टया, तथाविधकाव्यश्रवणबलेन च सामाजिकैः साक्षाद् भाव्यते तदा परगतस्यापि रसस्य सम्यग् भावनया परत्र निरतिशयानन्दजननमविरुद्धम्। अथवा मालत्यादिशब्देभ्यो योषिन्मात्रप्रतीतौ रावणादिशब्देभ्यः शत्रुमात्रप्रतीतौ च स्मृत्यारूढेन तत्तद्योषिद्विशेषेण अनुकार्येण सामाजिकाश्रयत्वमपि न विरुद्धम्"[1]। "अयं च रसो लौकिकालौकिकभेदेन द्विविधः। तत्राद्यस्याश्रयमाह—अत्रेति। रसो लौकिको नायकोऽनुकार्यो रामादिराश्रयो यस्य स तथोक्तः। अलौकिकरसस्याश्रयमाह—अथवेति[2]। लौकिकाद्रसात् सामाजिकस्य आनन्दः कथं भवतीत्येतत् कुमारस्वामी एवं समर्थयति—"तैर्यदि परं साक्षाद्भाव्यते केवलं स्वसम्बन्धित्वेनानुसन्धीयते चेदित्यर्थः, तर्हि पुत्राद्यानन्ददर्शने पित्रादिवद् अत्राप्यानन्द उदेतीति भावः। अत एवोक्तं भावप्रकाशे—

"यस्तुष्टौ तुष्टिमाप्नोति शोके शोकमुपैति च।
क्रोधे क्रुद्धो भये भीरुः स श्रेष्ठः प्रेक्षकः स्मृतः"[3] ॥ इति।

तदेवम् आनन्दवर्धनाभिमतो व्यज्यमानो रसो रामादिगतः, भट्टनायकाभिनवगुप्तादिप्रतिपादितोऽनुभूयमानः, अथवा अनुभूतिरूपो रसः सामाजिकाश्रय इत्यनयोः स्पष्टो भेदः।

रसयोरनयोर्विषये भ्रान्तेर्वारणाय पण्डितराजः प्रायः सर्वत्रापि व्यज्यमानं नायकादिगतं रसं 'स्थायिभावः' इति, अनुभूतिरूपं सामाजिकगतं च रसं 'रसः' इति निर्दिशति। यथा विप्रलम्भशृङ्गारस्योदाहरणतया प्रदर्शितस्य 'वाचो माङ्गलिकीः" इत्यादिश्लोकस्य विवृतौ—"अत्राप्यालम्बनस्य नायकस्य संयोगाद्रतिरभिव्यज्यमाना विप्रलम्भरसव्यपदेशहेतुः"[4] इति।

अभिनवगुप्तोऽपि अभिजानात्येवानयोर्व्यज्यमानानुभूयमानयो रसयोर्भेदम्, ययोः प्रथमस्तेनापि स्थायिभावनाम्ना निर्दिश्यते। ध्वन्यालोकगतस्य मङ्गलश्लोकस्य व्याख्यायाम्—"नित्योद्योगिनश्च भगवतोऽसम्मोहाध्यवसाययोगित्वेनोत्साहप्रतीतेर्वीररसो ध्वन्यते" इति लिखन्नसौ उत्साहस्यैव प्रतीयमानताम् ( व्यज्यमानताम् ) अङ्गीकरोति। अत एव 'उत्साहप्रतीतेः' इत्यस्य—'स्वेच्छाकेसरिणः', 'मधुरिपोः',

---

१. प्र० रु० पृ० २०५;   २. रत्नापण, पृ० २०३।

३. तत्रैव— पृ० २०३;   ४. र० गं०, पृ० ४२।

'प्रपन्नार्तिच्छिदः' इति पदैर्हिरण्यकशिपुप्रभृतिनिबर्हणादिविषयकोत्साहस्य व्यञ्जनया सहृदयानां 'प्रतीतेः' इति विवरणं कृतं बालप्रियायाम्। एवञ्च पूर्वोक्त-वाक्यगतस्य 'प्रतीतेः' इत्यस्य 'व्यञ्जनात्' इति, 'ध्वन्यते' इत्यस्य 'आस्वाद्यते' इति चार्थो ग्रहीतव्यः। उत्साहस्यैव ध्वनिविषयत्वात्, सामाजिकगतस्य रसस्य तदभावात्।

तदेवं सम्यग्विचार्यमाणे इदं स्पष्टीभवति यद् आनन्दवर्धनपर्यन्तं सर्वैरप्या-चार्यैर्नायिकादिगतत्वेनेव रसस्य निरूपणमकारि। तेन च रसेन सहृदयेषु कथं वा आनन्द उदियादिति काचित् प्रक्रिया तत्प्रथमतया भट्टनायकेन प्रदर्शिता, यामेव च अन्वसरदभिनवः किञ्चिन्नाममात्रपरिवर्तनेन।

"अभिधा भावना चैव तद्भोगीकृतिरेव च"।

इति काव्यशब्देषु अभिधाव्यतिरिक्तं भावना भुक्तिश्चेति व्यापारद्वयमङ्गी-कुर्वता भट्टनायकेन साधारणीकरणरूपा काचिदसाधारणी प्रक्रिया तत्प्रथमतया प्रतिपादिता, यया सहृदयः स्वसंविद्विश्रान्तिरूपमानन्दमनुभवतीति सिद्धान्तितम्। भट्टनायकेनायं भावनाख्यो व्यापारः काव्यशब्दे फलबलकल्पितः[1]।

विना हि सहृदयगतां भावनां साधारणीकरणं नोपपद्यते विभावादीनाम्, एवं स्थिते स्वयमप्यङ्गीकृतया भावनयैव संविद्विश्रान्तिरूपस्य वा आनन्दावरण-भङ्गरूपस्य वा रसस्य निष्पत्तेः सम्भवे कुतो वा अभिनवोऽत्र व्यञ्जनां प्रवेशयतीति न जानीमः। यतः, यथा पूर्वमेव सूचितम्, सोऽयं व्यञ्जनाव्यापारः स्वरूपतो नितरां भिन्नो वस्तुध्वन्यलङ्कारध्वनिनायकादिगतरसध्वनिसम्बद्धाद् व्यञ्जनाव्यापारात्। एतद्व्यञ्जनासाध्या हि व्यक्तिः, येव रसध्वनिरित्युच्यते अभिनवगुप्तेन आवरण-भङ्गरूपा आत्मस्वरूपाभिव्यक्तिः। अत एव किलोक्तं पण्डितराजेन—"मतस्यैतस्य पूर्वस्मान्मताद् भावफलत्वव्यापारान्तरस्वीकार एव विशेषः। भोगस्तु व्यक्तिः। भोग-कृत्त्वं तु व्यञ्जनादविशिष्टम्[2]" इति। वस्तुतः पश्चात्तनेन अभिनवेनैव पदानां परिवृत्तिः कृता। अतः पण्डितराजेनात्र—**"भोगस्तु व्यक्तिः, भोगकृत्त्वं तु व्यञ्जनाद-विशिष्टम्"** इत्यस्य स्थाने—**"व्यक्तिस्तु भोग एव, व्यञ्जनं तु भोगकृत्त्वाद-विशिष्टम्"** इति वक्तव्यम्। अतो व्यञ्जनाव्यापारेण व्यज्यमानो रसो नायकादि-गत एव, तस्यैव च आनन्दवर्धनसम्मता रसध्वनिता इति युक्तमुत्पश्यामः।

---

१. दृश्यताम् अभिनवमतानुवादप्रसङ्गे पण्डितराजोक्तं "तदीयसहृदयतासहकृतेन भावना-विशेषमहिम्ना" इत्यादि।

२. र० गं०, प्र० उ०।

रसस्य संविद्विश्रान्तिरूपतामभ्युपगच्छता भट्टनायकेन सर्वेषामपि रसानामानन्दरूपता सूचिता। अज्ञानावरणभङ्गेनानन्दांशस्योद्बुद्धिमङ्गीकुर्वाणोऽभिनवगुप्तोऽपि तामेव रीतिमनुरुणद्धि। अत्र प्रधानतया तेनाभ्युपगत आध्यात्मिकसिद्धान्त एव हेतुः, यो हि आधुनिकस्य रजनीशस्य मतेन किञ्चित्साम्यं वहति।

काश्मीरशैवमतसम्बद्धं कौलसम्प्रदायमनुरुन्धानस्य अभिनवगुप्तस्य मते परां कोटिमधिरूढो निरन्तरायो भावावेश एव आत्मविश्रान्तिं जनयति। किञ्चित्कालिकत्व-चिरस्थायित्वभेदेन, सान्तरायत्व-निरन्तरायत्वभेदेन च तादृशात्मविश्रान्तिरेव महत ऐहिकानन्दस्य मोक्षानन्दस्य च हेतुतां भजत इति तत्र तत्राभिनवगुप्तस्योक्तीनां परिशीलनेन ज्ञायते। ऐन्द्रियिकी सुखानुभूतिर्नैव हेया यैव स्वात्मविश्रान्तिं ददातीति प्रतिपादितं तेन भगवद्गीताव्याख्याने —

"तत्र येषां मोक्षप्राधान्यं तैरेव विषयाः सेव्या इत्युच्यते—'देवान् भावयतानेन'........देवाः क्रीडाशीलाः इन्द्रियवृत्तयः। करणेश्वर्यो देवता रहस्यशास्त्रप्रसिद्धाः। ता अनेन कर्मणा तर्पयत, यथासम्भवं विषयान् भक्षयतेत्यर्थः, तृप्ताश्च सत्यस्ता वो युष्मान् आत्मन एव स्वरूपमात्रोचितापवर्गान् भावयन्तु, स्वात्मस्थितियोग्यत्वात्। एवमनारतं व्युत्थानसमाधिसमयपरम्परायाम् इन्द्रियतर्पण-तदात्मसद्भावलक्षणे परस्परभावने सति शीघ्रमेव परमं श्रेयः परस्परभेदविगलनलक्षणं ब्रह्म प्राप्स्यथ"[1]।

"न केवलमित्थमपवर्गे यावत् सिद्धिलाभेऽपि अयं मार्ग इत्याह—"इष्टान् भावान् हि वो देवाः" .......तेषां विषयाणां स्मृतिसङ्कल्पध्यानादिना भावा विषया इन्द्रियैरेव दत्ताः। यदि तेषामेवोपभोगाय विषया न दीयन्ते तर्हि स्तेनत्वं चौर्यं स्यात्, छद्मचारित्वात्....... अतोऽयं वाक्यार्थः—यः सुखोपायं सिद्धिम् अपवर्गं वा प्रेप्सति तेन इन्द्रियकौतुकनिवृत्तिमात्रफलतयैव भोगा यथोपनतमासेव्याः" इति[2]।

".....इन्द्रियात्मकदेवगणतर्पणलक्षणयज्ञादवशिष्टम् अन्तःसारस्वात्मस्थित्यानन्दलक्षणविघसं येऽश्नन्ति, तत्रारूढा भवन्ति, तदुपादेयोपायतया तु विषयभोगं वाञ्छन्ति ते सर्वकिल्बिषैः शुभाशुभैर्मुच्यन्ते"[3]।

"इतरे ज्ञानपरिदीपितेषु फलदाहकेषु इन्द्रियाग्निषु विषयानर्पयन्ति। भेदवासनानिरासायैव भोगानभिलषन्ति इत्युपनिषत्"। तथा च मयैव लघ्व्यां प्रक्रियायामुक्तम् —

---

१. भ० गी० ३।२ ;　　२. तत्रैव—३।१२ ;　　३. तत्रैव—३।१३ ।

"न भोग्यं व्यतिरिक्तं हि भोक्तुस्त्वत्तो विभाव्यते ।
एष एव हि भोगो यत् तादात्म्यं भोक्तृभोग्ययोः" ॥ इति ।

स्पन्देऽपि—

"भोक्तैव भोग्यभावेन सदा सर्वत्र संस्थितः"[१] ।

"...... ते च सर्वानिन्द्रियव्यापारान्, मानसान् ...... आत्मनो मनसः, संयमहेतौ योगनाम्नि ऐकाग्र्यवह्नौ समयग्ज्ञानपरिदीपिते पूरयितव्ये निवेशयन्ति । गृह्यमाणं विषयं सङ्कल्प्यमानं वा तदेकाग्रतयैव परित्यक्तान्यव्यापारया बुद्ध्या गृह्णन्तीति तात्पर्यम्" । तदुक्तम्—

"भावेऽव्यक्ते निरुद्धा चिद् नैव भावान्तरं व्रजेत् ।
तदा तन्मध्यभावेन विकल्पस्यापि भावना"[२] ॥

ईश्वरप्रत्यभिज्ञाविवृतौ अभिनवगुप्तेन प्रतिपादिताः केचिदंशा रसस्वरूपविषये तस्याभिमतं मतं सूचयन्ति । भोगान् भुञ्जानस्य भोगतादात्म्यापत्तिमय आनन्द एव चमत्कृतिः । येन केनचिदाहारेण उदरपूरणमात्रप्रवणाद् औदरिकाद् वैलक्षण्येन "इदमित्थम्" इति विमृशन् प्रमातृभावमेव प्रधानतया परामृशन् भुञ्जान इत्युच्यते । स चानन्द आत्मस्वरूपः । यतः स्वात्मनः परिपूर्णनिजस्वरूपप्रकाशनमेव परामर्शरूपम्, आनन्द इति चोच्यते ; परन्तु क्षुधाद्यातुराणाम् अन्नाद्यभिलाषविवशीकृतमतीनाम् आत्मपरामर्शस्यान्तरायान्तरितत्वात् तेषामनानन्दमयतैव भवति, यदा पुनस्तेषामन्नादिलाभेन क्षुधादिशान्तिस्तदा अन्नरिक्तजठरतारूपाया अपूर्णताया अपगमाद् अनुभूयमानेऽपि आत्मपरामर्शमये स्वानन्दे कान्तालिङ्गनादीनामन्येषामभिलाषाणामविनाशात् सोऽयमानन्दोऽपूर्ण एव । सर्वेषामपि वैषयिकानन्दानामेवमेवापूर्णता दृश्यते ; परन्तु तेषु सर्वेष्वप्यनुभूयमान आनन्दः स्वात्मानन्दांश एव ।

नाट्यकाव्यादिगतस्य वैषयिकानन्दविलक्षणस्य शृङ्गारादेर्निरन्तराया रसना प्रमातृताविश्रान्तिरेव । अत एव च सा परिपूर्णप्राया आनन्दरूपा च । एवञ्च वैषयिकभोगे वा अलौकिक्यां रसचर्वणायां वा अनुभूयमान आनन्दः स्वात्मानन्द एव । सान्तरायत्वनिरन्तरायत्वाभ्यां पुनरनयोरानन्दयोरपूर्णता-पूर्णप्रायतारूपो भेद इत्यभिनवगुप्तस्याशयः । विषयस्यास्य स्पष्टीकरणार्थं तस्यैव वाक्यान्युद्ध्रियन्ते—

"चमत्कृतिर्हि भुञ्जानस्य या क्रिया भोगसमापत्तिमय आनन्दः स उच्यते । ...... स्वरूपस्य, स्वात्मनः परिपूर्णनिजस्वभावप्रकाशनमेव परामर्शमयतां दधदानन्द इत्युच्यते । तथा देहादिसङ्कोचकलुषा परिपूर्णप्रत्यगात्माहंभावनिष्ठत्वेन शरीरस्य

४. भ० गी० ४।२९ । १. तत्रैव—४।२७ ।

रिक्ततया क्षुधातुरस्य व्यतिरिक्तान्नाभिलाषविवशीकृतमतेरात्मपरामर्शोऽयमेकघनवृत्त्या यतो न सम्भवति ततोऽयमनानन्दमय इवास्ते। सति आत्मपरामर्शमये स्वानन्दे यदा तु अन्नपरिपूर्णजठरता अस्य तदा तद्रिक्ततोद्रेकरूपा तावदपूर्णता विनष्टा। संस्काररूपतया तु तदानीं यदभिलषणीयं कान्तालिङ्गनादि परामर्शनीयं स्थितम्, यदाह गुरुः पतञ्जलिः —"न हि चैत्र एकस्यां स्त्रियां रक्त इति अन्यासु विरक्तः" इत्यादि, तद्योगादपूर्णोऽयमानन्द इति परमानन्दोऽयं न भवति। सांसारिकश्च सर्वोऽप्यानन्दो— "लाभे भाविवियोगभीरु....." इति "विषयो विषयान्तरार्थितां जनयन् वा जनयेत् कथं सुखम्" इति च न्यायेन व्यतिरिक्ताकाङ्क्षाविच्छेदमयता सर्वात्मना न स्वीकुरुत इति ततोऽप्यपूर्ण एव। यस्तु आनन्दांशस्तत्र स्वात्मपरामर्शरूपतेव प्रयोजिकेति। तत एवोक्तम्—

"त्रैलोक्येऽप्यत्र यो यावानानन्दः कश्चिदीक्ष्यते।
स बिन्दुर्यस्य तं वन्दे देवमानन्दरूपिणम्"[१] ॥

इति श्रीभट्टनारायणेन। तथा च "मधुरादौ रसे औदरिकाभ्यवहारवैलक्षण्येन प्रवृत्त इदमित्थमिति प्रमातरि विश्रामयन्, प्रमातृभागमेव प्रधानतया विमृशन् भुञ्जान इत्युच्यते। तत्रापि अत्यन्तमन्यथाभावमतिक्रम्य सुखमास्वाद्यते अर्जनादिसम्भाव्यमानविघ्नान्तरनिरासाद् वैषयिकानन्दविलक्षणशृङ्गारादौ नाट्यकाव्यादिविषये तत्र वीतविघ्नत्वादेव असौ रसना चर्वणा, निर्वृतिः, प्रतीतिः, प्रमातृताविश्रान्तिरेव, तत एव हृदयेन परामर्शलक्षणेन प्राधान्याद् व्यपदेश्या व्यवस्थितस्यापि प्रकाशभागस्य वेद्यविश्रान्तस्य अनादरणात् सहृदयता उच्यत इति निर्विघ्नाः स्वादरूपाश्च रसनास्तद्गोचरीकार्याश्चित्तवृत्तयो रसा नव इत्ययमर्थोऽभिनवभारत्यां नाट्यवेदविवृतौ वितत्य व्युत्पादितोऽस्माभिरिति तत्कुतूहली तामेव अवलोकयेत्"[२]।

"परब्रह्मास्वादो ब्रह्मचारित्वं चास्त्यस्य रसास्वादस्य"[३] इति वदता अभिनवगुप्तेन इतरवैषयिकानन्दापेक्षया रसानन्दस्य आधिक्यमेव प्रतिपिपादयिषितम्। वस्तुतो रसोऽपि (रसानन्दोऽपि) परमेश्वरविश्रान्त्यानन्दस्य बिन्दुमात्रमिति स्पष्टीकृतम्—

"सकलप्रमाणपरिनिश्चितदृष्टादृष्टविषयविशेषजं यत् सुखम्, यदपि वा लोकोत्तरं रसचर्वणात्मकं तत उभयतोऽपि परमेश्वरविश्रान्त्यानन्दः प्रकृष्यते।

---

१ स्त० चि० ६१।

२. ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, द्वितीयो भागः, पृ० १७७-१७९।

३. लोचनम्, पृ० ११०।

तदानन्दविपृण्मात्रावभासो हि रसास्वाद इत्युक्तं प्रागस्माभिः। लौकिकं तु सुखं ततोऽपि निकृष्टप्रायं बहुतरदुःखानुषङ्गादिति तात्पर्यम्"[1]।

किं सर्वेषां रसानामविशेषेण आनन्दरूपता इत्येतदद्य विचारयामः। जन्मिमात्रस्य मनसि विविधा भावा निलीना वर्तन्ते। तेषु च प्रधानतया नव भावाः प्रायः सर्वेषु मानवेषु आजन्मनो निगूढा भवन्तीति तेषामेव स्थायिभावत्वम् इति प्रतिपादितमभिनवगुप्तेन—

"स्थायित्वं चैतावतामेव, जात एव हि जन्तुरियतोभिः संविद्भिः परीतो भवति। तथा हि—"**दुःखसंश्लेषविद्वेषी सुखास्वादनतत्परः**" इति न्यायेन सर्वोऽपि रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानितया परमुपहसन्, अभीष्टवियोगसन्तप्तः, तद्धेतुषु क्रोधपरवशः, अशक्तौ ततो भीरुः, किञ्चिदर्जिजीषुरपि, अनुचितवस्तुविषयवैमुख्याक्रान्तः, किञ्चिदभीष्टतया अभिमन्यमानः, तत्तत् स्वपरकर्तव्यदर्शनसमुदितविस्मयः किञ्चिच्च जिहासुरेव जायते"[2] इत्यादिना।

तत्तद्भावोद्बोधकसामग्र्याः प्रत्युपस्थितौ च अन्तरङ्गे निलीना एव ते ते भावा उद्बुद्धा भवन्ति—सुन्दर्या युवत्याः सुन्दरस्य यूनो वा एकान्ते रम्ये देशे हठाद्दर्शने युवकगता युवतीगता वा रतिरुद्बुद्धा भवति, कस्यचन शत्रोर्दर्शने च क्रोधः। एवमेव चान्ये भावाः। ये पुनर्जितेन्द्रिया वशीकृतसकलमानसवृत्तयः, ये च वा पशुतुल्यप्रवृत्तयो नितरां परिमितभावसम्पदस्तेषु पुनर्निमित्तोपस्थितावपि न भवेदेव भावोद्बोधः। भवन् वा उद्बोधः केषाञ्चिदेव भावानां भवेत्। अत एवोक्तम्—

"येषां वल्लभया समं क्षणमिव स्फारा क्षपा क्षीयते
तेषां शीततरः शशी विरहिणामुल्केव सन्तापकृत्।
अस्माकं न तु वल्लभा न विरहस्तेनोभयभ्रंशिनाम्
इन्दू राजति दर्पणाकृतिरयं नोष्णो न वा शीतलः"[3] ॥ इति।

"सवासनानां सभ्यानां रसस्यानुभवो भवेत्।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः"[4] ॥ इति च।

रसास्वादविषय एतादृशा अपवादभूता इति ते न परिगण्यन्ते। "**शृङ्गार एव मधुरः**" (ध्व० २।७) इति कारिकाया व्याख्याने—"रतौ हि समस्तदेव-

---

१. लोचनम्, पृ० ५१०।
२. हिन्दी अभिनवभारती, पृ० ४८०।
३. काव्यमीमांसायामुदाहृतम्, ९।२।३।
४. साहित्यदर्पणे धर्मदत्तोक्तत्वेनोदाहृतम्, ३।८।

तिर्यङ्नरादिजातिष्वविच्छिन्नैव वासनास्ते इति न कश्चित्तत्र तादृग्यो न हृदयसंवादमयः। यतेरपि हि तच्चमत्कारोऽस्त्येव" इति विवृण्वता अभिनवगुप्तेन कीदृशं यतिं मनसिकृत्य तथा लिखितमिति न जानीमः।

नायकादिसम्बद्धत्वेनोपनिबद्धैः काव्यनाटकाद्युपनीतैर्विभावादिभिर्नायकादिगतानामेव रत्यादीनामुद्बोधो भवेत्, न पुनः सामाजिकादिगतानाम्। सामाजिकाः पुनर्लोक इव नायकादिगतान् भावान् उद्बुद्धान् अनुमिन्वते[१]। अत एव भट्टनायकेन साधारणीकरणप्रक्रिया प्रदर्शिता या अभिनवेनापि स्वीकृता। वस्तुतोऽन्यसम्बद्धानामपि विषयाणाम् अन्यगतभावोद्बोधकरणता दृश्यत एव लोके। यतो हि चुम्बनालिङ्गनादिप्रवृत्तयोर्यूनोर्दूराद्दर्शनेन अन्यगतापि रतिरुद्बुद्धा रिरंसां जनयति यूनां हृदयेषु। वृद्धानां मनसि जुगुप्सां जनयति चेत् तत्र कारणम् अन्यदेव। एवमेव शोचतोऽन्यान् दृष्ट्वा अन्यः शोकाविष्टो भवति, हसतश्च दृष्ट्वा हासवान् इत्यादि। अस्तु नाम तथा लोके, काव्यादिषु न सम्भवतीति धिया प्राय इयं साधारणीकरणप्रक्रिया सम्प्रवर्तिता सहृदयधुरीणेन भट्टनायकेन। यतो लोके क्रोधाविष्टौ द्वौ दृष्ट्वा उदासीनस्तृतीयः क्रोधाविष्टो न भवेत्। कदाचिदयं भयाविष्टः पलायेतापि तस्मात् स्थानात्।

साधारणीकृतैर्विभावादिभिः सामाजिकादीनां हृदयेष्वपि रत्यादीनामेवोद्बोधो भवेत्, न पुनः केवलस्यानन्दस्य। यदि ते सुखरूपास्तदा आनन्दांशस्यापि उद्बोधो भवति न पुनः सर्वत्र। "संविद्विश्रान्तिर्भवति", "आनन्दांशोऽनावृतो भवति" इत्यादिप्रतिज्ञामात्रेण आनन्दो न भवति। अस्ति खलु ज्ञानमात्रे संविद्विश्रान्तिः। ज्ञानस्यैव संवित्त्वात्। आत्मनो ज्ञानानन्दरूपताङ्गीकारेऽपि न खलु सर्वेषु ज्ञानेषु आनन्दोद्बोधः? अतः प्रायो नैकेषु स्थानेषु चिदंशोद्बोधेऽपि, अर्थाद् ज्ञानोत्पत्तावपि, आत्मन आनन्दांशस्तिरोहित एवास्त इत्यभ्युपगन्तव्यम्, अनुभवबलात्, सर्वत्राह्यवृत्तिनिवृत्तिरूपायाम्, **"सता सोम्य तदा सम्पन्नो भवति, स्वमपीतो भवति"**[१] ( छा० उ० ६।८।१ ) इति, **"प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"** ( बृ० उ० ४।३।२१ ) इति च वर्णितायां सुषुप्तावपि अविद्यावृत्तिरनुगता भवतीति हि अङ्गीक्रियते वेदान्तिभिः।

"सुखमहमस्वाप्सम्" इतिवत् "न किञ्चिदवेदिषम्" इत्यपि सुप्तोत्थितस्य प्रत्यभिज्ञानात्। अत एवोक्तं सुषुप्तिस्थितिवर्णनप्रसङ्गे माण्डूक्योपनिषद्भाष्ये

---

१ यथा अभिनवगुप्तेन प्रत्यपादि—"लोकव्यवहारे कार्यकारणसहचारात्मकलिङ्गदर्शने स्थाय्यात्मकपरचित्तवृत्त्यनुमानाभ्यासवशात्" ( अ० भा० रससूत्रम् ) इति तथा काव्यादिष्वपि अनुमायाः प्रवृत्तिर्भवत्येव। कार्यकारणादीनाम अनुभावविभावादिनामान्तरदानमात्रेण तेषु स्थितस्य कार्यकारणभावस्यानुच्छित्तेः।

शङ्करभगवत्पादैः—"मनसो विषयविषय्याकारस्पन्दनायासदुःखाभावादानन्दमयः आनन्दप्रायः, नानन्द एव[1]" इति। तद्व्याख्यायां चोक्तम् आनन्दगिरिणा—"न हि सुषुप्ते निरूपाधिकानन्दत्वं प्राज्ञस्याभ्युपगन्तुं शक्यम्, तस्य कारणोपहितत्वात्" इति। यदा सौषुप्तानन्दस्यैवेयं गतिस्तदा का कथा रसानन्दस्य यस्यामवस्थायां विभावादिप्रतीत्यनुवृत्तिरङ्गीकृता। "विभावादिजीवितावधिः........ स च न कार्यः, विभावादिविनाशेऽपि तस्य सम्भवप्रसङ्गात्"[2] इति हि प्रतिपादितं मम्मटेन।

परमात्मवर्णनपराणां काव्यानां पठनेन, तदर्थभावनया, तत्त्वमस्यादिवाक्यार्थ-मननादिना वा अज्ञाननिवृत्तिः, आनन्दोद्बोधश्च भवतीति यद्युच्यते तदङ्गीकर्तुं शक्नुमः, भाव्यमानस्यार्थस्य सच्चित्सुखरूपत्वात्, शास्त्रप्रामाण्याच्च। अत एव भक्ति-रसस्यैव अलौकिकरसतां रसानां चान्येषां लौकिकतां प्रतिपादयता मधुसूदनसरस्वत्या भगवद्भक्तिरसायने—

"अत एव अनवच्छिन्नानन्दघनस्य भगवतः स्फुरणाद् भक्तिरसे अत्यन्ताधिक्य-मानन्दस्य, लौकिकरसे तु विषयावच्छिन्नस्यैव चिदानन्दांशस्य स्फुरणात् तत्रानन्दस्य न्यूनतैव। तस्माद् भक्तिरस एव लौकिकरसानुपेक्ष्य सेव्य इत्यर्थः"[3] इत्युक्तम्। अतः सर्वेष्वपि काव्येषु नेयं रीतिः प्रतिज्ञामात्रेण स्थापयितुं शक्यते, अनुभव-विरोधात्। करुण-भयानक-बीभत्सादिप्रधानेभ्योऽपि काव्येभ्यो महान्तमानन्दमनुभवा-मीति को नु वा परप्रत्ययानेयबुद्धिरमूढोऽभिदधीत? "भग्नावरणचिद्विशिष्टो रत्यादिः स्थायिभावो रसः" इति वा, "रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः" इति वा अङ्गीकारेऽप्युपाधिभूतानां रतिशोकजुगुप्सादीनामनुवृत्तेः शोकजुगुप्सादिशबलित एव आनन्द इति वक्तव्यम्। अङ्गीकृतं ह्येतद् अभिनवगुप्तेनापि—"सुखदुःखाद्याकार-तत्तच्चित्तवृत्तिरूपरूषितनिजसंविदानन्दप्रकाशमयः, अत एव विचित्रो रसनास्वादन-चमत्कारचर्वणनिर्वेशभोगाद्यपरपर्यायः, तत्र यदवभासते तदेव नाट्यम्" इति वदता[4]।

"योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः।
सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते"[5] ॥

इत्यस्य च व्याख्याने सर्वेषां स्थायिभावानां सुखदुःखरूपतां प्रतिपादयता तेनैव रससूत्रव्याख्याने, रसानुभूतौ स्थायिसंस्पर्शोऽङ्गीकृतः—"लोकस्य सर्वस्य साधारणतया स्वत्वेन भाव्यमानश्चर्व्यमाणोऽर्थो नाट्यम्। स च सुखदुःखरूपेण

---

१. मा० उ० भा० ५; २. का० प्र० ४।२८; ३. भ० र०, पृ० ४९।
४. अ० भा० १।१०७; ५. ना० शा० १।११९।

विचित्रेण समनुगतो न तु तदेकात्मा। तथा हि—रतिहासोत्साहविस्मयानां सुखस्वभावत्वम्, तत्र तु चिरकालव्यापिसुखानुसन्धिरूपत्वेन विषयौन्मुख्यप्राणतया तद्विषयाशंसाबाहुल्येन अपायभीरुत्वाद् दुखानुवेधो रतेः, हासस्य सानुसन्धानस्य विद्युत्सदृशस्तात्कालिकोऽल्पदुःखानुवेधः सुखानुगतः। उत्साहस्य तात्कालिकदुःखायासनिमज्जनरूपानुसन्धिना भाविबहुजनोपकारिचिरतरकालभाविसुखसमाचिकीर्षात्मना सुखरूपता। विस्मयस्य निरनुसन्धानतडित्तुल्यसुखरूपता, क्रोधभयशोकजुगुप्सानां तु दुःखरूपता। तत्र चिरकालदुःखानुसन्धिप्राणो विषयगतात्यन्तिकनाशभावनातदाकाङ्क्षाप्राणतया सुखदुःखानुवेधवान् क्रोधः। निरनुसन्धितात्कालिकदुःखप्राणतया तदवगमाकाङ्क्षोत्प्रेक्षितसुखानुसम्भिन्नं भयम्। द्वैकालिकस्त्वभीष्टविषयनाशजः प्राक्तनसुखस्मरणानुविद्धः सर्वथैव दुःखरूपः शोकः। उत्पाद्यमानदुःखानुसन्धानजीवितविषयात् पलायनपरायणरूपा निषिध्यमानशङ्कितसुखानुविद्धा जुगुप्सा। समस्तपूर्वदुःखसञ्चयप्राणितः सम्भावितततदुपरमबहुलसुखमयो निर्वेदः। एवं व्यभिचारिप्रभृतिष्वपि वाच्यम्[1]" इति।

"इत्यानन्दरूपता सर्वरसानाम्। किन्तु उपरञ्जकविषयवशात् तेषामपि कटुकिन्तास्पर्शोऽस्ति वीरस्येव। स हि क्लेशसहिष्णुतादिप्राण एव"[2] इति च।

अलौकिकत्वाच्च रसानुभूतेरेतादृशपर्यनुयोगानवकाश इति यदुच्यते तत्र पृच्छामः— केयं रसगता अलौकिकता? काव्यशब्दप्रयोज्यत्वं चेत्, प्रतिज्ञामात्रमिदम्, प्रमाणान्तरानुपष्टम्भितत्वात्। भावनादिसहकृतचक्षुःश्रोत्रादीन्द्रियजन्यज्ञानप्रयोज्यस्य का वास्य रसानुभवस्यालौकिकता? विभावादिज्ञानस्यैन्द्रियिकत्वेऽपि तदनन्तरभाविनो रसानुभूतेर्नैन्द्रियिकत्वम्, अत एव चास्यालौकिकत्वमिति चेत्, तदा सर्वेषामेव तादृशानामनुभवानाम् अलौकिकत्वमभ्युपगन्तव्यं स्यात्। "श्वो भवते सुमधुराणि खाद्यानि दास्यन्ते" इति केनचिदुक्त औदरिकः पुनः पुनस्तमेव वाक्यार्थं स्मरन् मनोमोदकान्यास्वादयति। एतस्याप्यास्वादस्य अलौकिकता कुतो नाङ्गीक्रियते? गणितशास्त्रादिसम्बद्धं कञ्चित् क्लिष्टतमं विषयं चिरं विमृश्य अन्ततो ज्ञातरहस्यस्य य आनन्दो जायते सोऽपि कुतो नालौकिकः? शास्त्रार्थचिन्ताप्रवृत्ताः किल विद्वांसो विगलितवेद्यान्तरे कस्मिंश्चिल्लोकान्तर इव वसन्ति तस्मिन् समये। कुतो नासौ अलौकिकोऽनुभवः? अतो भौतिकेन्द्रियजन्यज्ञानजन्यत्वसामान्याद् रसानुभूतेरपि लौकिकतैव। भरतादारभ्य लोल्लटश्रीशङ्कुकानन्दवर्धनादिपर्यन्तं न केनाप्यस्या

---

१. हि० अ० भा०, पृ० २१९-२२९।

२. तत्रैव, पृ० ४७८।

अलौकिकता प्रतिपादिता, भट्टनायकेनैव तत्प्रथमतया इयं प्रतिपादिता, अनुसृता च अभिनवेन संविद्विश्रान्त्यावरणभङ्गादिप्रक्रियाप्रदर्शनेन।

पूर्वोक्तेषूदाहरणेषु ते ते स्वसम्बद्धानेव विषयान् पुनः पुनर्भावयन्त आनन्दतुन्दिलिता भवन्ति। अत्र पुनः आत्मासम्बद्धैरेव विभावादिभिः साधरणीकरणमहिम्ना तथा अगृहीतैरुद्बुद्धरत्यादी रसानुभवं प्राप्नोतीति, इयमेवालौकिकता इति चेत्, अन्यसम्बद्धस्य तथा अग्रहणं भ्रान्तिविलसितमेव किल भवति? कुतोऽस्य तत्कृतस्य रसानुभवस्य अलौकिकता? अथवा—अङ्गीक्रियतां वा काचित् पारिभाषिकी अलौकिकता, तथापि कथं वेयमीष्टे सर्वेषां रसानाम् आनन्दरूपतां साधयितुम्, अनुभवविरोधात्। यदि सर्वेषां रसानामेकयैव विधया आनन्दरूपता तदा कुतो वा केषाञ्चिद् रसानां द्रुतिकारणत्वम्, केषाञ्चिच्च दीप्तिजनकत्वमङ्गीक्रियते। उपधायकस्थायिभावादिवशादिति चेत् तद्वशादेव दुःखाद्यात्मकताऽप्यङ्गीक्रियताम्।

अत एव केचिदालङ्कारिकाः कवयश्च केषाञ्चिद्रसानां सुखरूपतां केषाञ्चिद्दुःखहेतुतां च प्रतिपादयन्ति। नाट्यदर्पणस्य रचयितारौ रामचन्द्र-गुणिचन्द्रौ—"तत्र इष्टविभावादिस्वरूपसम्पत्तयः शृङ्गारहास्यवीराद्भुतशान्ताः पञ्च सुखात्मानः। अपरे पुनः अनिष्टविभावाद्युपनीतात्मानः करुणरौद्रबीभत्सभयानकाश्चत्वारो दुःखात्मानः" इत्याहतुः[1]।

पण्डितराजोऽपि 'नव्यास्तु' इत्युपक्रम्य किञ्चिन्मतमुपस्थापयति यत्र रसस्य भ्रान्तिरूपता अथवा भ्रान्तिप्रयोज्यता प्रतिपाद्यते। प्रथमतोऽभिनवगुप्तस्य मतं सादरमुपस्थापयतोऽप्यस्य अस्मिन्नेव नव्यानां मते पक्षपात इति प्रतीयते। यतः प्रायः (द्वित्रस्थानवर्जम्) नैकेषु स्थानेषु स्वाभिमतमेव मतं नव्यमततया उपक्षिपति पण्डितराजः।

एषा तेषां प्रक्रिया नव्यानाम्—"काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनाव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायाम् अनन्तरं च सहृदयतोल्लसितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तत्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यः शकुन्तलादिविषयकरत्यादिरेव रसः। अयं च कार्यो दोषविशेषस्य। नाश्यश्च तन्नाशस्य। स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात् सुखपदव्यपदेश्यो भवति। स्वपूर्वोपस्थापितेन रत्यादिना तदग्रहात्, तद्रतित्वेनैकत्वाध्यवसायाद्वा तदङ्ग्यो वर्णनीयश्चोच्यते ···· ···· यदपि विभावादीनां साधारण्यं प्राचीनैरुक्तं

१. नाट्यदर्पणम्, पृ० १४१।

तदपि काव्येन शकुन्तलादिशब्दैः शकुन्तलात्वादिप्रकारकबोधजनकैः प्रतिपाद्यमानेषु शकुन्तलादिषु दोषविशेषकल्पनं विना दुरुपपादम्। अतोऽवश्यकल्प्ये दोषविशेषे तेनैव स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरपि सूपपादा। ..... ...शृङ्गारप्रधानकाव्येभ्य इव करुणप्रधानकाव्येभ्योऽपि यदि केवलाह्लाद एव सहृदयहृदयप्रमाणकः, तदा कार्यानुरोधेन कारणस्य कल्पनीयत्वात् लोकोत्तरकाव्यव्यापारस्यैवाह्लाद-प्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्पनीयम्। अथ यद्याह्लाद इव दुःखमपि प्रमाणसिद्धं तदा प्रतिबन्धकत्वं न कल्पनीयम्। स्वस्वकारणवशाच्च उभयमपि भविष्यति"[1] इति।

अत्र नव्यानां मतमुपस्थापयता पण्डितराजेन त्रयोंऽशाः सूचिताः—

१. व्यञ्जनया नायकादिगतं रत्यादिकमेव व्यज्यते, न पुनः सामाजिकगत-त्वेनोच्यमानो रसः।

२. सर्वेषामपि रसानां सुखैकरूपतेति न निश्चेतुं पार्यते। केषाञ्चिद् दुःखरूपता केषाञ्चिच्चोभयरूपता यथानुभव निश्चेतव्या।

३. रसानुभूतिश्च भ्रान्तिजन्या इति।

नितरां स्पृहणीयाया रसानुभूतेर्भ्रान्तिजन्यत्वश्रवणसमनन्तरमेव सम्भ्रान्त-चित्ता भवन्ति केचिद्विद्वांसः; परन्तु मुकुलीकृतलोचनाश्चिन्तयन्तु विपश्चितः— पुरः-स्थितानाधुनिकान् नटीनटादीन् सीतारामादिरूपेण गृह्णतामस्माकमियं धीर्भ्रमरूपा न चेत् किं प्रमा भवितुमर्हति? भ्रमस्यापि सुखदुःखात्मकानुभूतिजनकत्वं दृश्यत एव लोके—यथा शुक्तिकायां रजतभ्रमस्तात्कालिकं रजतलाभधीजन्यं सुखम्, सर्पादिभ्रमश्च दुःखं जनयति। मिथ्याज्ञानस्यापि सत्यफलजनकत्वमङ्गीकृतं वेदान्तिभिः। यदाहुः शङ्करभगवत्पादा अन्ये चाचार्याः—

"कथन्त्वसत्येन वेदान्तवाक्येन सत्यस्य ब्रह्मात्मत्वस्य प्रतिपत्तिरुपपद्यते? न हि रज्जुसर्पेण दष्टो म्रियते। .... .... नैष दोषः। शङ्काविषादिनिमित्तमरणादि-कार्योपपत्तेः"[2]।

"श्रवणाद्युपाय आत्मसाक्षात्कारपर्यन्तो वेदान्तसमुत्थोऽपि ज्ञाननिचयोऽ-सत्यः। सोऽपि हि वृत्तिरूपः कार्यतया निरोधधर्मा[3]"।

"ननु ब्रह्मज्ञानस्यापि अध्यासोपादानत्वाद् मिथ्यात्वमापन्नम्? यदि तावत् स्वरूपमिथ्यात्वमुच्यते अङ्गीकृतमेव तत्। अर्थविषयमिथ्यात्वं न। ब्रह्मणि बाधा-भावात्"[4] इति।

---

१. र० ग०, पृ० ३०-३१;    २. ब्र० सू० भा०, पृ० ४५८।
३. भामती, पृ० ४५८।    ४. पञ्चपादिकाविवरणम्, भागः १, पृ० ४४१।

एवं विभावादिज्ञानेन भ्रान्तिरूपेण जातो रसानुभवो न खलु नास्तीत्यपलपितुं शक्यते, अनुभूतत्वादेव। अतश्च रसस्य भ्रान्तिजन्यत्वाङ्गीकारेऽपि न दोषः। इदमेव च मतं पण्डितराजस्याभिमतमिति इतोऽपि प्रतीयते, यतोऽयमाह अभिनवगुप्तमतानुवादप्रसङ्गे - "विभावादीनामपि स्वप्नतुरगादीनामिव रङ्गरजतादीनामिव साक्षिभास्यत्वमविरुद्धम्"[1] इति।

केचित् पुनः करुणभयानकबीभत्सानां रसत्वमेव नाङ्गीकुर्वन्ति, दूरापास्तैवैषां सुखरूपता। काव्यप्रकाशखण्डने प्रतिपादयति सिद्धिचन्द्रगणिः —

"न च तेषां ( करुणादीनां ) तथाभूतत्वेऽपि अभिव्यक्तानन्दचिदात्मना सहाभिव्यक्तानां रसत्वमिति वाच्यम्। एवमपि स्थाय्यंशे रसत्वविरोधात्। .... ... यत्तु शोकादयोऽपि रत्यादिवत् स्वप्रकाशज्ञानसुखात्मका इति तदुन्मत्तप्रलपितम्। किञ्च, सामाजिकेषु मृतकलत्रपुत्रादीनां विभावादीनां शोकादिस्थायिभावस्य चर्वणीयेन अजमहीपालादिना सह सामानाधिकरण्यम्, अश्रुपातादिदर्शनात्। वर्णनीयतन्मयीभवनं चापेक्षितमिति चेत्, कथं ब्रह्मानन्दसहोदररसोद्बोधः ? कथं वा न अमाङ्गल्यम् ? अत एव केचिदजविलापादिकं न पठन्ति। बीभत्से तु मांसपूयाद्युपस्थित्या वान्तनिष्ठीवनादिकं यन्न भवेत् तदेवाश्चर्यम्। कुतस्तादृशपरमानन्दरूपरसोद्बोध इति। एवं भयेऽपि। शान्तस्य त्यक्तसर्ववासनेषु भवतु नाम कथञ्चिद्रसत्वम्। विषयिषु पुनः सर्वविषयोपरमोपस्थित्या कथं रसत्वम् ?"[2] इति।

केचित् कवयोऽपि भयानकबीभत्सादीनामुद्वेगजनकतामुद्घोषयन्ति। यथाह मुरारिः अनर्घराघवप्रस्तावनायाम्—"कुतश्चिद् द्वीपान्तरादागतेन कलहकन्दलनाम्ना कुशीलवापसदेन रौद्रबीभत्सभयानकभूयिष्ठं कमपि प्रबन्धमभिनयता नित्यं किलोद्वेजितो लोकः" इति। करुणस्यापि दुःखरूपतैवाभिमता भवभूतेरित्यग्रे स्पष्टीकरिष्यते।

दूरदर्शनप्रसारितयो रामायणभारतकथयो रामलक्ष्मणयोर्नागपाशबन्धवृत्तान्तं द्रौपदीवस्त्रहरणवृत्तान्तं च दृष्ट्वा शोकं सोढुमशक्नुवानाः किल केचिद् हठात् तदेव मृता इति वार्तापत्रिकासु प्रकटिता वार्ता प्रथितैव, अनेन च ज्ञातुं शक्यते करुणस्य कीदृशी आनन्दरूपतेति।

तदेवमुपाधिभूते रत्यादिभिरुपहितत्वात् शृङ्गारहास्यशान्तानां सुखरूपता, करुणभयानकबीभत्सानां दुःखरूपता, रौद्रवीराद्भुतानाम् अनुभयरूपतेत्यनुभवबलादङ्गीकर्तव्यम्। अनुभवकाले तु सर्वेषामेवानुभयरूपत्वम्।

---

१. र० गं०, पृ० २६।
२. का० प्र० ख०, पृ० १६-२३।

सुखरूपेष्वपि रसेषु आनन्दांशावरणभङ्गाङ्गीकरणमात्रेण तेषां ब्रह्मानन्द-सब्रह्मचारितावर्णनमतिशयोक्तिभरितमेव । विगलितवेद्यान्तरत्वमात्रमेव साधर्म्यं निमित्तीकृत्य चेत्तदङ्गीक्रियते, वयं विवदामः, यतः श्रुतिरपि तत् साधर्म्यमात्रं निमित्तीकृत्य सत्सम्पत्तिरूपां विगलितवेद्यान्तरां सुषुप्तिं युवत्यालिङ्गनजन्यया अनुभूत्या उपमिनोति—"तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं वेद नाभ्यन्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्[1]" इति । अपि च न केवलं रसानन्दे, सर्वेष्वपि वैषयिकानन्देषु आत्मानन्दस्यैवांशोऽनुभूयत इत्यङ्गीक्रियते औपनिषदैः — "एतस्यैवानन्दस्य भूतानि मात्रामुपजीवन्ति"[2] इति श्रुतेः । अत एवोक्तं पञ्चदश्याम्—

"विषयेष्वपि लब्धेषु तदिच्छोपरमे सति ।
अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिम्बति[3]" ॥ इति ।

अङ्गीकृतं खल्वभिनवगुप्तेनापि रसानन्दस्य आत्मानन्दविपृण्मात्रत्वम्, एवञ्च आवरणभङ्गादिभिरपि हेतुभिर्न रसानन्दस्य ब्रह्मानन्दतुल्यता अलौकिकता वा समर्थयितुं शक्यते । यद्यानन्दत्वसामान्येन ब्रह्मानन्दतुल्यता तदा ओमिति वदामः — "पर्वते परमाणौ च पदार्थत्वं प्रतिष्ठितम्" इतिवत् ।

करुणरसस्य आनन्दरूपत्वाभावे कुतो वा तत्प्रधानानि नाट्यादीनि द्रष्टुं काव्यानि च श्रोतुं जनाः प्रवर्तेरन् ? अतस्तत्राप्यानन्द एव" इति वदन्तः केचित् करुणरसास्वादसमये यदश्रुपातादिकं सहृदयेषु दृश्यते तद् आनन्दातिशयादेवेति समर्थयन्ति, नखदन्तक्षतादिवत् तस्यापि सुखजनकत्वमेवेति चान्ये वदन्ति, त इत्थं प्रष्टव्याः — आनन्दरूपत्वेन सर्वैरङ्गीकृते शृङ्गारे कुतो वा आनन्दाश्रूणि नोद्गच्छन्ति ? किं बीभत्से, भयानकेऽपि आनन्दोऽनुभूयते ? अत एव आगामिदृश्येषु वा आनन्दरूपाणां शृङ्गारादीनामनुभूतिर्भवेदिति आशयेव सहृदयाः करुणादिप्रधाने प्रवर्तन्त इति रामचन्द्रगुणिचन्द्रौ समाधत्तः, लोकवृत्तानुकरणरूपतैव खलु नाट्यस्य प्रतिपादिता भरतेन—

"नानाभावोपसम्पन्नं नानावस्थान्तरात्मकम् ।
लोकवृत्तानुकरणं नाट्यमेतन्मया कृतम् ॥
उत्तमाधममध्यानां नराणां कर्मसंश्रयम् ।
हितोपदेशजननं नाट्यमेतद् भविष्यति"[4] ॥ इति ।

---

१. बृ० उ० ४।३।२१ ; २. तत्रैव—४।३।३२ ।
३. प० द० ११।८६ ; ४. ना० शा० १।११२-११३ ।

लोकस्वभावश्च सुखदुःखसंवलितः। यथा तेनैवोक्तम् —

योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः।
सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते"[१] ॥ इति।

मानवस्य चायं स्वभावो यदयं सर्वदा जिज्ञासते कीदृशी वास्ति प्रवृत्तिरद्य लोकस्य, कथं वासीत् पुरेति। आत्मानमेवोपमां कुर्वाणोऽसौ जानात्येव सर्वेषामपि जीवनवृत्तं सुखदुःखात्मकमिति। महाभारते वनपर्वणि युधिष्ठिरः "किम् अहमिव एतादृशदुःखभाक् कश्चित् पुरा आसीत् ?" इति समीपस्थं मुनिं दृष्ट्वा तत्कथितानि बलरामादीनां शोकपरिप्लुतानि वृत्तानि सश्रद्धं सादरं चाशृणोत्, तच्छ्रवणेन किञ्चिदाश्वस्तो बभूवेति श्रूयते। तथैव सर्वोऽपि नाट्ये प्रदर्शितानि सुखदुःखमयानि वृत्तानि द्रष्टुं काव्यादिभ्यश्च श्रोतुम् उत्सुको भवति। अर्थात् सुखदुःखादिरूपान् सर्वानपि भावान् आस्वादयितुं सन्नद्धो भवति। रतिशोकोत्साहादिषु च भावेषूपस्थापितेषु स तानास्वादयन् सहृदयतावशादात्मानमपि विस्मृत्य विगलितवेद्यान्तरः कञ्चित् कालं स्तब्धान्तरङ्ग इव भवति। सेव स्थिती रसानुभूतिस्थितिः, या सुखानुभवरूपेण वा दुःखानुभवरूपेण वा न निर्वक्तुं शक्यते। सुषुप्तस्य वा एकविषयविषाक्तचित्तस्येषुकारादेर्वा, ब्रह्मसूत्रभाष्ये मुग्धाधिकरणे[२] वर्णितस्य मुग्धस्य वा यादृशी स्थितिस्तादृश्येवेयमिति वक्तुं शक्यते। इयानेव भेदः —रसमनुभवतः, एकविषयविषाक्तचित्तस्य जाग्रतश्च शरीरं विध्रियते। सुषुप्तमुग्धौ पुनर्विस्रस्तसर्वाङ्गौ शयात इति। उपाधिभूतरत्यादिसम्पर्कवशात् पूर्वोत्तरभाविप्रतीतिवशाच्चास्यां स्थितौ सुखरूपता दुःखरूपता वा अध्यारोप्यते।

"तद्यथा प्रियया" इत्यादि पूर्वोदाहृतं श्रुतिवाक्यं व्याख्यातवन्तः शङ्करभगवत्पादा वदन्ति—"यथा लोके प्रियया इष्टया स्त्रिया सम्परिष्वक्तः सम्यक् परिष्वक्तः कामयन्त्या कामुकः सन्न बाह्यमात्मनः किञ्चन किञ्चिदपि वेद मत्तोऽन्यद्वस्त्विति, न चान्तरम् अयमहमस्मि सुखी दुःखी वेति[३]" इति, "प्राज्ञेन....सम्परिष्वक्तः.....न बाह्यं किञ्चन वस्त्वन्तरं नाप्यान्तरम् आत्मन्यहमस्मि सुखी दुःखी वेति वेद[४]" इति च। भावोद्रेकस्थितिरियमेव सुचतुरं वर्णिता भवभूतिना—

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्गः किमु मदः।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च सम्मीलयति च[५] ॥ इति।

---

१. ना० शा० १।११९ ; २. ब्र० सू० भा० ३।२।५ ; ३. बृ० उ० भा० ४।३।२१।
४. तत्रैव—४।३।२१ ; ५. उ० रा० च० १।३५।

यदि बीभत्सादीनां नेवानन्दरूपता कुतो वा एषां रसत्वेन परिगणना कृता मुनिनेति तु न चोदनीयम्, आनन्दरूपत्वस्य रसत्वप्रयोजकत्वात्। विगलितवेद्यान्तरत्वस्यैव तत्प्रयोजकत्वात्। रत्याद्युपभोग एव तादृशी स्थितिर्भावान्तरोपभोगापेक्षया चिरं सम्पादयितुं शक्यत इति तेषामेव स्थायित्वमङ्गीकृतम्। अन्येषां तूदयोत्तरकालमेव कतिचिद्भ्यः क्षणेभ्योऽनन्तरं निलीयमानानां भावमात्रत्वमेव, रुद्रटभोजादयः केचित् पुनर्व्यभिचारिभावानामपि रसतायोग्यतामङ्गीकुर्वन्ति। न हि तावता ग्लानिशङ्कासूयामदश्रमादीनामपि तुल्येनैव रूपेण आनन्दरूपत्वम् अभ्युपगन्तुं शक्यते। आनन्दाभावे कुतो वाऽत्र प्रवृत्तिः सहृदयानामिति चेत्— मानवसहजं नानाविधलोकवृत्तदर्शनकौतूहलमेवात्र हेतुरिति दत्तोत्तरमेवेदम्। शान्ते च कौतूहले लिप्सितस्य विषयस्योपलब्धौ यथान्तर्मुखतां गतं मनस्तात्कालिकमानन्दमनुभवति तद्वदेवात्रापि। उक्तं हि पञ्चदश्याम्—

विषयेष्वपि लब्धेषु तदिच्छोपरमे सति।
अन्तर्मुखमनोवृत्तावानन्दः प्रतिबिम्बति[1]" ॥ इति।

तदयमत्र निर्गलितोऽर्थः —

१. न सर्वेषामपि रसानामेकया विधया आनन्दरूपत्वम्।

२. केचित् सुखरूपाः, केचिच्च क्लेशरूपाः।

३. अनुभूतिसमये पुनर्न कस्यापि सुखरूपता दुःखरूपता वा।

४. पौर्वपाश्चात्त्यप्रतीतिभिः साङ्कर्यात् तेषां तत्तद्रूपताभिमानः।

५. रसप्रतीतिः सर्वथा लौकिक्येव, ऐन्द्रयिकत्वात्।

६. सुखदुःखानुभूत्योः सर्वजनसाधारण्यात् तदुभयसंप्लुतानां चरितानां श्रवणे वीक्षणे च मानवस्य प्रवृत्तिः स्वाभाविकीति न केवलम् अन्यसम्बद्धानां सुखानाम्, दुःखानामपि नाट्यादिषु दर्शनश्रवणादिभिः स आत्मन औत्सुक्यं शमयितुं प्रयतते।

७. आनन्दवर्धनेन प्रतिपादितो रसध्वनिरन्यः, अभिनवेन प्रतिपादितश्चान्यः।

८. वस्तुतोऽभिनवगुप्तप्रतिपादितस्य रसध्वनेर्ध्वनित्वं नास्ति।

९. भट्टनायकाभिनवगुप्ताभ्यां प्रतिपादितयो रससिद्धान्तयोर्नास्ति महदन्तरम्।

**प्रकृतिरसवादः** — केचिदालङ्कारिकाः कस्यचिद्रसस्य प्रकृतितामन्येषां च तद्विकृतितामभ्युपगच्छन्तः प्रकृतिरसस्य प्राधान्यं प्रतिपादयन्ति। सोऽयं प्रकृतिरस-

---

१. प० द० ११।८६।

वादो भरतोक्तात्—**"हास्यो भवति शृङ्गारात्"** इत्यादितो भिन्नः, न हि तत्र कस्यचित् प्राधान्यस्य अन्यस्याप्राधान्यस्य च प्रतिपिपादयिषा अस्ति ।

मोक्षरूपपरमपुरुषार्थसम्बद्धत्वात् शान्तस्य प्रकृतिता प्रत्यपाद्यभिनवगुप्तेन । अभिमानरूपस्य शृङ्गारस्य, प्रेम्णश्च प्रकृतित्वमङ्गीक्रियते स्म भोजेन । भोजः पुनरेकस्य रसस्य प्राधान्यम्, अन्येषां च तद्विकृतितया अप्राधान्यं निरूपयितुं नैव प्रावर्तत । यथा केचिच्छास्त्रकाराः **"आत्ममनःसंयोगः ज्ञानसाधारणकारणम्"** इति वदन्ति, तथाऽयं **"सर्वेऽपि रसा भावाश्च अहङ्कारात् प्रेम्णश्चोद्गच्छन्ति"** इत्येव तावत् प्रतिपिपादयिषति । विश्वनाथस्य पूर्वपुरुषः नारायणोऽद्भुतस्य, मधुसूदनसरस्वतीरूपगोस्वाम्यादयो भक्तेः, एवं ते ते आलङ्कारिका दार्शनिकाश्च स्वस्वाभिरुचिमनुसृत्य तांस्तान् रसान् प्रकृतिरसत्वेनाङ्गीचक्रुः ।

उत्तररामचरिते भवभूतिः स्वीयं संविधानकं पात्रमुखेन प्रशंसन्—

"अहो ! संविधानकम् !

एको रसः करुण एव निमित्तभेदा-<br>
द्भिन्नः पृथक् पृथगिवाश्रयते विवर्तान् ।<br>
आवर्तबुद्बुदतरङ्गमयान् विकारान्<br>
अम्भो यथा सलिलमेव हि तत्समस्तम्" ॥

इति वदति । अतोऽभिनवगुप्ताद् बहोः कालात् पूर्वमेव भवभूतिना प्रकृतिरसवादः प्रतिपादितः । तन्मतानुसारेण च करुण एव सर्वेषां रसानां प्रकृतिरिति प्रायः सर्वेऽप्यभिप्रयन्ति, समर्थयन्ति चैतन्मतम्—**"करुणः चित्तद्रुतिहेतुः । स च सर्वेषामपि रसानामास्वादे उपकरोति"** इत्यादि यत्किञ्चिल्लिखन्तः । भवभूत्युक्तत्वमात्रेण अनुभवविरुद्धमिदं कथं वा अङ्गीकर्तुं शक्यते ? न हि सर्वेषु रसेषु, करुणमनुस्यूततया अनुभवामः ।

भवतु नाम चित्तद्रुतिहेतुः करुणः, कथं वायं चित्तविकासहेतोर्वीरादेः, चित्तविस्तारहेतोः रौद्रादेः, चित्तविक्षोभहेतोर्बीभत्सादेश्च प्रकृतित्वं प्राप्तुं प्रभवेत् ? अतोऽत्र भवभूतेराशयः क इति ज्ञातुं तस्य समये लब्धप्रचारस्य रसविषयकस्य तत्तदालङ्कारिकाणां मतस्य, यत्रायं श्लोको दृश्यते तस्य प्रकरणस्य च परिशीलनमावश्यकम् ।

रसस्य सामाजिकनिष्ठतां प्रतिपादितवद्भ्यो भट्टनायकाभिनवगुप्तादिभ्यो बहोः कालात् पूर्वमवर्तत भवभूतिः । काले हि तस्मिन्—

"रसवद्दर्शितस्पष्टशृङ्गारादिरसोदयम् ।
स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्"[1] ॥

इति रुद्रटेनोक्तया रीत्या रसानां स्वशब्दवाच्यत्वमावश्यकतया अङ्गीक्रियते, भट्टलोल्लटाद्युक्तया दिशा रसस्य च नायकादिगतत्वम् । अत एव भवभूतिः —

"अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः" ॥

इत्यादिना करुणरसस्य रामाश्रयताम्, तस्य रामस्य हृदये घनव्यथाहेतुत्वं च वर्णयति । यदि हृदयसंवाद एव सहृदये रसानुभूतिं जनयतीत्यभ्युपगम्यते तदा रामादिगतं दुःखं तेष्वपि दुःखमेव प्रादुर्भावयेत्, न पुनः सुखम् इत्यभ्युपगन्तव्यम् । ( यदि रावणादिगतः पुत्रशाकादिः सामाजिकेषु दुःखं न जनयति तत्र हेतुः सर्वविदित एव । ) एवम् "एको रसः" इत्यादिश्लोके भवभूतिरात्मनः कथावस्तुनिर्वहणचातुर्यं पात्रमुखेन प्रशंसन्—"अहो ! अद्भुतमिदं कथावस्तुनिर्वहणम्; यत एक एव करुणरसो राम-सीता-वासन्ती-कौसल्यादिषु भिन्नेषु पात्रेषु दाम्पत्य-मैत्री-वात्सल्यादिभिर्निमित्तैः पृथक्-पृथग् विभक्त इव दृश्यते" इति वदति । **"एकः करुणरस एव विभिन्नरसरूपेण परिणमते"** इति तु नास्य विवक्षितम् ।

महावीरचरितनाम्नि रूपकान्तरेऽपि भवभूतिना एतादृश एव भाव आविष्कृतः — "एक एव वीररसः श्रीराम-परशुराम-बालि-रावण-हनूमदादिषु विभक्तो दृश्यते कियताचिद् न्यूनाधिकभावेन" इति—

"अप्राकृतेषु पात्रेषु यत्र वीरः स्थितो रसः ।
भेदैः सूक्ष्मैरभिव्यक्तैः प्रत्याधारं विभज्यते[2]" ॥

अतो भवभूतिः करुणरसस्य सर्वरसप्रकृतितामङ्गीकरोतीत्येतदविचारितोक्तमेव ।

वस्तुतः कस्यचिद्रसस्य प्रकृतितायाः, अन्येषां तद्विकृतितायाश्चाभ्युपगमो निरर्थकः । विविधरसान् पदार्थान् भुञ्जाना वयं तदा तदा तैस्तै रसैर्निवृत्तिमुपलभामहे । सर्वेऽप्यभ्यवहार्याः पदार्थाः पृथिवीजन्या एव । अतः सर्वेषां रसानां मूलभूतो रसः कश्चिदस्तीति प्रतिपाद्य तस्य 'पृथ्वीरसः' इत्यादिनामनिर्धारणेन किं वा साधितं भवेत् ? किमरिषड्वर्ग काम एव सर्वेषां मूलकारणमिति निरूप्य सर्वेषामन्येषां भावानां प्राधान्यं निराकर्तुं शक्येत ? एकैकस्यापि हि भावस्य उपलभ्यत एव प्रातिस्विकं लक्षणम् ? "सामेन यज्वनां यजमानानां रूपेण, दिगन्तव्याप्तकीर्तीनां

---

१ का० सा० सं० ४।३ ; २. महावीरचरिते प्रस्तावना ।

महीपालानां रूपेण, मृगनयनानां रूपेण, पुष्पफलभरितानां तरूणां च रूपेण इयमेकैव भूमिर्भासते" इति वर्णयति कश्चित् कविः —

"य एते यज्वानः प्रथितयशसो येऽप्यवनिपाः
मृगाक्ष्यो याश्चैताः कृतमपरसंसारकथया ।
अमी ते दृश्यन्ते फलकुसुमनम्राश्च तरवो
जगत्येवंरूपा विलसति मृदेषा भगवती"[१] ।। इति ।

किमेतावता प्रत्यक्षतो दृश्यमाना नैके पदार्था अपलपितुं शक्यन्ते ? सर्वेषां रोगाणां निदानम् अजीर्णमेवेति रोगाद्वैतमुपदिशन्ति कतिचिद् भिषजः । किमनेन विभिन्नानां रोगाणां तत्त्वं ज्ञातं भवेत् ? एवमेव अनुभवगोचरान् रसानपलप्य सर्वत्रापि शान्तः, अथवा अहङ्कारः, अथवा अद्भुतम्, अथवा अन्यत् किञ्चिद् अनुस्यूततया वर्तते, अतस्तस्यैव प्रकृतिता इत्यादिवादोऽपि निरर्थक एव, रोगाद्वैत-बोधनं कदाचिद् निदानोन्मूलने उपयुज्येत । नात्र तादृशं किमपि फलं दृश्यते ।

यदि **"वावो वावाय केवलम्"** इति धिया प्रयत्यते तदा एको रसोऽन्यस्मिन् अन्तर्भावयितुं शक्येत, यथा वीररौद्रयोर्विभावादीनां तुल्यत्वाद् एकत्वं प्रतिपादितं सिद्धिचन्द्रगणिना । विप्रलम्भः करुणे अन्तर्भावयितुं शक्यते, सम्भोगश्रृङ्गारो वीरे अन्तर्भावयितुं शक्यते ।

उत्साहस्थायिभावः खलु वीरः । अतः 'आलिङ्गनवीरः', 'चुम्बनवीरः' इत्या-दिभिरवान्तरभेदैः सम्भोगश्रृङ्गारः कुतो वा नान्तर्भाव्यते वीरे ? अत एव युद्धवीरस्यैव वीरत्वं प्रतिपादयन् नागेशः ( प्रदीपस्य व्याख्यायाम् ) "अन्यथा पलायनवीरादि-भेदेन आनन्त्यं स्यात्" इत्यवदत् । अतो विविक्ततया उपलभ्यमानानां रसानां स्वतन्त्रताभ्युपगम एव श्रेयान् ।

**ध्वनिसिद्धान्तः —** अथाद्य ध्वनिसिद्धान्तमधिकृत्य किञ्चिद्विमृशामः, एकः शब्दः प्रधानतया एकमेवार्थं बोधयितुं प्रभवति, य एवोच्यते मुख्यार्थ इति । तस्यार्थस्य बोधने शब्दस्यास्य व्यापारः ( अथवा वृत्तिः ) अभिधेत्युच्यते । यदि कश्चिच्छब्दोऽभिधयैव अर्थान्तरमपि बोधयन्निव दृश्यते तदायं तत्सदृशवर्णानु-पूर्वीकोऽन्य एव शब्द इत्यङ्गीकर्तव्यम् । **"वाच्यभेदेन शब्दभेदः"** ( का० प्र० ९।३४ ) इति न्यायात् । यथा—सम्बोधनप्रथमैकवचनान्तः 'भव'शब्दोऽन्यः, लोण्मध्यम-पुरुषैकवचनान्तश्च 'भव'शब्दोऽन्यः । एवं सम्बोधनप्रथमैकवचनान्तः 'भवानि' इति शब्दोऽन्यः, लोडुत्तमपुरुषैकवचनान्तश्चान्यः । एवं स्थिते यदि कश्चिच्छब्दो

---

१. का० मी० ८।१४ ।

मुख्यार्थाद्भिन्नमर्थान्तरं बोधयति तदायमभिधातो भिन्नया लक्षणावृत्त्या बोधयति, यदि ततोऽपि दूरतरमर्थं बोधयति तदा अभिधालक्षणाभ्यां भिन्नया व्यञ्जनावृत्त्या बोधयतीति प्रतिपाद्यते कैश्चिदालङ्कारिकैः।

अत्रेदं विचारणीयम् — लक्षणास्थले, व्यञ्जनास्थले वा यदि कश्चिच्छब्दः स्वमुख्यार्थाद् भिन्नम् अर्थं बोधयति तत्र प्रायो विशिष्टपदान्तरसन्निधिरेव हेतुः। 'गङ्गा'शब्दः स्वतन्त्रतया प्रयुक्तः, मुख्यार्थबाधाप्रयोजकैर्वा शब्दैः सह प्रयुक्तः, यथा 'गङ्गायां स्नाति' इत्यादौ गङ्गारूपमेव मुख्यमर्थं बोधयति। कतिभिश्चित् पदैः 'घोषः' इत्यादिभिः साकं प्रयुक्तस्तु मुख्यार्थबाधात्, तात्पर्यवशाच्च तीररूपं लाक्षणिकमर्थं बोधयति। वस्तुतस्तत्रापि 'गङ्गा'शब्दो नदीरूपमेवार्थं बोधयति, नदीरूपश्चार्थस्तत्र बाधितस्तीररूपमर्थं लक्षयति। अतो वस्तुतोऽर्थगतैव लक्षणा (अर्थान्तरसूचकत्वं) शब्दे आरोप्यते। उक्तं हि मम्मटेन—**"लक्षणारोपिता क्रिया"** इति, **"अमुख्योऽर्थः लक्ष्यते यत् स आरोपितः शब्दव्यापारः सान्तरार्थनिष्ठः"**[1] इति च। 'अनुलोमः', 'प्रतिलोमः', 'अनुकूलः', 'प्रतिकूलः', 'कुशलः' इत्यादिष्वपि मुख्यार्थबाधसत्त्वादेव प्रवृत्तायामपि लक्षणायां मुख्यार्थस्य विस्मृतप्रायत्वात् लाक्षणिकार्थ एव मुख्यार्थवद् बोध्यते। वर्तत एव खलु एतादृशेष्वपि पदेषु—"स भृत्येषु अनुकूलः" अथवा 'अनुलोमः', 'कर्मणि कुशलः' इत्यादिवाक्यप्रयुक्तेषु मुख्यार्थबाधः, व्यञ्जनास्थलेषु तु सर्वत्र प्रथमं मुख्यार्थज्ञानमावश्यकम्, तदनन्तरमेव व्यङ्ग्यार्थप्रतिपत्तेः। एवं च यदा द्वितीयकक्षागतार्थसम्बन्धिनो लक्षणावृत्तिरेव अर्थगता इत्युच्यते, ततोऽपि दवीयसा अर्थेन सम्बन्धिन्या व्यञ्जनावृत्तेः कथं वा शब्दवृत्तित्वमिति वक्तव्यम्। उक्तं हि मम्मटेन —**"अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः"**[2] इति, **"सर्वेषां प्रायशोऽर्थानामर्थव्यञ्जकतोच्यते"**[3] इति च। अतो व्यञ्जनाया अङ्गीकारेऽपि तस्या अर्थवृत्तित्वमेवोचितम्, न पुनः शब्दवृत्तित्वम्।

अपि च या साक्षाद् उपचारेण (परम्परया) वा शब्देनैव सम्बद्धा भवति तस्या एव शब्दवृत्तित्वं न्याय्यम्। अभिधायाः साक्षात् शब्दसम्बद्धत्वात् तस्याः शब्दवृत्तित्वं निर्विवादम्। वस्तुतोऽर्थगताया अपि लक्षणाया उपचारेण शब्दगतत्वमपि यथाकथञ्चिदभ्युपगच्छामः। शब्दार्थभिन्नेष्वपि विद्यमानतया सर्वैर्ध्वनिवादिभिः प्रतिपाद्यमानाया व्यञ्जनायाः कथं वा शब्दवृत्तित्वमुपपद्यते? उक्तं हि मम्मटेन पञ्चमोल्लासान्ते—"न च (ध्वननम्) उभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः। न च शब्दानुसार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेः" इति। रससिद्धान्तो भरतेन रूपकाण्येव मनसिकृत्य प्रवर्तित इति किल

१. का० प्र०, का० १; २ तत्रैव, का० २०; ३. तत्रैव, का० ७।

निर्विवादम्। विभावानुभावव्यभिचारिणां च रसव्यञ्जकता प्रतिपाद्यते ध्वनिवादिभिः। नायिकानायकोद्यानादिषु विभावेषु, नायिकानायकचेष्टादिष्वप्यस्ति व्यञ्जना-व्यापार इति किल तस्यार्थः। तथा च व्यञ्जनायाः शब्दवृत्तित्वं कथं वा भवेदिति चिन्तनीयम्।

वाक्यश्रवणसमनन्तरमेव विदितवाच्यार्थस्य पुंसो मनसि तद्वाच्यार्थसम्बद्धा असम्बद्धाश्च अनेके अर्थाः (भावाः) स्फुरेयुः। "एकघण्टानन्तरं ममापवरकमागम्यताम्" इत्युन्नताधिकारिणा उक्तस्य निम्नस्तरीयस्याधिकारिणो मनसि "किं मया किमप्यकार्यं कृतम्? किं वासौ मां प्रक्ष्यति? किं कुत्रापि मां प्रेषयिष्यति? किमहं स्थानान्तरं प्रेषयिष्ये?" इत्यादिका नैके भावास्तस्मिन् घण्टापरिमिते काले निरन्तरम् उद्भूवेयुः। एवं "श्व आगम्यताम्" इति नूतनतया मुख्यमन्त्रितापदं प्राप्तवता उक्तो विधानसभासभ्यः (एम्० एल्० ए० )—"किं मे मन्त्रिपदं दास्यति? दास्यति चेत् कीदृशम्? तत्प्राप्त्यनन्तरं कथं वा मया स्वस्वीयोद्धारः कर्तव्यः"? इत्याद्या भाव-परम्परया सर्वामपि तां निशां जाग्रदेव यापयति। किं सर्वेऽप्येते भावा (अर्थाः) उन्नताधिकारिणा, मुख्यमन्त्रिणा चोक्ताभ्यां वाक्याभ्यां व्यञ्जनया प्रतिपाद्यन्त इति वक्तुं शक्यते? "गतोऽस्तमर्कः" इति वाक्यस्य श्रवणेन तेषां तेषां मनसि सञ्जातस्यार्थ-ज्ञानस्य व्यञ्जनावृत्तिजन्यत्वोक्तिरप्येतादृश्येव। पूर्वोक्तभावपरम्पराया अपि वक्तृ-बोद्धव्यविशेषजन्यत्वमस्त्येव।

अत एव मीमांसकादिशास्त्रपरिहासपूर्वकमभिनवगुप्तेन दत्तहस्तावलम्बोऽपि आनन्दवर्धनेन स्थापितोऽयं ध्वनिसिद्धान्तः पश्चात्तनैर्बहुभिरालङ्कारिकमूर्धन्यै-रुपेक्षितः। सिद्धान्तमिमं खण्डयता महिमभट्टेन **व्यक्तिविवेक**नामा कश्चिद् ग्रन्थ एव निर्मितः। कुन्तकोऽपि वक्रोक्तेरतीवव्यापकप्रवृत्तितामुपपादयन् ध्वनिभेदान् सर्वान् वक्रोक्तावेवान्तर्भावयितुं प्रावर्तत। धनञ्जयधनिकभोजादयोऽपि नैवात्र श्रद्धालवोऽ-भूवन्।

बहुषु स्थानेषु वाच्यार्थादतिरिक्ततया प्रतीयमानोऽप्यर्थः कश्चिदस्तीति नेद-मविदितं प्राचामालङ्कारिकाणाम्, पर्यायोक्त-समासोक्ति–अप्रस्तुतप्रशंसा–व्याजस्तुत्या-दिषु तत्सत्तां तत्तदलङ्कारलक्षणोदाहरणादिभिः स्पष्टीकुर्वताम्। प्रसङ्गवशेनानन्द-वर्धनेनाप्ययं विषयः प्रतिपादितः; परन्तु प्राञ्च आलङ्कारिकाः प्रतीय-मानस्यास्यार्थस्य ध्वनिरिति नाम नैव चक्रुः, नापि वायं काव्यात्मेति उज्जुघुषुः। 'गम्यार्थः', 'प्रतीयमानार्थः' इत्यादिभिरेवायं निरदिश्यत तैः। सोऽयं प्रतीयमानोऽ-र्थोऽपि शब्दैः सुदूरप्रसारिण्या शक्त्यैव बोध्यत इति तेषामाशयः। शब्दा अभिधया अर्थान् बोधयन्ति। तत्साहाय्येनैव यावानर्थो बुबोधयिषितो वक्ता तं समधिगच्छन्ति

श्रोतार इति ते अभिप्रयन्ति। अत एवाह भट्टोद्भटः **काव्यालङ्कारसारसङ्ग्रहे** व्याजस्तुतिप्रकरणे —

"शब्दशक्तिस्वभावेन यत्र निन्दैव गम्यते।
वस्तुतस्तु स्तुतिः श्रेष्ठा व्याजस्तुतिरसौ मता" ॥ इति।

तद्व्याख्यायां चेन्दुराजेनैवं प्रत्यपादि—"यत्र शब्दानाम् अभिधायकानां या शक्तिः अर्थप्रत्यायनौन्मुख्यं तस्या यः स्वभावो नियतार्थनिष्ठत्वात्मकस्तेन निन्दा गम्यत एव। न त्वसौ निन्दैव, पदार्थपर्यालोचनसामर्थ्योत्थायां स्तुतौ वाक्यार्थीभूतायामवान्तरवाक्यार्थत्वात्" इति वाक्यश्रवणसमनन्तरं निन्दैव स्फुरति; परन्तु पदार्थपर्यालोचनायां तस्या अनुपपन्नत्वात् स्तुतिर्गम्यते, यतस्तात्पर्यविषयत्वात् स्तुतिरेवात्र वाक्यार्थः। तत्र च निन्दा अवान्तरवाक्यार्थ इति भावः। अत्र पदार्थपर्यालोचनसामर्थ्यमित्यस्य तात्पर्यज्ञानमित्यर्थः, शब्दानामर्थप्रत्यायनौन्मुख्यं तावत्पर्यन्तं प्रसरतीति भावः।

अनेन च वाक्यार्थनिर्णये तात्पर्यस्य प्राधान्यं स्पष्टीभवति। एषामियं रीतिः — "सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः"इत्येतत्सदृश इति प्रतिभाति। अतस्तात्पर्यादिसहकृतया अभिधयैव सर्वेऽप्यर्था बोध्यन्त इति वक्तुं शक्यते। लक्षणास्थलेऽपि तात्पर्यस्य प्राधान्यं प्रसिद्धमेव। अत एवासौ तात्पर्यानुपपत्तिमूलेत्युच्यते। "गङ्गायां घोषः" इत्यत्र हि वक्तुर्विवक्षामनुरुध्य गङ्गाशब्दो गङ्गातीरं लक्षयतीत्युच्यते। यदि तस्य विवक्षा अन्यथा भवति तदा घोषशब्दस्यैव लक्षणया तिमिङ्गिल इति वा प्लवसंघात इति वा अर्थो वक्तव्यः स्यात्।

तात्पर्यस्यापि न स्वतन्त्रतया वृत्तित्वमावश्यकम्। वक्तृगता विवक्षैव हि वाक्ये तात्पर्यमित्यभिधीयते। यदाहुः शङ्करभगवत्पादाः "विवक्षितगुणोपपत्तेश्च"[1] इति ब्रह्मसूत्रस्य भाष्ये—"वक्तुमिष्टा विवक्षिताः। यद्यप्यपौरुषेये वेदे वक्तुरभावान्नेच्छार्थः सम्भवति, तथाप्युपादानेन फलेनोपचर्यते। लोके हि यच्छब्दाभिहितमुपादेयं भवति तद्विवक्षितमित्युच्यते, यदनुपादेयं तदविवक्षितमिति, तद्वद्वेदेऽप्युपादेयत्वेनाभिहितं विवक्षितं भवति, इतरदविवक्षितम्। उपादानानुपादाने तु वेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते" इति।

"तृणान्यङ्कुरयामास विपक्षनृपसद्मसु" इत्यादिषु योऽयमन्योऽर्थः प्रतीयते तत्र कस्यचिद् हेतुहेतुमद्भावस्य ज्ञानमुपकरोति। केषुचिद् अनुमानमपि। काव्यगतस्यास्य दुष्टहेतुजन्यत्वमपि भूषणमेव न दूषणम्, काव्यगतत्वादेव। न ह्यत्र कस्यचिद्

---

१. ब्र० सू० १।२।२।

ज्ञानस्य प्रामाण्यम् अप्रामाण्यं वा सिषाधयिषितम् । अनुमानालङ्कारे यादृशमनुमानत्वं तादृशेनैवालमत्रापि, तत्र साध्यसाधनभावादेः कविप्रतिभामात्रकल्पितत्वात् । वाच्यार्थज्ञानानन्तरं श्रोतुर्मनसि नैके भावा उत्पद्येयुः । कस्य मनसि को भाव उत्पद्यत इत्यभ्यूहितुमपि न शक्यते । अङ्गीकृतमेव हि ध्वनिवादिभिः "वक्तृबोद्धव्यकाकनाम्"[1] इत्यादि । कार्यकारणभावप्रदर्शनेन तेषां भावानां समर्थनं दुःशकमेव । तेषु केषाञ्चिद् व्यङ्ग्यार्थत्वमभ्युपगम्य व्यञ्जनाव्यापारेण ते बोध्यन्त इत्युक्तिमात्रेण न हि ते उपपादिता भवन्ति । युक्तमिदमतः प्रतिभाति यद् अभिधैकैव शब्दवृत्तिः, लक्षणावृत्तेर्वृत्तिता लाक्षणिक्येव । व्यङ्ग्यार्थतया अभिमन्यमानानां सर्वेषामप्यर्थानां वाच्यार्थ एव मूलं चेति । सर्वथा पुनःपरिशीलनीयोऽयं ध्वनिसिद्धान्तः परित्यक्ताभिमानैस्तत्त्वबुभुत्सुभिः ।

"किमेतावता ध्वनेर्न किमपि प्राधान्यं काव्ये ?" इति प्रश्न उदेति । काव्ये प्रतीयमानार्थस्य वैशिष्ट्यं न केनाप्यपोहितुं शक्यते । न केवलं काव्ये, लोकव्यवहारेऽपि वाच्यार्थमात्रबोधकपदानां प्रयोगात् तदतिरिक्तार्थबोधकानां पदानां प्रयोगोऽधिकं चमत्कारजनक इत्यत्र न कस्यापि विप्रतिपत्तिः । व्यञ्जनाख्यायाः स्वतन्त्रायाः शब्दवृत्तेरङ्गीकार एवास्माकं विप्रतिपत्तिः । आनन्दवर्धनेन सोदाहरणं प्रतिपादिताः प्रतीयमानार्थभेदास्तस्य सहृदयशिरोमणितां स्पष्टीकुर्वन्ति, अन्येषां च ( कुन्तकक्षेमेन्द्रादीनाम् ) भवन्ति पथप्रदर्शकाः । ते सर्वेऽपि वाच्यार्थसन्निवेशविशेषभूतार्थालङ्कारवत् प्रतीयमानार्थसन्निवेशविशेषा एव । प्रतीयमानास्ते सर्वेऽप्यर्थाः श्रोतॄणां भावनाविशेषाद् वाच्यार्थज्ञानानन्तरबोध्या एवेति व्यञ्जनायाः पृथग्वृत्तिताङ्गीकारो नैवावश्यक इत्येव वयं वदामः । व्यञ्जकत्वमर्थ एव दृश्यत न शब्दे । यदि यत्र क्वचिद्वा दृश्यते तत् 'धिक्', 'हा', 'हन्त' इत्यादिपदगतव्यञ्जकतासदृशमेव । काव्यप्रकाशे नवमोल्लासे श्लेषप्रकरणे—"शब्दश्लेष इति चोच्यते अर्थालङ्कारमध्ये च लक्ष्यत इति कोऽयं नयः ?" इति पृच्छति मम्मटः । "व्यञ्जकता वाच्यलक्ष्यव्यङ्ग्यार्थगता, कामिनीकटाक्षादिगतेति चोच्यते, व्यञ्जनायाश्च शब्दवृत्तिता अङ्गीक्रियत इति कोऽयं नयः" इति वयमपि तं प्रष्टुं शक्नुमः ।

आनन्दवर्धनेनैव नैके ध्वनिभेदाः प्रकल्पिताः । तेषामपर्याप्ततामिव मन्वानैः पश्चात्तनैरालङ्कारिकैस्तत्तद्भेदसंसृष्टिसङ्करादिकृतानि नैकसहस्राणि भेदानां परिगणितानि येषामुदाहरणान्यभ्यूहितुमपि न शक्यन्ते, सहृदयहृदयोद्वेजकतामात्रप्रयोजनानेतानुपेक्ष्य पण्डितराजेन षड्विंशतिरेव भेदाः प्रतिपादिताः ।

---

१. का० प्र० ४।२ ।

यदा कश्चित्सिद्धान्तः प्रचुरं प्रचारमधिगच्छति तदा अनेके अस्थानेऽपि तं प्रसञ्जयन्त आत्मनो वैदुष्यं प्रकटीचिकीर्षन्ति । इदमेव संवृत्तं ध्वनिसिद्धान्त-विषयेऽपि । अनेके काव्यनाटकादीनां व्याख्यातारः "अत्रास्य पदस्य प्रयोगाद् इदं ध्वन्यते", "तत्र तस्य प्रयोगात् तद्ध्वन्यते" इत्यादि किञ्चिल्लिखन्तः स्वमनोगतान् भावान् सर्वानपि तत्र समारोप्य गभीरार्थाविष्कृतिचातुर्यमात्मनः प्रकटयन्ति, विशेषतश्च तत्तत्काव्यानां नाटकादीनां च प्रारम्भे । एतादृशमाकाशचित्रनिर्माणं न केवलमस्मदीयेषु आलङ्कारिकेषु, पाश्चात्त्येषु साहित्यविमर्शकेषु, तदनुसारिषु आधुनिक-भारतीयसाहित्यविमर्शकेष्वपि दृश्यते । अत एव सपरिहासमुच्यते—"षेक्स्पियरः किल स्वीयरूपकसम्बद्धायां कस्याञ्चित् परीक्षायाम् उत्तीर्णतां न लेभे, यतो रूपकाणि तान्यधिकृत्य ब्राड्लेनाम्ना विमर्शकाग्रण्या विरचिता ग्रन्था न पठिताः" इति । व्याख्या-तृभिरारोप्यमाणा एतेऽर्थाः कविना स्वप्नेऽपि न सम्भाविता इति तु निर्विवादम् ।

तदयमत्र संपिण्डितार्थः—प्रतीयमानस्यार्थस्यास्तित्वे न कस्यापि विप्रतिपत्तिः । वाच्यार्थात् स एव नितरां चमत्कारकारी इति काव्येषु तस्य प्राधान्यमूरीकर्तव्यम् ; परन्तु प्रतीयमानस्यास्यार्थस्य ज्ञानं वाच्यार्थज्ञानानन्तरमेव भवति, न पुनस्तज्ज्ञानं विना । अतः पृथग् व्यञ्जनायाः शब्दवृत्तिता नाङ्गीकर्तव्या । यदा एकः शब्दः प्रयुज्यते तदा स केवलं मुख्यमेवार्थमभिधत्ते । लाक्षणिकं वा व्यङ्ग्यं वार्थं न बोधयति । निरूढलक्षणाभिन्नेषु, सर्वेषु च व्यञ्जनास्थलेषु शब्दान्तरसन्निधि-रावश्यिकी । अतोऽपि व्यञ्जनाया न शब्दवृत्तित्वम् । शब्दार्थभिन्नेषु चेष्टादिष्वपि व्यञ्जनाऽङ्गीक्रियते, अतोऽपि नास्याः शब्दवृत्तित्वम् । सर्वत्रापि ध्वनेर्गवेषणम्, तेन च रमणीयतारोपणं सहृदयहृदयोद्वेजकम् । गुणालङ्कारशय्यपाकादीन् पृष्ठतः कृत्वा "सूर्यः अस्तं गच्छति" इत्यादिषु वाक्येष्वपि—"अयमर्थो ध्वन्यते, एषोऽर्थः प्रतीयते" इति कथनमात्रेण कथं वा तत्र सौन्दर्यं सम्पाद्येत ? "अयं रात्रौ जानुनो आश्लिष्य, दिवा आतपे स्थित्वा, सन्ध्ययोश्च वह्नेः समीपे उपविश्य शीतं गमयति" इत्युक्ते "अयं गृहवसनादिहीनो दरिद्रः" इति वस्तुनो वा, दैन्यविषादादिभावानां वा ध्वनि-रस्तीति कथनमात्रेण किमत्र रमणीयता अनुभूयेत ? यदि स एवार्थः —

"रात्रौ जानुर्दिवा भानुः कृशानुः सन्ध्ययोर्द्वयोः ।
एवं शीतं मया नीतं जानुभानुकृशानुभिः" ॥

इत्युपस्थाप्यते पदगुम्फनासौन्दर्येण, अनुप्रासेन, वृत्ते निबन्धनेन च ( वृत्तमपि शब्दालङ्कार इति महिमभट्टः ) चमत्कारजनकतास्तीति वक्तुं शक्यते । गुणालङ्कारा-दीन् विस्मृत्य ध्वनिर्ध्वनिरिति घोषणं निरर्थकम्, अतश्चाभिधयाऽवगतो मुख्यार्थ

एव उत्तरङ्गयति विविधान् भावान् सहृदयहृदयेषु तत्तत्पदविशेषप्रकरणादिसाहचर्यादित्यभ्युपगम एव श्रेयान् ।

तत्तद्ग्रन्थार्थमननैर्येऽर्था मे प्रास्फुरन् हृदि ।
समुपस्थापितास्तेऽत्र परीक्षायै विपश्चिताम् ॥

उक्तं हि आचार्येणाभिनवगुप्तेन —

ऊर्ध्वोर्ध्वमारुह्य यदर्थतत्त्वं धीः पश्यति श्रान्तिमवेदयन्ती ।
फलं तदाद्यैः परिकल्पितानां विवेकसोपानपरम्पराणाम् ॥ इति ।



# भाषाचिन्तने निघण्टोर्योगदानम्

डॉ० ओङ्कारनाथतिवारी
प्रधानाचार्यः
पटनास्थराजकीयसंस्कृतमहाविद्यालयस्य
बिहार-प्रदेशः

❀❀❀

ऋग्वेदे परमतत्त्वविदां चिदचिद्विशिष्टब्रह्मविचारव्यवहारप्रवर्तकानां महामहिमशालिनां महर्षिप्रवराणामभिव्यक्तिकौशलाङ्गस्वरूपनिर्वचनसमूहो लोकालोके समुपलभ्यते। स एव माध्यन्दिनसंहितायां शब्दव्याख्यानप्रदाया विद्यायाः स्वरूपे प्राप्यते[1]। अथर्वसंहितायान्तु शब्दव्युत्पत्तिप्रक्रियारूपव्यवहारेऽसावतिशयेनोपलभ्यते। अन्ततः कृष्णयजुर्वेदसंहितान्तर्गतब्राह्मणेषु तस्य विकासः पारिभाषिकशब्दनिचयानां व्याख्यानसमर्थसाधनस्वरूपेऽभिलक्ष्यते। अस्याः पद्धत्याः स्फुटतरविकासो ब्राह्मणवाङ्मयेषु नयनगोलकविषयमायाति। एवंप्रकारेण वैदिकवाङ्मये भाषाचिन्तनस्येयं विचारधारा आचार्याणामक्षुण्णभगीरथप्रयासेन भव्यविस्तारवत्या निर्वचनभागीरथ्याः स्वरूपे परिणता बभूव। अभिव्यक्तिकौशलाङ्गस्वरूपेऽङ्गीकृतेयं विद्या कालान्तरे आवश्यकतामवाप। अर्थाद् वैदिकभाषाया दुरूहशब्दानां सुगमतया व्याख्यानार्थं निर्वचनविद्योपादेयता तदाश्रयत्वेन प्रतीताऽभवत्।

अस्मिन्नेव काले भाषाध्ययने नव्याया भव्याया एकस्या विद्यायाः प्रादुर्भावोऽभूत्। वैदिकवाङ्मयेषु निर्वाचितशब्दानां सङ्कलनपुरस्सरं तद्व्याख्यानप्रणाली समारब्धा। प्रारम्भे पर्यायवाचकशब्दानां चयनपूर्वकं सङ्कलनं विधाय बहूनां कठिनशब्दानां सहजस्वाभाविकार्थज्ञानमाचरितम्। माध्यन्दिनतैत्तिरीयसंहितयोस्तथा कतिपयश्रौतसूत्रेषूपलब्धायाः "अघ्न्या"या दशसंज्ञायाः सङ्कलनं सम्भवत एतद्दिशात्मकप्रयासस्य प्राचीनतमो[2]ऽवशेषो विद्यते। एवमेव कृष्णयजुःपरम्परायां सङ्कलिता जलपर्यायवाचकाः शब्दा अपि एतद्दिशामेव सङ्केतयन्ति।

---

१. धान्यमसि, धिनुहि देवान्। ( मा० सं० १.२० )

२. इडे, रन्ते, हव्ये, काम्ये, चन्द्रे, ज्योतेऽदिते, सरस्वति, महि, विश्रुति। एता ते अघ्न्ये नामानि। (मा० सं० ८।४३, तै० सं० ७।१।६।१८) इडे, रन्तेऽदिते, सरस्वति, प्रिये, प्रेयसि, महि, विश्रुतेत्येतानि ते अघ्निये नामानि। (लाट्यायनश्रौतसूत्रे—३।६।३)। हव्ये, काम्ये, चन्द्रे, ज्योते, इले, रन्ते, गुष्टे, सूनरि। पञ्चविंशब्राह्मणम्—२०।१५।१५ तथा मानवश्रौतसूत्रम् ९।४।१ द्रष्टव्यम्।

वैदिकसंज्ञानां सङ्कलनपरम्पराया विकसितरूपाणामवाप्तिर्निघण्टुग्रन्थ-परम्परायामप्युपलभ्यते । स एव विख्यातो ग्रन्थो निघण्टुरस्ति[१] यस्य व्याख्यान-माचार्ययास्केन स्वनिरुक्तस्वरूपे व्यरचि ।

निघण्टूनामनेकत्वं श्रूयते, परन्तु दृश्यते नहि । अतो निघण्टूनां सङ्कलनेना-पूर्णपरितत्त्वेनापि मया कथनीयमेतावदवश्यं वर्तते यद् यास्कीयनिघण्टोः प्रागनेक-निघण्टूनां प्रादुर्भावा अभवन् । तेषु शाकपूणिना कृतस्य निघण्टोः प्रसिद्धिमवलोक्यते । दुर्गस्कन्दस्वाम्यात्मानन्दानां कथनेनेदं विज्ञायते यत्—

१. शाकपूणिना निघण्टुमेकं निर्माय तद्भाष्यमपि व्यलेखि । यद्भाष्यं निरुक्त-नाम्ना लोकैरालब्धमासीत्[२] ।

२. तस्य निघण्टौ यास्कीयनिघण्टुरिवादैवतात्मकं द्विविधं सङ्कलनमासीत्[३] ।

३. शाकपूणिमहोदयस्य निघण्टौ कतिचनैतादृशाः शब्दा अप्यासन्, येषां दर्शनं यास्कीयनिघण्टौ न जायते[४] ।

४. तस्मिन् बहूनां वैदिकशब्दानामर्थोपलब्धिर्यास्कीयनिघण्ट्वर्थेभ्यो भिन्नतराऽऽसीत्[५] ।

---

१. मान्दा, वाशाः, शन्ध्यूरजिराः । ज्योतिष्मतीस्तम स्वरीरुन्दतीः सुफेनाः । ( तै० सं० २।४।७।११ ) मान्दा, वाशा इति संयौति । नामधेयैरेवैता अच्छेति । अथो यथा ब्रूयाद-सावेहीति । एवमेना नामधेयैराच्यम्वयति । (९।१०) का० सं० १०।११।९ । मान्दा वाशाश्शुन्ध्यूवोऽजिरा, उन्दतीस्सुफेना ज्योतिष्मतीस्तमस्वतीः (१०) । 'मान्दा वशा' इत्येतानि वा अपां नामधेयानि । ( मै० सं० २।४।७) मान्दा वशा ज्योतिष्मतीरमस्वरीः शुन्धो, अजा, उन्दतोः, सुफेनाः । (८) मान्दा वशा ज्योतिष्मतीरमरस्वरीर् इत्येतानि वा अपां नामधेयानि ।

२. द्रष्टव्यम्—ऋग्वेदे (१।१६४।१४)—पर आत्मानन्दः चक्रम् =जगच्चक्रम् । भ्रमतीति वा, चरतीति वा चक्रमिति शाकपूणिः । ४० : उदकमिति सुखनामेति शाकपूणिः । ५२ : शाकपूणि-यास्कादिनिरुक्तेष्वपि व्याख्याभेद एव ।

३. द्र० स्कन्दमहेश्वरटीका, निरुक्तम्-१।४ भागः १, पृ० ४९ : दाश्वानिति यजमाननाम शाकपूणिना पठितम् । ( ऋ० भा० ६।६२।२ ) तथा च शाकपूणिना नद्यभिधायिनः सरस्वतीशब्दस्य परिगणने ।

४. द्र० निरुक्तम्-३।१०, निघण्टुः-२।१८ । स्कन्दस्वामी—शाकपूणेरतिरिक्ता एते विव्याक, विव्याच उरुव्यचाः, विव्ने ।

५. द्र० आत्मानन्द-ऋ० भा० १।१६४।४० : उदकमिति सुखनामेति शाकपूणिः । यास्क-निघण्टौ तथा निरुक्ते जलवाचक एवोदकशब्दः ।

५. तन्निघण्टौ शब्दानां क्रमः कस्मिंश्चित् सिद्धान्ते निर्धारित आसीत्। तस्मिन्नेवाधारे सङ्कलितशब्दानां [1]व्याख्यानमसम्पादयदिति सम्भाव्यते।

६. देवतकाण्डस्य भाष्ये लघुकायानां देवमन्त्राणां संख्याने प्रयासं चक्रे[2]।

७. पृथिव्यादिशब्दैरेव तन्निघण्टुप्रारम्भः[3] समजनि। शाकपूर्णेर्निघण्टौ नैघण्टुकादीनां त्रयाणां काण्डानां सम्भावना प्रतीयते। अवश्यं भाषित्वेन प्रथमं नैघण्टुककाण्डं द्वितीयञ्च दैवतकाण्डं वर्तते। यतो हि निखिलनिघण्टुसाहित्या-वशेषेऽद्यतने द्वयोरेव काण्डयोरवाप्तिर्जायते। तत्र—(१) यास्काचार्येण व्याख्यात-निघण्टुः, (२) द्वितीयः कौत्साख्याचार्येण प्रणीतोऽथर्ववेदीयनिघण्टुः। यास्कव्याख्यात-निघण्टोर्विवरणं भाषाचिन्तनमूल्याङ्कनञ्च प्रकृतस्थले वर्णितमास्ते। तद्यथा—

१. नाम —विश्वोपलब्धवाङ्मयेषु प्राचीनतमकोषेण यो ग्रन्थो गौरवान्वित आसीत्, तत्प्रसिद्धग्रन्थस्य बभूव नाम निघण्टुरिति। आचार्ययास्कः समाम्नायेति[4] नाम्नेममलङ्कृतवान्। एवंभूतान् समाम्नायग्रन्थान् 'एते निघण्टवः समाम्नायाः' इत्यवादिषुः[5]। प्रकाशमानेतं वेदान्निष्कासितशब्दजालं निगमनकारणान्निघण्टु-नाम्ना विभूषितम्[6]। एतेन विज्ञातं भवति यत् समाम्नायशब्दो निघण्टुशब्दश्च पर्यायवाचकत्वेन व्यवहृत इति नाम एव सङ्कलितस्वरूपं स्पष्टयति।

---

१. द्र० ८।५ दुर्गटीकायामुद्धृतो वार्तिककारेण।
क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्। प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्॥

२. स्कन्द ऋ० भा० ६।६१।२। तथा च शाकपूणिना नद्यभिधायिनः सरस्वतीशब्दस्य परिगणने 'अथैवा नदी'। चत्वार एव तस्या निगदा भवन्ति। दृषद्वत्याम्"""(ऋ० वे० ३।२३।४) चित्र इङाजा ''। (८।२१।१८) सरस्वती सरण्यूः"""(१०।६४।९) इमं मे गङ्गे (७५।५) पञ्चममप्युदाहरन्ति—अम्बित मे ''' (२।४१।१६) अत्रायं न षष्ठः परिगणित इति।

३. दुर्गटीका (८।५) शाकपूणिस्तु पृथिवी नामम्य एवोपक्रम्य स्वयमेव सर्वत्र क्रमप्रयोजन-माह।

४. निरुक्तम्—१।१ : समाम्नायः समाम्नातः स व्याख्यातव्यः।

५. तत्रैव—तमिमं समाम्नायं निघण्टव इत्याचक्षते।

६. तत्रैव—निघण्टवः कस्मात्? निगमा इमे भवन्ति—छन्दोभ्यः समाहृत्य समाहृत्य समाम्नातास्ते निगन्तव एव सन्तो निगमान्निघण्टव उच्यन्त इत्यौपमन्यवः। एवमेव क्लिष्टतराणां शब्दानां नामवाचकानां निगमात् प्रकरणमिदं नैगमकाण्डमिति व्युत्पत्तिं पुष्यति।

निघण्टव इति नाम समाम्नाये कोषे वा सङ्कलितपदानां स्वरूपं प्रकाशयति। अद्यतनभाषायामस्य कः पर्यायो भविष्यतीति कथनं दुर्लभम्।

निघण्टुनामविषये निम्नवार्ता ध्यातव्या—

i. यास्कात्पूर्वं शब्दोऽयं 'निघण्टव' इति—एवंप्रकारकग्रन्थेषु तथाऽस्मिन् ग्रन्थे सङ्कलितपदानां कृते बहुवचनान्तत्वेन प्रयुक्तो भवति स्म।

ii. प्रारम्भेऽयं शब्दः पदेभ्य एव प्रचलितोऽवलोकितः। पश्चादयमेतत्पद-कोषायापि व्यवहारपथमागतः।

iii. यास्कानन्तरं शब्दोऽयं ग्रन्थस्य कृते—एकवचनान्तत्वेन रूढितामाव्रजत्। अस्य ग्रन्थस्य हस्तलेखपुष्पिकासु तथान्यग्रन्थ एतदुद्धरणेषु निघण्टुरित्येकवचनान्तस्यैव प्रयोगः सम्प्राप्यते।

iv. नामेदं कालान्तरे शब्दकोषस्य सामान्यपर्यायो भूत्वाऽन्यविषयकशब्दकोषा-यापि प्रयुक्तोऽभवत्। अस्यां दशायां यद्विषयकशब्दानां यद्वा यद्ग्रन्थशब्दानां कोषोऽयं वर्तते, स विषयो ग्रन्थश्चैतत्पूर्वपदस्वरूपे प्रयोगमलभत[1]। प्रकृतग्रन्थो वैदिकनिघण्टुरिति नाम्ना[2] ख्यातिमगमत्।

विषयविवेचनम्—ग्रन्थोऽयं (१) नैघण्टुकः, (२) नैगम ऐकपदिको वा, (३) दैवत इति नामत्रयात्मकेषु त्रिषु काण्डेषु विभक्तोऽजायत। एषु नैघण्टुककाण्डस्य कायवैपुल्यं दृश्यते। अत्र त्रयोऽध्यायाः। प्रत्यध्यायमेकार्थवाचकशब्दानां बहूनि शकलानि तथाऽस्मिन् सर्वाधिकपदानामर्थात् चन्द्रवेदाग्निचन्द्रान्वित- (१३४१) पदानां सङ्कलनं राराजते।

२. नैगमकाण्डस्य त्रिखण्डनामक एकस्मिन्नध्यायेऽनेकार्थकानामपि चाज्ञात-व्युत्पत्तिमतामङ्काब्धिनेत्र- (२७९) सम्मितानां शब्दानां सङ्कलनं विद्योतते। दैवतकाण्डेऽपि षट्खण्डात्मकम् एकस्मिन्नध्याये विधुबाणेन्दुसम्मितानां देवतानाम्नां सञ्चयनं प्रतिभाति। एवं त्रिषु काण्डेषु चन्द्राब्धिसागरेन्दुसम्मितानां (१७७१)[3] पदानामवलोकनं जायते। एषु रसेन्दुवेदविधुसम्मिताः (१४१६) नामशब्दाः,

---

१. आयुर्वेदनिघण्टुः, नाम-निघण्टुः, नामलिङ्गानुशासनम्, अमरकोषः, भावप्रकाश-निघण्टुश्च।

२. तत्त्वबोधिनी, उणादिसूत्रम्-४८, वैदिकनिघण्टौ–'ओजः, वाजः, निघण्टुः' (२।९।१-२) इत्यादिषु बलनामसु 'तविषी'- (नि० २।९।१०) शब्दस्य पाठश्चेह मूलमिति बोध्यम्।

३. वस्तुतः १७७० संख्येयमौचित्यं विदधाति। नृ-प (४।१।३१) तथा दूतः (४।२।३) इत्याभ्यां न भवितव्यम्। तथा ५।३।२६ इत्यत्र 'इला' इत्यधिकेन भवितव्यम्। निरुक्तस्य पञ्चमाध्याये, पृ० ४२५, टि० १० एवं निरुक्तमीमांसायाम्, पृ० १७ द्रष्टव्यम्।

अनलेन्दुवह्निसम्मिता आख्यातशब्दाः, एकोनचत्वारिंशन्निपाता उपसर्गाश्च त्रयो विलसन्तितराम्[1]।

३. अद्यानुपलब्धनिरुक्तवार्तिकानुसारं यास्कात्प्राचीनाचार्यः शाकपूणिः स्वनिघण्टौ शब्दसङ्कलनं तत्प्रयोजनञ्चोक्तवान्[2]। प्रकृतनिघण्टौ नैवमस्ति। दुर्ग एतन्न्यूनतां पूरयितुं प्रयासान्वितोऽभूत्। अस्मिन्निघण्टौ कं सिद्धान्तमुररीकृत्य पदानां सङ्कलनं जातमिति विषयेऽत्र दुर्गप्रयासातिरिक्तः कस्यचनापि प्रयासो नावलोक्यते। तथापि विदुषां विचाराय निम्नसामग्र्यः प्रस्तूयन्ते—

(१) प्रथमाध्याये पृथिवीनद्यन्तरिक्षदिशामेघरश्मिजलादिभौतिकवस्तुवाचकानां तथा तत्सम्बद्धक्रियाकलापवाचकानां बाणेन्दुवेदसम्मितानां (४१५) पदानि सन्ति।

(२) द्वितीयाध्याये मनुष्यादारभ्य तदङ्गानामङ्गोपयोगिवस्तूनां सम्बन्धगतानां तथा विविधकर्मक्रियासम्बद्धानां रसेन्दुबाणसम्मितानि (५१६) पदानि दृष्टिपथमागतानि।

(३) तृतीयाध्याये 'बहुत' इत्यतः प्रारभ्य लघुमहद्विशेषणैः सुखादिभावप्रज्ञासम्बद्धविविधक्रियावाचकनभश्चन्द्रवेदसम्मितानां पदानां जालमस्ति।

(४) चतुर्थाध्याये खण्डत्रये क्लिष्टशब्दानां तथाऽनेकार्थकशब्दानां सङ्कलितानि-अङ्कसागरनयनसम्मितानि (२७९) पदानि द्योतन्ते। तत्र क्रमशः प्रथमखण्डे द्वाषष्टिपदानि[3], द्वितीयखण्डे चतुरशीति[4]पदानि तृतीयखण्डे च १३३ पदानि

---

१. विस्तारदृष्ट्या निरुक्तमीमांसायां पृ० १८-२० अवलोकनीयम्।

२. द्रष्टव्यम्—दुर्गटीकायाम्–८।४ (आनन्दाश्रम–सं०, पृ० ७४०) : शाकपूणिस्तु नाम्न्य एवोपक्रम्य स्वयमेव सर्वत्र प्रयोजनमाह। तदुक्तं वार्तिककृता—

क्रमप्रयोजनं नाम्नां शाकपूण्युपलक्षितम्।
प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्॥

३. वस्तुतः खण्डेऽस्मिन् (नृ च ४।१।३१) इति निरुक्तात्प्रक्षिप्त इवाभाति शब्दो ह्येकस्तस्मादस्मिन् वास्तविकीसंख्यैकषष्टिरेवावधार्यते।

(निरुक्तपञ्चमाध्यायः, पृ० ४२५, टि० १०)

४. अस्मिन्नपि खण्डे शब्द एकः (दूतः ४।२।३) अत्र वस्तुतां नोपयाति। अतोऽस्य खण्डस्य वास्तविकीसंख्या त्र्यशीति (८३) प्रतीयते। अग्रे सप्तमप्रकरणे दूत इति विषये द्रष्टव्या टिप्पणी।

विराजन्ते। यद्यप्येषां समेषामध्ययनं न पूरितम्, तथापि प्रथमखण्डीय-द्वाषष्टिपदानामध्ययनेनैवं निष्कर्षोऽधिगतः। तथा हि (क) ऋग्वेदसंहितायां द्वादशपदानि तद्रूपाधिक्यप्रयोगकारणाद् गृहीतानि विद्यन्ते, (ख) त्रिसंख्यकपदानि एतद्रूपेष्वर्थविशिष्टतायाः कारणात्, (ग) पदद्वयमनवगमकारणात्, (घ) ऋग्वेदे समानसंख्यायां पदद्वयस्य रूपद्वयस्य च प्रयुक्तत्वात् स्वाभाविकविभक्तिवचनयोः (प्रथमैकवचनयोः) विपरिणम्य सङ्कलनविषयतामापतितानि। (ङ) पदमेकं विभक्तिवचनयोः सन्देहहेतुना तथा (च) अन्यपदं[1] तत्पदे व्याख्याभेदं प्रदर्शयितुं गृहीतम्। अत एवमाधारं हृदयङ्गमं कृत्वा कथयितुमेवं समर्थोऽहं यदस्याध्यायस्य शेषपदान्यपि कयाचिद्युक्त्या सम्मितान्येव वर्तन्ते।

(५) पञ्चमाध्याये विधुबाणेन्दुसम्मितानां (१५१)[2] देवतानाम्नां सङ्कलनं वैज्ञानिकदिशायां वर्तते।

अत्र (क) पृथिवीलोकेऽन्तरिक्षे द्युलोके च निवासाधारे (अ) प्रधानदेवतानां (आ) गौणदेवतानां पुनः (इ) देवरूपे स्तुत्यान्यचेतनानाम्, तथाऽचेतनपदार्थानां नामानि षट्सु खण्डेषु सङ्कलनमाप्तानि[3]। अस्मिन्नध्याये यास्कस्य कथनमिदं यत् प्राचीना आचार्याः स्वस्वनिघण्टौ देवतानां तथा देवताविशेषणानामपि सङ्कलनमाचरन्ति स्म। परिणामतस्तदाकारो विशालत्वमागच्छति स्म। एवंभूतानां पदानां सङ्ग्रहणं स्नातब्राह्मणानुलेपनमिव, बुभुक्षिताय भोजनदानमिवाथ च पिपासुकाय जलप्रदानमिवाभाति। वाक्यगतस्नातबुभुक्षितपिपासुकानां विशेषणीभूतानां शब्दानां ब्राह्मणसमस्थानित्वाद विशेषणरूपाणां सङ्कलनं न कृतम्। मया तु तान्येव नामपदानि

---

१. विषयेऽस्मिन विस्तारार्थमग्रे (४।१) निघण्टौ केषाञ्चिम्, पदानामाकलनं तथा निरुक्तचतुर्थाध्याये तेषामुपरि तत्तन्मन्त्राणामुद्धरणप्रयोजनञ्चावलोक्यम्।

२. पञ्चमाध्यायस्य तृतीयखण्डे ५।३।२६ इति रूपे श्रद्धापृथिव्योर्मध्येऽधिकेनैकशब्देन युक्तत्वादस्याध्यायस्य वास्तविकी संख्या (१५२) इत्यौचित्यदृशा गम्यते।

३. निरुक्तम्—७।१४: अग्निः पृथिवीस्थानः, तं प्रथमं व्याख्यास्यामः, ९।१: अथ यानि पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते, तान्यतोऽनुक्रमिष्यामः। १०।१: अथातो मध्यस्थाना देवताः। तासां वायुः प्रथमागामी भवति। १२।१: अथातो द्युस्थाना देवताः। तासामश्विनौ प्रथमागामिनौ भवतः। अत्र विषये दुर्गटीकाऽपि (८।४) द्रष्टव्या।

सङ्गृहीतानि येभ्यो देवतानां प्रमुखतयाऽभिधानं सञ्जायते[1]। यास्केन स्वनिघण्टौ देवतानामसङ्कलनाधारोऽयमवादि। तद्यथा—

(क) सर्वस्मात्पूर्वं सूक्तवर्णितानां देवतानां तदनन्तरं (ख) कर्मकाण्डेष्वाहुत्यधिकारिदेवतानां (ग) ऋषिवर्णितदेवतानामन्ते (घ) गौणरूपेणान्यस्तुतदेवतानां नामसङ्कलनं सम्पादितम्[2]। एतद्विवरणेनैवं वाच्यं यदस्मिन् निघण्टौ पदानां सङ्कलनं वैज्ञानिकाधारे व्यवस्थितम्। विशेषतस्तु कश्चिद्विद्वान् स्वश्रमपरिणामे वैशिष्ट्यमाख्यातुं समर्थः।

४. सत्यामस्यामवस्थायामपि पदसङ्कलनत्रुटयः आपाततः प्रतीयन्त एव। यथा—(१) १।१६; २।६; २।१८-१९, ३।११,१४,२१ खण्डेषु नामपदान्यप्याख्यात एव सङ्कलितानि। ( २ ) ३।२९ : इत्येकस्मिन् शकले नामसु समाख्यातपदानि निहितानि। (३) २।६, ८,१८ खण्डेषु—एकस्यैव धातोरेकस्यैव लकारस्यैकस्यैव पुरुषस्य च रूपं विविधात्मकं पृथक् पदानां स्वरूपे सङ्कलितं वर्तते। (४) एकस्यैव धातोः पृथक् पृथक् लकाराणां २।१८ खण्डे तथा विकरणानां १।१६ खण्डे रूपाण्यभिहितानि पृथक्-पृथक् पदानां स्वरूप इति।

(५) ३।११ इति खण्डे निरुपसर्गं 'चष्ट' इति तथा सोपसर्गं 'विचष्ट' इति रूपे चाख्यातपदं पृथक् पृथगाजल्पितम्।

५. को निघण्टुरचयिता को निघण्टुप्रणेतेति विषये प्राचीनकालादेव मतद्वयस्य स्फोटः—( १ ) निघण्टुग्रन्थः कतिपयैर्विरचितः। आचार्यदुर्गस्य मतमिदमस्ति यदृषयः सङ्कलितवन्तो निघण्टुम्। एतन्निष्कर्षाधारो यास्ककथनमेव। तद्यथा—(१) मन्त्राणां मौखिकाध्यापनक्रियाकलापस्यापन्ना अवराः ( अग्रिमपाठकाः ) ग्रन्थस्यास्य वेदवेदाङ्गयोश्च सङ्कलनमाशंसितवन्तः कृतवन्तो[3] वा। येनैतद्ग्रन्थतत्त्वार्थ-

---

१. निरुक्तम्—७।१३ द्रष्टव्यम्। अथोताभिधानैः संयुज्य हविश्चोदयति। 'इन्द्रायां होमुच' मैत्रायणी-सं० २।२।१० इति। तान्यप्येके समामनन्ति। भूयांसि तु समाम्नानात्। यत्तु संविज्ञानभूतं स्यात्प्राधान्यस्तुति, तत्समामने। अथोत कर्मभिर्ऋषिर्देवताः स्तौति वृत्रहा, पुरन्दर इति। तान्यप्येके समामनन्ति। भूयांसि तु समाम्नानात्। व्यञ्जनमात्रन्तु तत् तस्याभिधानस्य भवति। यथा—ब्राह्मणाय बुभुक्षितायौदनं देहि। स्नातायानुलेपनम्। पिपासते पानीयमिति।

२. तत्रैव द्रष्टव्यम्—इतोमा देवता अनुक्रान्ताः सूक्तभाजो, हविर्भाज ऋग्भाजश्च भूयिष्ठाः, काश्चिन्निपातभाजः।

३. १।२०१ : साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि।

प्रकाशने सौविध्यमागतम्। दुर्गेणानेन ग्रन्थेन निघण्टुर्गृहीतः[1]। (२) 'दावने-अकूपारस्य'[2] इत्येतद् व्याख्याने समुद्धृतमन्त्रे[3] शब्दयोरेतयोः क्रमो वैपरीत्यमभजत्। यदि निघण्टुकारोऽपि यास्क एव स्यात् तदैक एव व्यक्तिर्मूले तथा तद्व्याख्यायामकारणात् पदविपर्ययं कथं कृतवानतः सिद्ध्यति यन्निघण्टुकारोऽन्यस्तथा निरुक्तकारस्तद्भिन्न[4] इति।

ऋग्वेदसंहितायां 'दावने' इति पदं त्रिंशद्वारं जंगम्यमानमभूत् तथा 'अकूपारस्य' इति पदं वारमेकं समागच्छत्। एतदतिरिक्ते 'अकूपारः' रूपेऽपि ऋग्वेदे १०।१०९।१ इत्यत्रैककाले समाव्रजत्। अस्यां स्थितौ यद्यनयोः पदयोः सहैव ग्रहणं तदा ऋ०वे० ५।३९।२ इत्यत एव स्यात्। निघण्टौ सङ्कलनकृदाचार्योऽनयोरेकयोग एव प्रयोगं सम्पादितवान्। अतस्तद्दृष्टौ नायं मन्त्र इत्यवाच्यम्। यदा यास्काद् भिन्नो व्यक्तिरिमं मन्त्रं जानन्नपि यदि क्रममभङ्क्त तदा यास्केन जाते क्रमभङ्गे किमन्तरः? अयमपि सम्भाव्यो यद् निघण्टौ क्रमस्य मन्त्रानुकूलत्वमपि दुर्गाचार्यपर्यन्तं लेखकानां प्रमादात् क्रमविपर्ययोऽभवत्।

(अ) श्री आर० डी० कर्मकरस्य[5] वक्तव्यमिदं यत्—

(१) नैघण्टुककाण्डस्य रचयितुर्भिन्नः कश्चन नैगमकाण्डस्य द्वयखण्डस्य कर्तेति। (१) अत्र 'अन्धः' (४।२।६), २. वराहः (२१), ३. स्वसराणि (२२), (४) अर्थः (२३), (५) सिनम् (२८), (६) वयुनम् (४८) इत्येतानि पदानि यथासंख्यम् २।७।१, १।१०।१३, १।९।५, २।५।५, २।७।८, ३।९।१० इत्येतेषु समाव्रजन्। यद्युभयोर्लेखक एक एव भवेत् तदा सः पूर्वप्रयुक्तपदानां पुनः कथं प्रयोगं चकार।

एषा पुनरुक्तिराचार्यदुर्गस्य मते समुचितैव। नैघण्टुककाण्डे पर्यायत्वे तेषां शब्दानां सत्त्वात्सङ्कलनकर्मणि किमपि तत्प्रयोजनं सिद्ध्यति। अनेकार्थसंस्कारेणानवगतसंस्कारेण वा संस्कृतेऽपि काण्ड ऐकपदिकनाम्नि तत्पदस्य प्रयोगोऽर्हो नैघण्टुकस्येव न ह्यपि तु दैवतकाण्डस्यापि कतिपयशब्दानां पूर्वोक्तकारणयोरन्यतरकारणात्स-

---

१. दुर्गटीका १।२० : इमं ग्रन्थं = गवादिदेवपत्न्यन्तं समाम्नातवन्तः।

२. निरुक्तम्—४।१।३२-३३।

३. विद्याम तस्य ते वयमकूपारस्य दावने। (५।३९।२)

४. दुर्गटीका—४।१८ : एतस्मिन् मन्त्रे 'अकूपारस्य दावने' इत्ययमनयोः पदयोरनुक्रमः, समाम्नाये पुनर् 'दावने अकूपारस्य' इति मन्त्रपाठव्यतिक्रमेणानुक्रमः। तेन ज्ञायतेऽन्यैरेवायमृषिभिः समाम्नायः समाम्नातोऽन्य एव चायं भाष्यकार इति। एको हि समाम्नातं भाष्यं च कुर्वन् प्रयोजनाभावादेकमन्त्रगतयोः पाठानुक्रमं नाभङ्क्ष्यत्।

५. श्रीविष्णुपदभट्टाचार्येण यास्कनिरुक्तस्य २७-२९ पृष्ठे समुद्धृतं द्रष्टव्यम्।

माम्नातो जातः। अतः काण्डप्रकृतिभेदाद् विभिन्नकारणैरेक एव शब्दो भिन्न-काण्डेषु प्रयुक्तः।

(२) प्रथमखण्डे १. विद्रथे, द्रुपदे (१८-१९), २. दावने अकूपारस्य (३२-३३) एतद्युगलमेकस्मिन्नेकस्मिन् मन्त्र एष समाम्नजितवान्। तथा निघण्टौ यथाश्रुत-विभक्तिवचनान्तमेवाचक्षितम्। द्वितीयकाण्डे १. बह्रिष्ठः, दूतः (२-३), २. कुटस्य, चर्षणिः, इत्येतद्युगलयाः पूर्वस्य मन्त्रगतसन्धिं त्रोटयित्वा तद् विसर्गान्त-माभहितम्[1]। यदान्यतरयुगलं 'यथाश्रुतं' विभक्त्यन्तमेवास्ति।

तृतीयखण्डस्य १. अनिवार्य-किमीदिने (४३-४४) २. चनः, पचता (६४-६५) इत्येतद्युगलं यथाश्रुतं वर्तते; परन्तु ३. श्रुष्टी, पुरन्धिः, (५०-५१) तथा ४. सदान्वे, शिरिम्बिठः (१२०-१२१) इत्येषां मन्त्रगतद्वितीयैकवचनस्य षष्ठ्येकवचनस्य च प्रथमाविभक्तौ विपरिणामोऽभवत्। यदि प्रथमखण्डीयं युगलं यथाकर्णितमेव रक्षितव्यम्, तदावशिष्टखण्डद्वयस्य युगलं यथा स्यात् तथैव कथं न रक्षितव्यम्। अनेन प्रमाणितो भवति यदस्य काण्डस्य प्रथमभित्तात्मिका तृतीय-शकलात्मिकाकृतिश्च नैकव्यक्तिविशेषत लक्ष्यते।

अत्र प्रश्नोऽयं यत् तृतीयखण्डस्य सङ्कलयितयेव युगलद्वयं यथाकर्णित-विभक्तावेव व्यवहरति तदावशिष्टद्वयस्यैव विभक्तिं कथं विपरिणमयति? अतो यथा तृतीयखण्डे यथाकथितविभक्तौ समाम्नाने सत्यप्यपवादे तृतीयखण्डस्य कृतिरेकस्यैव रचयितुस्तथैव शेषेषु खण्डेषु किञ्चिद् विपरिणामस्य सत्त्वेऽसत्त्वेऽपि तत्सङ्कलयिता भिन्नो न भवति।

डॉ० लक्ष्मणस्वरूपोऽगादीद्[2] यदनेकपूर्वजातानां संयुक्तप्रयासस्य परिणामो निघण्टुग्रन्थोऽनुमीयते; किन्त्वस्मिन् कथने युक्तिं नाप्रदर्शयत्।

श्रीवैजनाथकाशीनाथराजवाडेमहोदयोऽपि[3] श्रीकर्मकरवत् युक्तिबलेनास्य भिन्नो भागो विभिन्नविदुषां हस्तकौशलमित्यमन्यत।

आचार्ययास्ककृतो निघण्टुरस्ति। (अ) आचार्यमधुसूदनसरस्वतिमहोदयोऽपि (प्रस्थानभेदे) यास्ककृतो निघण्टुरित्याचचक्षे[4]। (आ) आचार्यवेङ्कटमाधवोऽप्येनं

---

१. वस्तुतः सन्ध्यभाव एवोचितः।

२. दी निघण्टु एण्ड दी निरुक्त, भूमिका, पृ० ९-१० द्रष्टव्यम्।

३. द्रष्टव्यो यास्कजनिरुक्तस्य २१५ पृष्ठे।

४. तत्रापि निघण्टुसंज्ञकः पञ्चाध्यायात्मको ग्रन्थो भगवता यास्केन कृतः।

यास्ककृतमङ्गीकृतवान्[1]। (इ) पं० सीतारामशास्त्रिमहानुभावोऽपि हिन्दीनिरुक्त-भूमिकायां[2] यास्ककृतो निघण्टुरिति साधितवान्। तद् युक्तिसारो निम्नाङ्कितो वर्तते—

(१) यथा क्त्वा-प्रत्ययान्तपदस्य तेन सह प्रयुक्तक्रियापदस्य चैक एव कर्ता भवति तथैव 'समाम्नायः समाम्नातः'। स व्याख्यातव्य इति निरुक्त-(१।१) वाक्यस्य क्तप्रत्ययान्तस्य 'समाम्नातः' इति पदस्य तथा तव्यप्रत्ययान्तस्य 'व्याख्यातव्यः' इति पदस्य चाभिन्नः कश्चिदेक एव प्रयोक्ता भवेत्। स्वोपज्ञ-व्याख्यानस्यार्हतां प्रतिपादयितुं पूर्वमेव निघण्टोः सङ्कलनं जातम्। इदानीन्तद्-व्याख्या करणीयेति कथनं सामर्थ्यं निदधाति; परन्तु जना अन्येऽपि निघण्टुसङ्कलनं कृतवन्तस्तद्व्याख्या कार्येति कथनं साहसमात्रमिति। अद्यावधि संस्कृतस्य विशाल-वाङ्मयेऽथ चान्यभाषाविज्ञानपरिधिं गते वाङ्मये नैवं व्याख्यां कश्चन प्रारेभे। अतोऽत्र पूर्ववाक्यगतः 'समाम्नायः समाम्नातः' इति यास्ककृतनिघण्टुसमाप्तिं सूचयति, तथाग्रिम 'स व्याख्यातव्यः' इति वाक्यं च तद् भाष्यारम्भं ज्ञापयति।

(२) पश्चादुद्धृतस्य[3] निरुक्तस्यैकस्मिन्ननुच्छेदे यास्कोऽन्याचार्यसमाम्नानेष दोषं प्रदर्शयन् स्वसमाम्नानसिद्धान्तमपुष्यत्। एतेन सिद्ध्यति यदालोच्यनिघण्टु-रचयिता यास्क एवास्ति। एतद्युक्तिविषयेऽपरमपि चर्चयितव्यमावश्यकम्—

(i) डॉ० लक्ष्मणस्वरूपः सम्भवतो निघण्टुर्यास्करचनेति विषये स्वपूर्वाग्रहस्य कारणाद् निरुक्तस्य स्कन्दभाष्यस्य संस्करणे[4] मूलस्योपर्युक्तस्थले 'तत्समामने' इति स्थाने न केवलं 'समामने'दिति पाठमेव विज्ञापितवान् अपि; तु भाष्यधृत इति वाक्ये तत्समामनेत्=पठेदित्यर्थं इत्येवं परिवर्तयामास। पाठोऽयं स्कन्दस्यैतत्पूर्वस्य 'अथोत=उतशब्दश्चार्थे। अनन्तरं च परेषामतिप्रसङ्गमात्मनश्च व्युदासं दर्शयितु-मिदमुच्यते'। अस्य वाक्यस्य आत्मनश्च व्युदासमिति विरुद्धोऽस्ति। उत्तमपुरुषस्य समामनेक्रियाया व्याख्याकरणकाल एव 'आत्मनः' इत्यस्य प्रयोगः सार्थक्यमेष्यति।

---

१. ऋग्वेदभाष्यम्—७।८७।४ : तत्रैकविंशतिनामानि काचिद् गौर्बिभर्तीति पृथिवीमाह। तस्या हि यास्कपठितान्येकविंशतिर्नामानि। सायण 'इममुक्तिमपर आह' इत्युक्त्वा संक्षेपेण प्रोक्तवान्?

२. श्री हरियाणा शेखावटी ब्रह्मचर्याश्रम भिवानी, जि० हिसारतः १९१६ खीष्टाब्दां प्रकाशितं द्रष्टव्यमिति। ३. निरुक्तम्—१६।३।

४. स्कन्दमहेश्वरीटीकायास्तृतीयभागे ७१ पृष्ठे टि० १५ अवलोकनीयम्।

दुर्गस्य व्याख्यया सूच्यते यदत्र समामन एवास्ति[1]। निरुक्तस्य दुर्गटीकायाः कोषेष्वपि च स्कन्दभाष्यधृतनिरुक्तकोषेषु सर्वत्र समामन इत्येव नयनगोचरीक्रियते। अतः डॉ० लक्ष्मणस्वरूपो निजपूर्वाग्रहकारणाद् युक्तिं विनापि पाठोपरि यद् विमर्शितवान्, तदसङ्गतम्।

( ii ) डॉ० मधुकर-मेंहेंदले-महाशयस्य राद्धान्ते सिद्ध्यत्येतावदेव यद् दैवत-काण्डमेव यास्कीयं न तु सम्पूर्णं निरुक्तमिति। स दुर्गं प्रमाणकोटौ मत्वा १।१ तथा १।२० निरुक्तस्य 'तमिममिति पदाधारेण यास्केन व्याख्यातो निघण्टु'रिति ब्रवीति। तथा दुर्गवद् निघण्टुयास्केतरकृतः[2]। किन्तु नैतद् युक्तम्। निघण्टवे समाम्नात-स्तान्यप्येके समामनन्ति, समामने इति रूपे सम्+आ+म्ना इत्यस्य विविधप्रयोगेण सूच्यते यद् योगोऽयं तत्पूर्वकालादेवैवंभूतस्य पदसङ्कलनाय रूढः। समाम्नायशब्दः कस्यचिद् ग्रन्थविशेषस्य कृते न; अपि तु सङ्कलनार्थेऽपि प्रचलित आसीत्[3]। अतः ( १।१।२० ) निरुक्ते 'तमिम्मि'ति विशेषणेन निघण्टुसामान्यस्यैवाभिप्रेतत्वन्न तु निघण्टुविशेषस्य।

पञ्चमाध्यायमात्रं यास्कीय इति त्वर्धजरतीयन्यायाल्लगति। यथा दैवत-काण्डस्य सङ्कलने यास्ककालिकप्राचीनाचार्याणां सङ्कलनसिद्धान्ते विकासोऽभवत् तथा निरुक्तस्य शेषभागीयसङ्कलनसिद्धान्ते किं विकासो नाजायत येन यास्कः, राद्धान्तोल्लासस्य कारणाद् दैवतकाण्डस्य नव्यं सङ्कलनमकरोत्; परन्तु शेषं काण्डद्वयं यथाश्रुतमेवाङ्गीकृतवान्। एतदतिरिक्तं (४।१) निघण्टोः पदानां तथा तदुद्धृतमन्त्राणां सङ्कलने सामञ्जस्यमेकमद्भुतं प्रदर्शितवान्। अधिकांशशब्दानां तदेव रूपं सङ्कलितं यत् सर्वाधिकमुपयुक्तमासीत्[4]। एवं तद्रूपोपरि स एवोद्धृतो मन्त्रो यः सर्वाधिकोप-

---

१. दुर्गटीकायां द्रष्टव्यम्। तत्र—'अहन्तु न समामने। तथा च तेषां शास्त्रेऽपरिसमाप्तिः। तन्ममापि मा भूद् इत्यतो यत्तु संविज्ञानं भूतं स्याद् प्राधान्यस्तुति, तत्समामने इति। तस्मान् नैतान्यहं समामने।

२. इण्डियन लिङ्ग्विस्टिक्स ३१ अङ्कस्य १-२ जनवरी-जून १९७०, ५८-५९ पृष्ठयोः निरुक्तमीमांसायाः समीक्षायां द्रष्टव्यम्।

३. वाजसनेयिप्रातिशाख्यम्—८।१ तथा तैत्तिरीय-प्रातिशाख्यम्-१।१ । वर्ण समाम्नायः। अनुवाकानुक्रमणी १।६ : 'पदाक्षर-समाम्नाय'शब्दः।

४. विषयेऽस्मिन् यास्कस्य निरुक्ते १५७ पृष्ठे द्रष्टव्यम्।

युक्तः[१] । त एवैतत्पदोपरि गृहीता इति द्वे वार्ते परस्परं सम्बद्धे स्तः। तथा एते तावद् न सम्भवेताम् यावदिमे कार्ये व्यक्तेरेकस्यैव न स्याताम्[२] ।

निष्कर्षः—यास्कस्य साक्षात्कथनं तथा तद्विपक्षयुक्तिदुर्बलतां ध्यायन्ध्यायमस्माभिरयमेष निर्णीतो यद् यास्ककृतो निघण्टुरिति ।

६. निघण्टोर्द्वौ पाठौ—कोषाणां तुलनात्मकाध्ययनाधारेण विदितं यदुपलब्धनिघण्टोः पाठद्वयमस्ति । डॉ० लक्ष्मणस्वरूपानुसारमिमौ द्वौ 'शॉटर रिसेंसन्' नाम्ना 'लॉङ्गर रिसेंसन्' नाम्ना च यथाक्रमं विश्रुतौ[३] । एतयोः पाठयोर्निम्नाङ्कितोऽन्तरः—

(१) शब्ददृष्ट्या (क) बृहत्पाठे (लॉङ्गर रिसेंसन्) समुपलब्धान्येकोनविंशपदानि लघुपाठे (शॉटर रिसेंसन्) न सन्ति । (ख) लघुपाठे समुपलब्धानि पदजातानि बृहत्पाठे न चाक्षुष्यविषयीभूतानि[४] । (ग) २।१४ द्वयोः पाठयोः पदसंख्या समानैव । परन्तु (अ) चतुस्त्रिंशत् पदानि लघुपाठे यानि वर्तन्ते तानि बृहत्पाठे न विद्यन्ते । (आ) पञ्चत्रिंशत् पदानि बृहत्पाठे यानि वर्तन्ते तानि लघुपाठे न सन्ति[५] ।

एकं पदं लघुपाठे सोपसर्गरूपे निरुपसर्गरूपे च समागतम्[६] । ( इ ) ३।१४। लघुपाठे बृहत्पाठापेक्षया दशशब्दानां न्यूनता दृश्यते । अर्थात् तत्र निघण्टुप्रोक्त-

---

१. 'दी निघण्टु ऐण्ड दी निरुक्त' भूमिका पृष्ठ ९.१० द्रष्टव्यम् ।

२. निरुक्तस्य पञ्चमाध्यायस्तथा १५७ पृष्ठे चतुर्थटिप्पण्यामुल्लिखितः ।

३. निरुक्तमीमांसायाः पृ० २३-३० तथा निरुक्तपञ्चमाध्यायस्य पृ० ८,१४, सप्तमाध्यायस्य चतुर्दशखण्डमपि पश्यन्तु ।

४. दी निघण्टु एण्ड दी निरुक्त, भूमिका, पृ० सं० ९ ।

५. एतद्द्विप्रकारकयोः पदयोः सूची निरुक्तमीमांसायां पृ० ११ द्रष्टव्या ।

६. एतत् सूच्यपि निरुक्तमीमांसायां १२ पृष्ठे प्रदत्ताऽस्ति तथापि निरुक्तस्य पञ्चमाध्याये किञ्चित्परिवर्तितम् । तत्सूची द्रष्टव्या—

| | | | |
|---|---|---|---|
| (अ) १. अचति ३४ । | १०. जगति ८३ । | १९. नक्ष्यति ५८ । | २८. व्रजति ११६ । |
| २. अथर्यति ९१ । | ११. जगन्ति ८१ । | २०. नेदति ५७ । | २९. षः कति ९९ । |
| ३. अयुधुः १२२ । | १२. जगाति ८२ । | २१. पतयति १०६ । | ३०. सस्रति ७० । |
| ४. अरर्षति ६३ । | १३. जायति १०५ । | २२. मिनति ८५ । | ३१. सिस्रति ७१ । |
| ५. अलर्यति ६४ । | १४. दभ्नोति ६० । | २३. मियक्षति ३२ । | ३२. हुम्मति ७४ । |
| ६. ईंहते ९२ । | १५. दध्यति ५९ । | २४. राति ९५ । | ३३. हयति ७५ । |
| ७. ऋणति ५४ । | १६. धवति ७२ । | २५. रुवहति ९६ । | |
| ८. कणति ६९ । | १७. धावति ७३ । | २६. वदति ४ । | |
| ९. क्षिणोति ४८ । | १८. ध्रुवति ८९ । | २७. वल्गूयति ९० । | |

संख्यापेक्षयैव दशशब्दानां न्यूनता। (ई) यानि पदानि सन्ति तेष्वपि बृहत्पाठेऽष्टौ पदानि नावलोक्यन्ते।

शैलीदृष्ट्याऽन्तरः — (क) बृहत्पाठे चतुर्थाध्याये त्रीणि खण्डानि सन्ति। यदा लघुपाठे चतुर्णां समावेशः। लघुपाठे तृतीयखण्डस्यान्तिमं पदं शशदान (७०) इत्यस्ति। तथा बृहत्पाठस्य तदनन्तरीयत्रिषष्टिपदानां कृते पृथक् चतुर्थखण्डं व्यरचयत्। (ख) पञ्चमाध्यायस्य बृहत्पाठे षट्खण्डानि सन्ति। बृहत्पाठस्य प्रथमं द्वितीयञ्च खण्डं सम्मिश्र्य लघुपाठे खण्डमेकमकार्षीत्। अतस्तस्मिन् पञ्चैव खण्डानि सन्ति। (ग) अध्यायान्तर्गतखण्डेषु तद्विवरणं बृहत्पाठस्य तुलनायां संक्षिप्तं विद्यते। यथा १।१ लघुपाठे 'गौः, ग्माः.....' गोत्रति पृथिव्या एतद् रूपेऽस्ति। तथा बृहत्पाठे गौः। ग्मा गोत्रेत्येकविंशतिः पृथिवीनामधेयानि' इत्येतद्रूपेऽवर्णयत्। बृहत्पाठस्य कतिपयकोषेषु 'गौः ग्मा गोत्रेति पृथिव्या' (२१) एवं पाठो मिलति। बृहत्पाठे कोषे प्रत्यध्यायान्ते तस्मिन् समागतखण्डानां पूर्वं खण्डसूत्रस्वरूपे शब्दान् संल्लिख्य तत्र समागतानां खण्डानां संख्याऽपि चर्चिता। यथा प्रथमाध्यायान्ते गौर्हेमाम्बरं स्वः खेदय आताः श्यावी विभावरी वस्तोरद्रिः श्लोकोर्णोऽवनयोऽत्यो हरी इन्द्रस्य भ्राजते जमदिति सप्तदश पाठाधिक्यम्। अर्थादत्राध्याये गौः, हेम, अम्बरं, स्व आदिशब्देभ्यः प्रारभ्य सप्तदश खण्डानि सन्ति। इमानि खण्डसूत्राणि लघुपाठे नो मिलन्ति।

डॉ० लक्ष्मणस्वरूपस्योपर्युक्तविवरणं (२ग घ) इत्याधारे विद्यमानम्। (क) प्रारम्भे लघुपाठरूप एव निघण्टुरासीत्। (ख) पुनस्तत्र खण्डगतपदानां

---

(आ) १. अनति १०७; २. अयुथुः १२२; ३. अरुषति ६५; ४. अर्दति ७३।
५. आर्यंति ६६; ६. इषति १००; ७. ईङ्खते ८०; ८. ऋणोति ५३।
९. एति १२०; १०. जम्नन्ति ८५; ११. जमति १०४; १२. जवति १०५।
१३. जसति ८७; १४. जिन्वति ८६; १५. दभ्यति ६८; १६. दम्नोति।
१७. द्रमति ११६; १८. द्राति १०१; १९. द्रूलति १०२; २०. धमति ५०।
२१. नक्षति ३१; २२. नवते २९; २३. नसते ७६; २४. फणति ७१।
२५. मर्दति ७४; २६. मिनाति ५१; २७. म्यक्षति ३३; २८. यतते ४४।
२९. रथयति ९३; ३०. रेजति ६०; ३१. वहते ९३; ३२. सर्सृते ७५।
३३. स्वरति ५४; ३४. हनति ७२; ३५. हर्यति ७७।

सूचीषु प्रथममनुक्रमाङ्कस्ततः पदं तदुत्तरं योऽङ्क उपर्युक्तखण्डेऽनुक्रमद्योतकः, विशिष्टो विचारो निरुक्तपञ्चमाध्यायस्य ३१९-३२४ पृष्ठेषु द्रष्टव्यः।

संख्या अङ्केऽवतारिताऽभवत् । (ग) तदनन्तरं संख्याकस्थानं संख्याशब्दो गृहीतवान् । (घ) अध्यायान्ते खण्डसूत्राणामपि संयोजनं जातम्[1] ।

७. यास्केन कः पाठो व्याख्यया समलङ्कृतः ? डॉ० लक्ष्मणस्वरूपकृत-भूमिकाया दशमपृष्ठे राद्धान्तितं यद् यास्को नैघण्टुककाण्डस्य व्याख्यायां कतिषु स्थलेषु निघण्टुपदानां व्याख्यामकृत्वान्तेऽमुकशब्दस्यैतावन्तो पर्यायाः सन्तीति निगदितवान् (२।११) निघण्टौ । 'गोनामान्युत्तराणि नव' (निरुक्तम् ३।९) कथनमिदं 'अघ्न्या, उस्रिया ··· शक्वरीति नव गोनामानि' इति बृहत्पाठस्य व्याख्यायां पिष्ट-पेषणमात्रमेव प्रतिभाति । अतो यास्ककृतं लघुपाठस्य वर्णनमुपयुक्ततरम् । किन्तु निष्कर्षोऽयं शीघ्रतायां निष्कासित इव लगति । यतो हि—

क. निघण्टोश्चतुर्थाध्याये बृहत्पाठे त्रीणि खण्डानि सन्ति । तथा लघुपाठे चत्वारि खण्डानीति पूर्वमुक्तम् । यास्कोऽस्याध्यायस्य व्याख्यां त्रिष्वध्यायेषु (४-६) कृतवान् । एतेन ज्ञायते यद् यास्कस्य समक्षमध्यायोऽयं खण्डत्रयएवासीत् ।

ख. दैवतकाण्डस्य बृहत्पाठे षडध्याया विलसन्तितराम् । तथा लघुपाठे पञ्चा-ध्याया विभान्ति । यास्कोऽस्य काण्डस्य व्याख्याम् ७-१२ अध्यायेषु लिखितवान् ।

ग. ३।१४ निघण्टोर्बृहत्पाठे चतुश्चत्वारिंशत् पदानि लघुपाठे तु चतुस्त्रिंशत् पदान्यालोक्यन्ते । खण्डेऽस्मिन् यास्कः चतुश्चत्वारिंशत् संख्या एवाभिहितवान् । अर्चतिकर्माण उत्तरे धातवश्चतुश्चत्वारिंशत् ( निरुक्तम्–३।१९ ) ।

घ. ४।१।७ निघण्टु-लघुपाठे इषिरस्तथा बृहत्पाठे इषिरेण दृश्यते । यास्कः ४।७ इत्यत्र इषिरेणेत्यस्य व्याख्यां समलङ्कृतवान् ।

ङ. लघुपाठेऽनुपलब्धस्य बृहत्पाठे समुपलब्धस्य शिरिम्बिष्ठः (४।३।१२१) इत्यस्य यास्कः ६।३० इत्यत्र व्याख्यां कृतवान् ।

च. बृहत्पाठस्य कोषेष्वविद्यमानस्य लघुपाठे विद्यमानस्य (४।३।७३) 'शिप्रे' इत्यस्य विवृतिः । उभयोः पाठयोः ४।१।११ इत्यत्रापि समागतोऽयम् । निरुक्ते ४।१० स्थलेऽस्य व्याख्यां वक्ष्याम्यग्रे भणित्वैवं व्याख्यां न कृतवान् । ४।१ निघण्टौ 'शिप्रे' इत्यस्मात्पूर्वं सुशिप्रः ( ७२ ) वर्तते । तस्य व्याख्यायामस्य व्याख्याऽस्त्येवास्मात्कारणात् 'शिप्रे' इत्यस्य व्याख्या पूर्वस्थले न कृता । 'सुशिप्रः' इत्यस्य व्याख्या ६।१७ इत्यत्र येन प्रकारेणाभवत् तेन प्रतीयते यत् तस्य 'सुशिप्रः' इत्यस्योत्तरपदसत्त्वाद् जाता । दुर्गोऽपि शिप्र इति व्याख्या सुशिप्र इति व्याख्याया-मुपयोगसाधनत्वात् प्रसङ्गतः कृताऽस्तीति कथयति[2] ।

---

१. निरुक्तम्—७।२, पृ० १३ द्रष्टव्यम् ।

२. तत्पुनरेतेनैव सुप्रशब्देन व्याख्यातम् । शिप्रे — हनू — नासिके वा । ते यस्य प्रशस्ते, स सुशिप्रः ।

एतेन प्रतीयते यदयं शब्दः ४।३ इत्यत्र संदिग्धः। नैघण्टुककाण्डे प्रदत्तपदान्यनेकार्थकत्वात् यद्वा अविदितव्युत्पत्तित्वात् दातव्यान्यर्हन्ति। परन्तु एवंभूतानां शब्दानां कृते व्यरचितैकपदिककाण्डे समागतस्य पदस्य पुनः पाठकरणं प्रमादजन्यमेव भविष्यति[1]। अतोऽत्र प्रमादपाठस्वीकारापेक्षयो-पर्युक्तकारणेनास्वीकार एव समागतत्वादपि व्याख्यातव्यो भवितुमर्हति। तथा (क) स्वतन्त्रपदत्वादपि। (ख) प्रथमविकल्पेन व्याख्यातश्चेन्नात्र दोषः। टीकाकाराणामियमेव मान्यताऽस्तीति सम्भाव्यते। (ग) दुर्गोऽस्य व्याख्यां 'निगमप्रसक्तमुच्यते' इत्युक्त्वा मन्त्रागतत्वाद् व्याख्यातशब्देष्वेव कृतवान्। निघण्टौ समागतानां व्याख्याम् 'इत्यनवगतम्' इत्युक्त्वाऽकरोत्। इत्यस्मादग्रिमपश्चात्पदो-परीदमुक्तवान् परन्त्वस्मिन् पदे किमपि नाभिहितवान्। अतस्तत्सिद्धान्तानुसारं निघण्टौ पदमिदं न वर्तते। ४।३ इत्यत्र ६।२२ निरुक्ते 'दूत इत्यनवगतम्' इत्युक्त-मवश्यमेव। अतस्तन्मते पदमिदमस्मिन् खण्डे निघण्टुगतम्। (घ) स्कन्दस्य इत्युपरि निरुक्तव्याख्यायाः खण्डत्वादप्राप्तिः। अतस्तत्र स निघण्टुद्वितीयखण्डगतं स्वतन्त्रं पदमिति स्वीकृतवान्। अथवा दुर्ग इव प्रसङ्गप्राप्तं पदमिति नात्रासन्दिग्धरूपेण किञ्चिद् वाच्यम्। किन्त्वग्रे ४।३ इत्यत्र स एव पदमिदं निघण्टुगतमित्यङ्गीकरोति। तथा ४।२।२ इत्यत्र प्रासङ्गिकत्वाद् व्याख्यातव्यं 'दूत इत्यनवगतम्' इति मन्यमानः तत्पुनः 'वाहिष्ठो वां हवानाम्' (ऋ० ८।२६।१६) इत्यत्र 'दूतो जवतेर्वा' इत्येवं व्याख्यातवान्। (ङ) देवराजोऽपि द्वितीयखण्डेऽस्य व्याख्यां न चकार। तथा तृतीयखण्डे व्याख्यां कृतवान्। अत इदं पदं ४।३ इत्यत्रैव सङ्कलितं विद्यत इत्य-मन्यत, न तु ४।२ इत्यत्र। अनेन सिद्ध्यति यत् (आ) द्वितीयविकल्पस्वीकारेऽयं दोषत्वेनापतति यत् (च) यास्कोऽस्य सङ्कलनं निष्प्रयोजनमिति कथमुवाच। यावदस्य दोषस्य समाधानं न स्यात्तावन्निर्दोषविकल्प एव मान्यस्स्यादित्यौ-चित्येन प्रतीयते।

---

१. उपलब्ध निघण्टावेवंभूतं ( शिप्रे तथा दूतः ) इति पदद्वयमस्ति। यदैकपदिककाण्डे द्विवारं मिलति। मम विचारे द्वयोरेतयोः पुनरुक्तिता प्रमाणविहीनाऽस्ति। ४।३ इत्यत्र शिप्र इत्यस्य खण्डनमुक्तम्। दूतः-पदमपि द्वितीयखण्डे ( ४।२।३, ४।३।१०० ) न प्रयोक्तव्यम्। (क) यास्कः ( ६।२२ निरुक्ते ) दूतो व्याख्यातव्य इत्यत्रवीत्। सूच्यतेऽनेन यन्निघण्टु-पदानां क्रम एव दूत इत्यस्य व्याख्याक्रम आसीत्। अर्थात् पदमिदं निघण्टोः स्थलेऽस्मिन् विद्यमानमासीद् यस्य विषये यास्केनावोचि यदस्य व्याख्या सम्भूतेति। अतो यास्कप्रमाणेन (४।३) निघण्टौ दूत इत्यस्य पाठः सुतरामेव। (ख) द्वितीयखण्डे पदमिदं ४।२।२ 'वाहिष्ठः' पदोपरि समुद्धृतमन्त्रे।

४।२।३ निघण्टौ पदमिदं कथमागतवानिति प्रश्नोपरि मम विचारोऽयं वर्तते यदृग्वेदसंहितायां वाहिष्ठ इति पदं पञ्चवारं समागतवान् ।

(१) अस्माकमिन्द्र, भूतु ते स्तोमो वाहिष्ठो अन्तमः । अस्मान् राये महे हिनु ।
(६।४५।३०)

(२) आ वां वाहिष्ठो वहतु स्तवध्यै रथो वाजा ऋभुक्षणो अमृक्तः ।
अभि त्रिपृष्ठैः सवनेषु सोमैर्मदे सुशिप्रा महभिः पृणध्वम् ॥
( ७।३७।१ )

(३) अस्माकमद्य वामयं स्तोमो वाहिष्ठो अन्तमः । युवाभ्यां भूत्वाश्विना ।
( ८।५।८ )

(४) आ वां वाहिष्ठो अश्विना रथो यातु श्रुतो नरा । उपस्तोमान्तुरस्य दर्शथः श्रिये । ( ८।२६।४ )

(५) वाहिष्ठो वां हवानां स्तोमो दूतो हुवन्नरा । युवाभ्यां भूत्वश्विना (१६)

(६) अत्र द्वितीयचतुर्थमन्त्रयोः पदमिदं वाहीति ण्यन्त-वह्-धातुना निष्पन्नं यौगिकार्थे रथस्य विशेषणरूपे आगतवान् । अतो व्युत्पत्तिदृष्ट्या नेदमनवगतम् । अर्थदृष्ट्यापि नोऽनवगतं नानेकार्थम् । अस्मात् (४।२।३) निघण्टौ ( एतद्रथविशेषणेष्वन्यतमो ) वाहिष्ठ इति सङ्कलनयोग्यं नास्ति । शेषेषु मन्त्रत्रयेषु स्तोम इत्येतद् विशेषणरूपे प्रयुक्तमस्ति । प्रथमतृतीयमन्त्रयोरस्य प्रयोगो वहनकर्त्रे स्तोमाय जातः । सोऽपि साधारणेन किन्त्वन्तिमे मन्त्रे 'हवानां वाहिष्ठोः दूतः स्तोमः' इति जल्पितम् । अर्थात् (क) देवतानामभिवहनात्मिकासु स्तुतिषु प्रयुक्तः स्तोमोः देवाह्वानात्मकस्तोमस्तत्राश्विनोरानेतृषु श्रेष्ठतरः स्तोमः । (ख) अयं कार्येऽस्मिन् श्रेष्ठदूतसमः समर्थोऽस्ति । वाहसित्यस्य समकक्षो वाहिष्ठशब्दो वाहीति ण्यन्तान्निष्पन्नः । यास्को वाहस् इत्यस्यार्थद्वयं (४।१६) निरुक्ते कृतवान् । (१) अभिवहनस्तुतिः । अर्थाद् देवान् यज्ञमानेतुं क्रियमाणा स्तुतिः । (२) अधिषवणप्रवादा स्तुतिः । सा 'हव्' इत्यनेन आह्वानार्थेऽस्ति । अतोऽभिवहनस्तुत्यर्थः । एवं विशेषार्थो मन्त्रेऽस्मिन्नेवास्ते । परिणामतो वाहिष्ठ इत्यस्यैव सङ्कलनमत्राभिप्रेतम् । एतद् वक्तुं निघण्टौ व्यवच्छेदकेन दूत इति पदेन सार्द्धं 'वाहिष्ठ·····दूत' इति रूपे सङ्कलितमभूत् । तथा प्रसक्तपदकारणादेव दूत इत्यस्य व्याख्या कृता दृश्यते, न तु स्वतन्त्रपदेन । मन्त्रे व्यवहितपदानां सङ्कलनं प्रदर्शयितुं 'वाहिष्ठः' इत्यस्य दूतशब्देन सह सन्धि न चक्रे । अतः कर्मकरजीवो निष्प्रयोजनं सन्धिविच्छेदमत्र कृतवान् । कालान्तरे प्रयोजनमेतद् दृष्टिगतमकृत्वैव जनाः पदद्वयं धृतममन्यन्त । परिणामोऽयं जातो यदस्य खण्डस्य या पदसंख्या त्र्यशीतिरासीत् साऽधुना चतुरशीतिरभवदिति समीचीनः ।

(७) बृहत्पाठे समुपलब्धास्तथा लघुपाठेऽनुपलब्धा ऋजु-नीतिः (४।३।९३ निघण्टौ) तुञ्जति (३।२०।९) धवाश्च (२।३।३) पदानि निरुक्ते ६।२१।१७ तथा ३।१५ इत्यत्र तस्मिन्नेवार्थे सन्ति यस्मिन्नर्थे ते समाम्नाताः।

(८) लघुपाठे समुपलब्धानां बृहत्पाठेऽनुपलब्धानां पदानां तालिकायामेतादृशमेकमेव पदं रोधसी एव रोदसी ( ३।३०।४ तथा ५।५।२६ ) इत्यस्य व्याख्यायां रोदसी=रोधसी, द्यावा-पृथिव्यौ (६।१) इत्यत्रामिलत्। परन्तु रोदसीत्यस्य निर्वचनप्रदायिन्यां व्याख्यायां शब्दोऽयं समागतः। संहितासु रोधसीति पदमनुपलब्धमस्ति। रोदसी सुबहुश इत्येव प्रयुक्तं वर्तते। अतोऽत्र लघुपाठेन यास्कस्य परिचयसिद्धिर्न जायते।

(९) बृहत्पाठस्य 'अक्षरम्' ( १।१२।३२ ) पदमस्मिन्नेवार्थे प्राप्यते; किन्तु लघुपाठस्याक्षरेति पदं न क्वापि समुपलभ्यते।

अनेन विवरणेन ममायं निष्कर्षो निष्पद्यते यल्लघुपाठेन यास्कस्य परिचयदायिका प्रत्यक्षा परोक्षा वा काऽपि युक्तिर्नोपलब्धा। यदा च यास्को बृहत्पाठस्य व्याख्यामसम्पादयदिति वार्तां प्रमाणयितुं सामग्र्यः समुपलब्धाः सन्ति[१]। अतो बृहत्पाठस्यैव मौलिकता दरीदृश्यते। विषयेऽस्मिन् यास्कस्य साक्षात्कथनं गमकत्वेन दत्वा लक्ष्मणस्वरूपस्य युक्तिं विचारयिष्यामि।

निघण्टोर्विषयविवेचनावसरे यास्केन निघण्टौ सङ्कलितानां[२] नाम्नां तथा धातूनां संख्याऽपि प्रदत्तेति पूर्वमेवाकथयम्।

निघण्टावुक्तायामपि संख्यायां निरुक्ते यदि कस्यचन खण्डस्य पदानां नाधिका व्याख्या करणीयाऽस्ति तदा यास्कोऽमुकखण्डस्यैतानि नामानि अमुकशब्दस्य

---

१. कारणमिदं प्रतीयते येन डा० लक्ष्मणस्वरूपो निघण्टुपाठस्य प्रामाणिकतायामर्द्धजरतीयन्यायमवलम्ब्य स्वपुस्तके द्वादशपृष्ठे खण्डान्तस्य पार्श्वे पाठ्यमूलं लघुपाठे सुरक्षितमस्तीति समीरितवान्। तथा निघण्टोश्चतुर्थपञ्चमाध्याययोर्बृहत्पाठस्यानुसरणमकार्षीदित्युक्तवान्। परन्तूपर्युक्तविवरणेन सिद्ध्यति यत्प्रथमकाण्डस्यापि बृहत्पाठत्वमेव यास्कसम्मतम्। अतः डॉ० लक्ष्मणस्वरूपस्य निष्कर्षो न सुविचारित इति।

२. निरुक्तम्—(क) एतावन्तः समानकर्माणो धातवः। एतावन्तस्य सत्त्वस्य नामधेयानि (ख) एतावतामर्थानामिदमभिधानम् (ग) नैघण्टुकमिदं देवतानाम्, प्राधान्येनेदमिति। अत्र—एतावदित्यनेन सङ्ख्यैवाभिप्रेताऽस्ति। अन्यथा यास्केन 'एतत्' इत्यस्यैव प्रयोगः कृतः स्यात्। (क) (ख) (ग) इति विभाजनं काण्डक्रमसूचकम्। तथा 'क' इति विभाजने नैघण्टुककाण्डस्य, 'ख' विभाजने नैगमकाण्डस्य, 'ग' विभाजने दैवतकाण्डस्य पदसङ्कलनमभवदिति बोध्यम्।

पर्यायत्वेन निगदितानि सन्तीति कृत्वा परिचयं दत्तवान् । तेनायं लाभो जातो यद् अनिरुक्तविशेषणप्रयोगेण चोपर्युक्तकथनस्य प्रथमांशः पुष्यति । (आ) ब्राह्मणेषु कतिषुचित् स्थानेषु देवतानामनिर्वचनेन तद्देवतास्वरूपस्यापि स्पष्टीकरणं जातमिति पूर्वमुक्तवान्[१] । (इ) यास्कः प्राचीननैरुक्तेषु सर्वाधिकप्रसिद्धस्य शाकपूणेर्मतस्योल्लेखं देवविद्यायाः प्रसङ्गे [२]पञ्चदशकृत्वस्तथा निर्वचनस्य सन्दर्भे अष्टकृत्वः[३] सम्पादितवान् । एतेन विदिता भवति यत् तस्य निरुक्ते देवविद्यैव प्राधान्यमग्रहीत् । (ई) यास्कस्य पूर्वोद्धृत कथनेनापि[४] ज्ञायते यत् प्राचीननिरुक्तेषु देवतानां पर्यायस्य गुणाभिधानस्य च बाहुल्यं भवति स्म । अर्थात् तेषु देवविद्यैव मुख्याऽभवत् । (उ) यास्कस्य निरुक्तेऽपि ७-१२ अध्यायेषु[५] देवविद्यायाः प्रतिपादनं विद्योतते । अतस्तन्निरुक्तेऽपि देवविद्यैव मुख्याऽस्ति ।

एतेन विवरणेन बोध्यते यद् निरुक्तशास्त्रस्य प्रधानविषयो देवतानां स्वरूपस्य स्पष्टीकरणमेवासीत् । एतदुद्देश्यपूर्तिसाधनभूतं देवतानां वर्णनं यैः शब्दैः कृतवानस्ति, तद् व्याख्यामचिनोत् । अर्थाद् देवतानाम्नां व्युत्पत्तिं तदर्थञ्च स्पष्टयित्वा देवतायास्तात्त्विकस्वरूपपर्यन्तानुधावनस्य प्रयास एवास्य शास्त्रस्य प्राथमिकप्रतिपाद्य आसीत् ।

वैदिकदेवतानामेतादृशी व्याख्या तावत्कालमसम्भवासीत्—यावत्कालं मन्त्राणामर्थस्य स्पष्टज्ञानं न भवेत् । परिणामतस्तत्स्पष्टीकरणाय देवेतरपदानां स्पष्टीकरणमावश्यकमभूत् । फलतः निघण्टुषु नैघण्टुककाण्डस्य नैगमकाण्डस्य च प्रादुर्भावो जातः । एतयोः काण्डयोः सङ्कलनस्य प्रमुखोद्देश्यो यथार्थतया मन्त्रबोधनमेवासीत् । फलस्वरूपं निरुक्तशास्त्रस्य मन्त्राणां स्पष्टीकरणमेवान्यो विषयोऽभवत्[६] ।

---

१. निरुक्तस्य पृ० १७३ द्रष्टव्यम् ।

२. २।८; ७।१४, २३, २८; ८।२, ५-७, १०, १४, १७-१८; १२।१९, ४०; १३।१० निरुक्तं प्रेक्षणीयम् ।

३. ३।११, १३, १९; ४।३, १५; ५।३, १३, २८ निरुक्तमवेक्षणीयम् ।

४. ७।१३ निरुक्तं समवलोकनीयम् ।

५. निरुक्तस्य चतुर्दशसंख्यकाध्यायेष्वन्तिमोऽध्यायः विषयदृष्टया सर्वथान्यादृशः प्रतीयते । अतस्त्रयोदशात्मकाध्यायदृष्ट्या सप्तमाध्यायात्मकभागस्याभिवयमुक्तम् ।

६. तुलनीयम्—निरुक्तस्य १३।१२ इत्यस्यायं मन्त्रार्थः—चिन्ताम्यूहोऽभ्यूळ्होऽपि श्रुतितोऽपि तर्कतः । मनुष्यो वा ऋषिषूत्क्रामत्सु देवानब्रुवन्—'को न ऋषिर्भविष्यति, इति । तेभ्य एतं तर्कमृषिं प्रायच्छन्मन्त्रार्थचिन्ताऽभ्यूहमभ्यूळ्हम् । वेदार्थान् स्पष्टयितुमेवास्य शास्त्रस्याविर्भावो जातः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः । बिल्मं=भिल्मं भासनमिति वा । ( निरुक्तम् १।२० )

यास्कस्य निरुक्ते नाप्येतद्विषयस्य पुष्टिर्जायते। स केवलं निघण्टौ सङ्कलितपदानामेव व्याख्यां न कृतवान्, अपि तु मन्त्रगतान्यपदानां तत्सदृशानां साक्षात्परम्परया वा सम्बन्धगतानां मन्त्रेऽप्रयुक्तपदानां सङ्कलितपदैः साक्षात् परम्परया वा सम्बद्धपदानां प्रचुरमात्रायां व्याख्यां कृतवान्।

एतद् द्वौ विषयौ प्रतिपादयितुं साधनस्वरूपस्य निर्वचनस्य चयनमभूत्। अतः शब्दानां भाषाशास्त्रीयविवेचनमस्य तृतीयो विषयोऽस्ति। कालान्तरे साध्यापेक्षया साधनोपर्य्येवाधिकबलप्रदानेन देवविद्यामन्त्रार्थापेक्षया निर्वचनमेव निरुक्तस्य प्रमुख-विषयत्वेन प्रतिपादितम्। अद्य निरुक्तं सामान्यदृष्ट्या भाषाशास्त्रीयग्रन्थो बोध्यते। वस्तुतो निरुक्तशास्त्रस्य द्वावुपेयौ विषयौ स्तः—(क) देवविद्या, (ख) मन्त्रार्थज्ञानम्। एक उपायविषयोऽस्ति—निर्वचनम्, उपायभूतत्वात्। निरुक्तस्य शास्त्रस्य (यास्क-प्रतिपादितग्रन्थस्य) प्रधानविषयत्वमगच्छत्।

(४) **निरुक्तविषयविवेचनम्**—प्रकरणेऽस्मिन् यास्कस्य कुत्र किं विवेचनमस्ति? एतद्दृष्ट्या कृत्वा कया दृष्ट्या किमुक्तमस्तीति दृष्ट्या करिष्यामि निरुक्तविषय-विवेचनम्। निरुक्तशास्त्रस्य पूर्वोक्तेषु त्रिषु विषयेषु प्रथमतः मन्त्रार्थज्ञानविवेचनम्, तदुत्तरं देवविद्याविवेचनमन्ते च निवर्चनविवेचनं वक्ष्यामि।

(१) **मन्त्रार्थज्ञानम्**—स्वकथनपुष्टौ यास्केनाष्टशतसंख्याका मन्त्रास्तथा मन्त्रांशाः समुद्धृताः। तेषु मन्त्रेषु नभोवेदवेद ४४० परिमितेषु मन्त्रेषु संक्षिप्ता टिप्पणी कृता। (क) सरलशब्दान् सुगमवाक्यानि च यथावद् रक्षितवान्[१]। (ख) तद्वैदिकरूपं लौकिकशब्देषु विपरिणमितवान्[२]। (ग) क्लिष्टशब्दानां सुगमतया बोधार्थं तल्लौकिक-पर्यायं ररक्षाथ[३] वा। (घ) तन्निर्वचनं कृत्वा तदर्थं निर्धारितवान्[४]। (ङ) [५]अपेक्षा-यामितिहासं यद्वा काञ्चित् प्राचीनप्रथामपि स्वीकृतवान्। (च) मन्त्रगतस्वरूपे, मन्त्रार्थे, निर्वचने च मतभेदस्थितौ मतभेदं प्रस्तूय तदनन्तरं पूर्णं कृत्वा प्रस्तौति[६]।

---

१. १।४ निरुक्तमवेक्षितव्यम्—वृक्षस्य नु ते पुरुहूत, वयाः ( ऋ० ६।२४।३ ) वृक्षस्येव ते पुरुहूत, शाखाः।

२. तत्रैव द्रष्टव्यम्—२।३४ – इयं शुष्मेभिः ( ऋ० ६।६।१-२ )=इयं शुष्मैः=शोषणैः।

३. तत्रैव—त विषोभिरूर्मिभिः, महद्भिरूर्मिभिः।

४. निरुक्तमवलोकनीयम्—१।४—परावघ्नीम्=पारावारघातिनीम्। पारं परं भवति। अगरमवरम्।

५. २।१० निरुक्तं निरीक्ष्यम्–तथा तदग्रिमखण्डे ऋ० १०।९८।५-७ एवं २।२४ निरुक्तं तदग्रे ऋग्वेदे-३।३३।५-६,१०।

६. ३।५ निरुक्ते, १।१।२४।७ ऋग्वेदस्य 'गर्तारुक्' इत्यस्य व्याख्या प्रत्यक्षीकरणीया।

अथवा पूर्णतया समीक्षां कृत्वा तत्त्वनिर्णयं कुरुते। (छ) दृष्टिभेदेनार्थभेदे जाते तद्दृष्टया मन्त्रार्थमपि सम्पादयति[1]। यास्कस्य स्वकीया दृष्टिः, यद्वा नैरुक्तस्य स्वदृष्टिरेवाधिदेवतदृष्टिरस्ति, यामद्यतनीयदृष्टयाऽधिभूतदृष्टिं कथयितुमर्हति। [2]ऐतिहासिकदृष्टिरधिय[3]ज्ञदृष्टिरध्यात्म[4]दृष्टिः समाजिकदृष्टिश्च[5] वर्तन्ते।

कस्मिंश्चिदपि पदे मन्त्रोद्धृतकरणस्य सिद्धान्तविषये सम्प्रति महानुसन्धानस्यापेक्षा विद्यते ; परन्तु चतुर्थाध्यायस्य विशत्युद्धरणानामध्ययनेन विदितोऽभवद् यदिमे मन्त्रास्तत्तत्पदात्मकमन्त्रेभ्यः कस्याश्चिद्विशिष्टतायाः कारणादुद्धृता वर्तन्ते। अर्थाद् यो मन्त्रः प्रत्यक्षीभूतस्तदुद्धृत इति नैवं वार्ता। एषां मन्त्राणां विशेषतेदृशी—

(१) सप्तसु पदेषु मन्त्रार्थस्य क्लिष्टतायाः कारणादसौ मन्त्रः प्रदत्तः। (२) त्रिषु पदेषु सर्वश्रेष्ठाः काव्यसौन्दर्यवन्तो मन्त्राः प्रदत्ताः। (३) त्रिषु मन्त्रेषु व्याख्येयपदमनेकार्थकं विद्यते। (४) द्वयोर्मन्त्रयोर्व्याख्येयपदं प्रसिद्धार्थाद् भिन्नार्थे प्रयुक्तमस्ति। (५) एकस्मिन् मन्त्रे व्याख्येयपदवतां मन्त्राणां देवतागतविशेषतानां समाहारो बभूव। (६) एकस्मिन् मन्त्रे तत्पदं कर्मकाण्डेन सम्बद्धविशिष्टार्थे ह्यागतवान्। (७) व्याख्येयपदातिरिक्तपदानां व्याख्याया अभीष्टत्वादेको मन्त्रः प्रदत्तो वर्तते। (८) व्याख्येयपदवत्सु मन्त्रेषु संहितायाः क्रमे प्रथमो मन्त्र एषोद्धृतः[6]।

(२) **देवविद्या**—देवतातत्त्वं प्रकाशयितुं पूर्वमस्याधारभूतसिद्धान्तानां चर्चा दैवतकाण्डस्य प्रथमाध्यायस्य त्रयोदशखण्डेषु व्यवहृताऽस्ति। एतत्सिद्धान्तेषु ये प्रमुखाः सन्ति तानेवंप्रकारेणावलोकयन्तु—

(अ) मन्त्रेषु देवतापरिचयः (खण्डः १-४), (आ) प्रतिपादनशैल्याधारे मन्त्राणां भेदः (ख० २), (इ) मन्त्राणां विषयः (ख० ३-४), (ई) देवतानां संख्या तदाधारश्च (ख० ५), (उ) देवतानामाकारः (ख० ६-७), (ऊ) प्रमुखदेवैः सह स्तुता गौणदेवास्तथा तत्सम्बद्धानि कतिपयानि वस्तूनि (ख० ८-११)।

---

१. ३।८ नि०—इत्यत्र १०।५३।४ ऋग्वेदीय-'पञ्चजनाः' इत्यस्य व्याख्या चाक्षुषगोचरीक्रियताम्।

२. तत्रैव—२।८, १।१६४।३२ ऋग्वेदीयपरिव्राजकदृष्टया नैरुक्तदृशा च कृतां व्याख्यामवलोकयन्तु।

३. २।२४ निरुक्ते विश्वामित्रनदीनां संवादो द्रष्टव्यः।

४. १३।७ निरुक्ते ४।५८।३ ऋग्वेदीयव्याख्याऽवेक्षणीया।

५. ३।१३ निरुक्ते १।१६४।२१ ऋग्वेदस्याधिदैवताध्यात्मव्याख्यावलोकनीया।

६. ३।५ निरुक्ते 'गर्तारुक्' इत्यस्य ३।८ निरुक्ते 'पञ्चजनाः' इत्यस्य च व्याख्या प्रेक्षणीया।

(७) प्राचीननिघण्टूनां देवता-पद-समाम्नानस्य सिद्धान्त एवं सिद्धान्तगत-भेदेन सह सिद्धान्तस्यौचित्यम् । (ख० १३) एतस्याध्यायस्य शेषभागे कस्मिंश्चिदेक-भागे प्रधानस्वरूपे स्तुतदेवतायाः अन्यत्र गौणरूपे कृतायाः स्तुतेश्चर्चा अग्नेर्जातवेदसः वैश्वानरस्य च सन्दर्भे कृता विद्यते ।

सप्तमाध्यायस्य चतुर्दशखण्डादारभ्य त्रयोदशाध्यायस्यान्तं यावद् निघण्टो-र्दैवतकाण्डे सङ्कलितदेवतानाम्नां व्याख्या सम्पादिता । देवतायाः स्वरूपं त्रिधा विस्फारितम्—

(i) नाम्नो निर्वचनात् ।

(ii) आधिदैविकस्वरूपे मतभेदविचारं कृत्वा ।

(iii) निजसिद्धान्तपोषकमन्त्रानुद्धृत्य तथा तद्व्याख्यामाचर्य देवतास्वरूप-मस्पष्टयत् । देवताया नामनिर्वचने तदधियज्ञियस्याधिदैविकस्याधिभौतिकस्य च स्वरूपं दृष्टिगोचरीकृतमवलोक्यते । यथा (५।१।१) निष्कर्षः —

(अ) व्याख्यायामकृतायामपि निघण्टोश्चतुर्णामध्यायानां वेदार्थज्ञाने महत्त्वपूर्णं योगदानं शोभते । (आ) कोषकलायाः प्राचीनतमोदाहरणसत्त्वादस्यैतिहासिकं महत्त्व-मङ्गीकृतं भवति । (इ) योगदानस्य विशेषमूल्याङ्कनं विविधदृष्ट्याध्ययनाभावात्साम्प्रत-मसम्भवमिति ।



# वेदमन्त्राणामर्थवत्त्वम्

डॉ० रामाशीषपाण्डेयः
आचार्योऽध्यक्षश्च, संस्कृतविभागस्य
राँचीस्थमारवाड़ीमहाविद्यालये

❀❀❀

विद् ज्ञाने, विद् विचारणे, विद्लृ लाभे, विद् सत्तायामिति धातोर्घञ्-प्रत्ययेन निष्पन्नो वेदशब्दः समग्रज्ञानस्य विचारस्य लाभस्य सत्तायाश्च बोधको विद्यते। 'विद्यन्ते धर्मादयः साधनोपाया यैस्ते वेदाः[1]', 'इष्टप्राप्त्यनिष्टपरिहारयोर-लौकिकमुपायं यो ग्रन्थो वेदयति स वेदः[2]' इत्यादिकथनैर्वेदस्य महत्त्वमतितरां स्पष्टम्। वेदे प्रयुक्ताः शब्दनिवहाः पद्यात्मका गद्यात्मका वा मन्त्रशब्देनाख्यायन्ते। त एव वेदे प्रयुक्ता मन्त्रा अर्थवन्तो निरर्थका वेति विद्वद्भिर्विचारितम्।

किं मन्त्रा यज्ञाद्यवसरे पाठाय प्रयुक्ताः शब्दोच्चारणमात्रग्राह्या अदृष्ट-लाभायादृष्टार्थसम्पन्नाः किमुत स्वात्मनि निहितार्थं ज्ञानाय विहितार्थं प्रकटयन्तीति विचार्यते।

मन्-धातोः ष्ट्रन्प्रत्ययेन मन्त्रशब्दस्य निष्पत्तिर्जायते। तत्र मननादिति यास्कः[3]। ब्रह्मणो निःश्वसिता ऋषिभिर्दृष्टा मन्त्राः सामाजिकं-राजनीतिकमार्थिक-मैतिहासिकं भौगोलिकमाध्यात्मिकाधिदैविकादितथ्यं प्रकाशयन्ति, नित्यनैमित्तिकादि-फलावाप्तये यज्ञे प्रयुक्ता भवन्ति।

किमेते मन्त्रा यज्ञेषु शब्दमात्रं पठनीया न ह्यर्थवन्तस्ते निरुक्ते सायणभाष्यादौ च विवेचिताः। मन्त्राणामानर्थक्यप्रकाशने आचार्यकौत्सस्य मतं निरुक्ते लभ्यते, पुनः मीमांसायामपि सम्बद्धसूत्राणि प्राप्यन्ते।

यास्कस्तु मन्त्रेष्वर्थप्रत्ययो विद्यते न वेति जिज्ञासायां कौत्सस्य मतमुप-स्थाप्य मीमांसां चकार। वेदार्थसम्बद्धाः शङ्कास्तासां समाधानञ्चेति प्रस्तूयते—

कौत्सस्याभिमतेनानर्थका हि मन्त्राः, यतो हि नियतवाचोयुक्तयो नियतानु-पूर्व्या भवन्ति। नियतवाचोयुक्त्या निरूढवाचो युक्तयोऽभिधाननियतास्ते वाचो

१. ऋक्प्रातिशाख्ये ;    २. तैत्तिरीयसंहितायां सायणभाष्ये-१।१।१।
३. निरुक्तदुर्गवृत्तौ—१।५।

भवन्ति। यथा—'अग्न आ याहि वीतये, इत्यत्र विभावसो ! आगच्छ पातायेति कर्त्तुं न शक्यते। पुनश्च नियतानुपूर्व्यास्ते मन्त्रा भवन्ति। यथा—'अग्न आ याहि[1]' इत्यत्र आयाह्यग्ने इति कर्त्तुं न युज्यते।

इहलोकेऽर्थवतां शब्दानामनियमेन पर्यायवचनता गवादिप्रयोगे दृष्टा, मन्त्रे तथा पौर्वापर्यं न दृश्यते। यथा—गोणीमभ्याज, अभ्याज गोणीम्, आहर पात्रम्, पात्रमाहर इति। परिणामतोऽर्थवच्छब्दवैधर्म्याद् मन्त्रा अनर्थका इति पश्यामः।

मीमांसकैरपि मन्त्रेषु शब्दात्मकं परिवर्तनं पर्यायित्वञ्चानवलोक्य 'वाक्यनियमात्'[2] इति सूत्रमुपस्थापितम्। अनेन सूत्रेण वेदमन्त्रे वाक्यनियमस्य स्थैर्यत्वात् तत्रादृष्टप्रयोजनमस्ति, न हि मन्त्रेऽर्थविवक्षेति।

अत्र विचार्यते—'अर्थवन्तः शब्दसामान्यात् इति'[3] कथयता यास्काचार्येण प्रोक्तम्—यदि समान एव शब्दो लोके मन्त्रे च विद्यते। यथा गोशब्दो लोके स्वरसंस्कारयुक्तो मन्त्रेऽपि तादृश एव। एवं सति स एवार्थवान् लोके स एव चानर्थको मन्त्रे इति विशेषहेतुर्नास्ति। वेदे केचन वैदिकशब्दा विद्यन्ते येषां प्रयोगो लौकिकसंस्कृते न प्राप्यते, परं तेऽपि लौकिकशब्दा इव स्वरसंस्कारसम्पन्ना अर्थप्रतिपादकाः सन्त्येव।

पुनश्च लोकेऽपि व्यवहारे 'इन्द्राग्नी', 'पितापुत्रौ' इत्यादिपदे शब्दाः स्थानच्युतिं नाधिरोहन्तीति। तथा च पर्यायं विना क्रमपरिवर्तनं विनापि मन्त्रे यदि अर्थस्य हानिर्न जायते तदा निश्चयेनोपर्युक्ता शङ्का निरस्ता।

अविरुद्धं पदमिति सूत्रेण मीमांसकोऽपि मन्त्रेऽर्थवत्त्वं स्थापयति। वाक्यनियमादिति सूत्रेण मन्त्रे पदानामदृष्टप्रयोजनं यदभिहितं तदविरुद्धं वर्तते। पदानां स्थानपरिवर्तनं विनाऽपि यदि तत्त्वार्थबोधो जायते तर्हि का विप्रतिपत्तिः।

मन्त्राणामानर्थक्ये द्वितीया शङ्का प्रस्तूयते—ब्राह्मणेन रूपसम्पन्ना विधीयन्ते। ते रूपसम्पन्ना मन्त्रा ब्राह्मणेन विधीयन्ते। न ह्यर्थवन्तः सन्तो दासवद् ब्राह्मणेन विधीयेरन्। यदि ह्येतेऽर्थवन्तोऽभविष्यन् स्वेनैव लिङ्गेन स्वमात्मानमेते विनियोक्तुं समर्था इति कृत्वा ब्राह्मणेषु तेषु तेषु कर्मसु न व्यधास्यन्त, परं विहिताश्च ते। यथा—'उरुप्रथस्व[4]' इति प्रथयति[5]। प्रथनकर्मणि प्रथनलिङ्गो मन्त्रो विहितः—

१. सामसंहितायाम्—१।१।१।१; २. जैमिनिसूत्रे—१।२।३२; ३. निरुक्ते—१।५।
४. मैत्रायणीसंहितायाम्—१।१।९; ५. शतपथब्राह्मणे—१।१।६।८।

'उरु प्रथा उरु प्रथस्वोरु ते यज्ञपतिः प्रथताम्[1]।' अत्र लिङ्गसम्पन्नविधानाद् पश्यामो ब्राह्मणेनानर्थकस्वरूपमेव सन्तं मन्त्रं नियुक्तम्। एवं सति मन्त्रं पुनर्दधद् ब्राह्मणमर्थवत्। मन्त्रास्त्वनर्थका एव।

मीमांसायां तदर्थशास्त्रादिति[2] सूत्रेण प्रतिपादितमस्ति यद् वेदो यस्याभिधानं करोति, ब्राह्मणवाक्यमपि तदेवाभिधानं करोति। अतो मन्त्राभिधेयस्य स्वाभिनयं ब्रुवन् ब्राह्मणग्रन्थः प्रतिपादयति। स्वयमेव मन्त्रेऽर्थविवक्षा नास्ति।

अत्र विचार्यते—'ब्राह्मणेन रूपसम्पन्ना विधीयन्ते' इत्याशङ्काया निराकरणे यास्कः कथयति — एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धं यत्कर्म क्रियमाणमृग्यजुर्वाभिवदतीति च ब्राह्मणम्[3]। एतदेव हि यज्ञकर्मणः समृद्धम्। यद्रूपसमृद्धं मन्त्रलिङ्गैरभिधीयते तदेव हि समस्तवृद्धया युक्तं भवति, नेतरत्। ब्राह्मणमपि मन्त्राणामर्थवत्त्वमेव दर्शयति। अतः 'ब्राह्मणेन रूपसम्पन्ना विधीयन्ते' इत्यत्र ब्राह्मणेन सिद्धमेवार्थवत्त्वं मन्त्राणाम्। अत्र उदितानुवादो ज्ञातव्यः। सिद्धस्य कथनमनुवादः। तस्मादुभयमर्थवत्, मन्त्रा ब्राह्मणाश्चेति। आचार्यसायणेन ऋग्वेदभाष्यभूमिकायां प्रश्नस्योत्तरे मीमांसायाश्चत्वारि सूत्राणि प्रस्तुतानि—'अविशिष्टार्थस्तु वाक्यार्थः', 'परिसंख्या[4]', 'अर्थवादो वा[5]', 'गुणार्थेन पुनः श्रुतिः[6]'। एभिः सूत्रैर्मन्त्रेष्वर्थवत्त्वं विद्यत इत्युपस्थापितम्।

मन्त्राणामानर्थक्येऽपरो हेतुरुपस्थाप्यते—अनुपपन्नार्था हि एते मन्त्रा भवन्ति। 'ओषधे त्रायस्वैनम्[7], स्वधिते मैनं हिंसीः, हिंसन्'। मन्त्रेऽसङ्गतार्था विद्यन्ते। यतो हि न चौषधिरात्मानमपि त्रातुं समर्था किं पुनर्वृक्षम्। पुनश्च स्वधिते मैनं हिंसीश्चात्मानमेव हिंसन्निति। को हि नाम एवमुक्त्वा स्वयमेव हिंस्यात्, हिनस्ति च। लोके यान्येवंविधानि वाक्यान्युन्मत्तप्रभृतीनां तान्यनर्थकान्युच्यन्ते तथैवेमानि वाक्यानि विद्यन्त इति।

मीमांसायामचेतनेऽर्थबन्धनादिति[8] सूत्रेण मन्त्राणामानर्थक्यमुपपादितम्। अचेतनं प्रति चेतनवद्व्यवहारश्चेतनं प्रति स्तुत्यादिकथनं सर्वथा मन्त्रेऽर्थराहित्यं द्योतयति।

---

१. यजुर्वेदे वाजसनेयिसंहितायाम—९।२२; २. जैमि० सू० १।२।३१।
३. गोपथब्राह्मणे—२।२।६ तथा २।४।२।
४. जैमि० सूत्रे—१।२।४२; ५. तत्रैव—१।२।४३; ६ तत्रैव—१।२।४१।
७. मै० सं० १।९।२ तथा काठकसंहितायाम्—२६।३।
८. जै० सू० १।२।३५।

उपर्युक्तशङ्कायाश्चोत्तरे यास्कः प्रतिपादयति—मन्त्रा अनुपपन्नार्था इति प्रश्ने—ओषधे ! त्रायस्वैनमिति कथनं प्रति विशिष्टमुत्कर्षमेतस्याः स्थावरत्वात् प्राप्स्यत इत्येतत् त्राणमभिप्रेत्योक्तमोषधे ! त्रायस्वैनमिति, न छेदनं प्रतिपत्स्यतेऽल्पमित्यनेनाभिप्रायेण तस्मादुपपन्नार्थ एवायम् । वेदान्तदर्शने प्रतिपादितम्—'अभिमानिव्यपदेशः'[1] इति सूत्रं समर्थयति मन्त्रेऽर्थवत्त्वम् । अचेतनेऽप्यभिमानि देवानां व्यपदेशो जायते । अतस्तत्रानर्थक्यं निरस्तम् ।

पुनश्च स्वधिते मैनं हिंसीरित्याह हिंसन्निति प्रश्ने—आम्नायवचनादहिंसा प्रतीयते। प्रत्यक्षतो वृक्षश्छिद्यते कथमहिंसा इति प्रश्ने इयमहिंसा इयं हिंसा इत्यागमादेतत् प्रतीयते। प्रविशिष्टश्चायमेव वैदिक आम्नाय आगमः, एतत्पूर्वकत्वादन्येषामागमानाम् ।

स एव कृत्स्नस्य जगतः प्रतिविशिष्टाय श्रेयसेऽभ्युद्यतः सन् हिंसायां कर्त्तारं विनियोज्यत इति । अपि चेतदोषधिवनस्पतिपशुमृगपक्षिसरीसृपाः सम्यगुपयुक्ताः सन्तो यज्ञे परमुत्कर्षं प्राप्नुवन्ति। सोऽयमभ्युदय एव सम्पद्यत न हिंसा । तत्र यदुक्तम्मैनं हिंसीरित्याह हिंसन्निति न ह्यसौ हिनस्ति, अपि तु अनुगृह्णाति यज्ञो विनियोगार्थं विधानतश्छिन्दन् । 'या वेदविहिता हिंसा न सा हिंसा प्रकीर्तिता' इत्युक्तिरपि प्रचलिता । तस्मादुपपन्नार्था मन्त्रा इति ।

जैमिनिसूत्रे—'अभिधानेऽर्थवादः'[2] इति सूत्रेणार्थत्वमुपस्थापितम् । तत्रासतोऽर्थस्य अभिधायके वाक्ये गौणस्यार्थस्य उक्तिर्द्रष्टव्या । ओषधे ! त्रायस्वेति वाक्ये यदि ओषधयः शृण्वन्ति तर्हि मानवाः कथं न श्रोष्यन्तीति गौणप्रयोगेणार्थप्रतीतिर्जायते । एतादृशेषु स्थानेषु लाक्षणिकप्रयोगोऽवगन्तव्यः । परिणामतो मन्त्रेऽर्थविवक्षा विद्यत एव ।

आनर्थक्यविषयमधिकृत्यापरा शङ्का प्रस्तूयते—अथापि विप्रतिषिद्धार्था भवन्ति मन्त्रे । यथा—'एक एव रुद्रोऽवतस्थे न द्वितीयः', पुनश्च 'असंख्याताः सहस्राणि ये रुद्रा अधिभूम्याम्'[3] । 'अशत्रुरिन्द्र ! जज्ञिषे'[4] । 'शतं सेना अजयत् साकमिन्द्रः[5]' एतेषूदाहरणेषु विप्रतिषिद्धार्था दृश्यन्ते। तत्रेतरव्याघातः प्राप्यते। उपर्युक्ते

१ अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् । ( वे० सू० २।१।५ )

२ जै० सू० १।२।४६ ।

३. वा० सं० १६।५४, मै० सं० २।९।९ ।

४. ऋक्संहितायाम्—१०।१३३।२ ।

५. तत्रैव—१०।१०३।१ ।

प्रथमोदाहरणे—'एक एव रुद्रः', द्वितीये 'असंख्याता रुद्राः' विप्रतिषिद्धार्थाः। पुनश्च अपरे वाक्ये—अशत्रुरिन्द्रस्तथाऽन्ये वाक्ये 'इन्द्रः शतं सेना अजयदि'ति इतरेतर-व्याघातः। अतोऽनर्थका मन्त्रा इति। मीमांसायामपि—अर्थविप्रतिषेधादिति[1] सूत्रेण मन्त्राणामानर्थक्यं प्रकटितम्।

आक्षेपस्योत्तरे यास्कः प्रतिपादयति—विप्रतिषिद्धार्था मन्त्रा भवन्तीति यदुच्यते, तत्तु नैवोपयुक्तम्। एक एव रुद्रोऽवतस्थे, असंख्याताः सहस्राणीति देवता हि महा-भाग्ययागादेकोऽपि सत्यनेकधा भवति, अनेकोऽपि चैकधा[2]। 'अशत्रुरिन्द्र! जज्ञिषे'[3], 'शतं सेना अजयत् साकमिन्द्रः'[4] एतादृशानि वाक्यानि लोकेऽपि प्रयुक्तानि भवन्ति। यथा—असपत्नोऽयं ब्राह्मणोऽनमित्रोऽयं राजेति। अत्रेदं ज्ञातव्यमस्ति यल्लोके न हि कश्चिदसपत्नोऽस्ति। उक्तञ्च—

मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः।
उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः[5]॥

तथापि स्वल्पसपत्नं दृष्ट्वा केचिद् ब्रुवन्ति—असपत्नोऽयं ब्राह्मणः, अनमित्रोऽयं राजेति। एवमेव मेघेऽन्येषामसारतामभिप्रेत्येदमुक्तं स्यात्—'अशत्रुरिन्द्र! जज्ञिषे' इति। 'शतं सेना अजयत् साकमिन्द्रः' इत्यत्रापि रूपकल्पनयैवैषा युद्धप्रवादा स्तुतिः। अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते। तत्रोपमार्थेन युद्धवर्णा भवन्ति[6]। सम्यगन्वेषणीयं देवतातत्त्वं नैरुक्तेभ्यः। ततो मन्त्रार्थाविरोधेन सम्यगवभात्स्यते। नैगमवाक्यतत्त्वज्ञेन मन्त्रार्थो विगाहितुं शक्यः। गम्भीरपदार्थो हि वेदः। वेदार्थविबाधविभ्रान्ता एव हि प्रवादिनः स्वबुद्धिलाघवमाविर्भावयन्तो ब्राह्मणाः सन्तः सर्ववर्णसाधारणानि दर्शनान्तराणि प्रतिपेदिरे। अत्र शङ्कालवो मन्दशिक्षितत्वान्मतिविभ्रमाः। अशत्रुरिन्द्र इत्यादौ स्वल्पशत्रुरिति नञर्थबोधो व्याकरणशास्त्रादपि ज्ञायते। न हि सर्वे नञर्था निषेधार्थका एव भवन्ति। यतो हि तेषां षड्विधत्वं विश्रुतम्[7]। अतोऽशत्रुरिन्द्र इति व्यवहारेऽल्पशत्रुरेव गर्भितार्थः। मीमांसायां गुणादविप्रतिषेधः स्यादिति सूत्रं प्राप्यते[8]। अनेन सूत्रानुसारेण लोकेऽपि गुणाधिक्येन एतादृशः प्रयोगो दृश्यते। गुणाधिक्यं वीक्ष्यैव—

---

१. जै० सू० १।२।३९; २. नि० ७।१।४।
३. ऋ० सं० १०।१३३।२; ४. तत्रैव—१०।१०३।१।
५. नि० दु० वृ० १।५; ६. नैग० का० २।५।२।
७. तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥
८. जै० सू० १।२।४७।

त्वमेव माता च पिता त्वमेव त्वमेव बन्धुश्च सखा त्वमेव ।
त्वमेव विद्या द्रविणं त्वमेव त्वमेव सर्वं मम देवदेव ॥

इत्यादौ यथा कापि विरोधस्याशङ्का नास्ति, तथैव वेदेष्वप्येतादृशेषु स्थलेषु गौणप्रयोगस्यालङ्कारिकप्रयोगस्य लाक्षणिकप्रयोगस्य च प्रभावो ज्ञातव्यः । 'अशत्रुरिन्द्र जज्ञिषे, शतं सेना अजयत् साकमिन्द्रः' इत्यादौ गुणाधिक्यादेव इन्द्रस्य तादृशं वर्णनमुपन्यस्तमिति ।

अथापि जानन्तं सम्प्रेषयति—"अध्वर्यूर्होतारम्—अग्नये समिध्यमानायानुब्रूहीति तदु हैक आहुः । अग्नये समिध्यमानाय होतारमनुब्रवीति"[1] इति । होता हि विधिज्ञ एव भवति । न ह्यविद्वान् विहितोऽस्तीति स विजानात्येवामुष्मिन्नवधाविदं मयाऽनुष्ठातव्यमिति तदेतद्विज्ञातार्थस्य सतः सम्प्रेषणमनर्थकमेव ।

अत्र विचार्यते—लौकिकेष्वर्थवित्सु शब्देषु एतदेव स्वाभाव्यं दृष्टम् । जानन्तं गुरुमभिवादयते स्वगोत्रमभिवदन्—भो ! वत्सगोत्रीयो रामभद्रोऽहं भवन्तमभिवादये । गुरुः रामभद्रं पूर्णतो जानाति परं लोक एष व्यवहारः । पुनश्च मधुपर्कं जानन्नपि विवाहादिप्रकरणे—'मधुपर्को मधुपर्को मधुपर्कः'[2] इति त्रिरुच्चारणं भवति । तदेतदर्थवत्स्वपि शब्देषु विहितार्थख्यापनार्थं शब्दसामान्यादर्थवन्तो मन्त्रा इति ।

पुनरपि शङ्का समुपस्थाप्यते—अदितिः सर्वमिति—

"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्"[3] ॥

अत्र कथं यैव द्यौः सा अन्तरिक्षम्, यैव माता सैव पुत्रः सैव पितेत्येवमादि किमपि बहुत्र परम्परासम्बद्धमुच्यते । तदर्थवत्त्वे सत्युपपादयितुमशक्यम् । तस्मादनर्थका मन्त्राः । मीमांसायामर्थविप्रतिषेधादिति सूत्रं लभ्यते । अदितिर्द्यौरित्यस्यार्थे विप्रतिषेधो दृश्यते तस्मान्मन्त्रा अनर्थका इति ।

अत्र विचार्यते—अदितिर्द्यौरिति यत् कथ्यते तत्र ज्ञातव्यमस्ति यद् द्विधा हि शब्दप्रवृत्तिः — मुख्यार्था गौणी च । तत्रैवं सति यत्र मुख्यासम्भवस्तत्र गौण्याश्रीयते । स एव भक्तिवादोऽदितिः । यथा कश्चिद् ब्रूयात् कञ्चिदनेकोपकारे प्रवृत्तम्—त्वमेव माता च पिता त्वमेवेति । एवमेतदपि दृश्यते ।

---

१. श० ब्रा० १।३।२।३ ;　　२. आश्व० गृह्यसूत्रे—१।२४।७ ।
३. ऋ० सं० १।६।१६।५८।

लौकिकेष्वपि चार्थवत्सु शब्देष्वेतदुच्यमानं दृष्टम्—"सर्वरसा अनुप्राप्ता पानीयमिति[1]"। ततो हि तेषां प्रभव इत्यनया गुणवृत्त्या एवमुच्यते। एवमिहापि गुणवृत्त्या कयाचिददितेः सर्वत्वमुच्यते। मन्त्रेषु यदितरेतरविरुद्धमित्युच्यते, तदयुक्तम्। गुणवृत्त्या सर्वमुपपद्यत एव। मीमांसायामपि गुणादविप्रतिषेधः स्यादिति सूत्रेण मन्त्रेऽर्थवत्त्वं समर्थितम्। गुणयोगादत्र मन्त्रार्थेऽविप्रतिषेधो विद्यत इति।

मन्त्राणामानर्थक्येऽपरो हेतुरुपस्थाप्यते मन्त्रा अविस्पष्टार्था भवन्ति—अम्यक्, यादृश्मिन्, जारयायि, काणुका इति। न ह्येषां विस्पष्टार्थता मन्त्रेषु शक्यते ज्ञातुम्। न च केचिदर्थवन्तः केचिदनर्थका इति न्याय्यमभ्युपगन्तुम्। अर्द्धवैशजं हि स्यात्। तस्मान्मन्त्रा अनर्थकाः। मीमांसायामविज्ञेयादिति[2] सूत्रं प्राप्यते। अनेन सूत्रेण प्रतिपादितमस्ति यन्मन्त्रेषु स्पष्टार्थता विज्ञेयार्थता च नैव विद्यते। अतो मन्त्रा अनर्थकाः। उदाहरणे—"सृण्येव जर्भरी तुर्फरी तू नैतोशेव तुर्फरी पर्फरीका[3]"। इत्यत्र जर्भरी-तुर्फरी-पर्फरी-शब्दानामर्थोऽस्पष्टोऽविज्ञातश्च।

अत्र विचार्यते—यदुच्यते मन्त्रा अविस्पष्टार्था भवन्ति, तत्राज्ञानं हि अविस्पष्टार्थतायाः कारणम्। अत्र कथनीयं वर्तते—यन्नैष स्थाणोरपराधो यदेनमन्धो न पश्यति। पुरुषापराधः स भवति। स्थाणोरनवलोकने पुरुषापराध एव यदसावचक्षुष्मान्, न ह्यत्र स्थाणोरपराधः। एवमिहापि न हि मन्त्राणामपराधो यदेषामर्थान् पुरुषो न जानाति तत्र मन्त्रार्थाज्ञानं प्रति तस्य पुरुषस्याज्ञानमेव कारणं विद्यते। अशिक्षितेन मन्त्रार्थो न ज्ञायते। यथा जानपदीषु प्रवृत्तिषु कौशलशिक्षाकृतो विघातः पुरुषविशेषो भवति पुरुषाणां विशेषः। एवमिहापि मन्त्रार्थशिक्षाकौशलकृतपुरुषाणां विशेषो भवत्येव।

केचित् पुरुषा अविस्पष्टार्थानपि शक्नुवन्ति विस्पष्टीकर्तुम्। केचिद् विस्पष्टानपि मन्त्रान् न शक्नुवन्ति निर्वक्तुम्। तत्रैवं सति वेदितृषु भूयोविद्यः प्रशस्यो भवति नेतरो मन्दबुद्धिरशिक्षितः। पारोवर्येण विजानन्ति आचार्यपरम्परया ते पारोवर्यविदस्तेषां य एव भूयोविद्यो भवति, बहुश्रुतः कश्चित्, स एव प्रशस्यते, स एव मन्त्रार्थविज्ञाता प्रशस्यो भवति। न तु मन्दबुद्धिः प्रशस्यो भवति। मन्त्रेषु अविस्पष्टार्थो नाम हि कश्चिदस्ति।

मीमांसायां 'सतः परमविज्ञानमिति[4] सूत्रेण एतादृशेषु स्थलेष्वर्थवत्त्वं प्रमाणयति। अनेन सूत्रेण प्रतीयते यन्मन्त्रेष्वर्थगाम्भीर्यं विद्यते, परमालस्यात् प्रमादाच्च

---

१. नि० दु० वृ० १।५; २. जै० सू० १।२।३८।
३. ऋ० सं० १०।१०६।६; ४. जै० सू० १।२।४९।

मनुष्यो तमवज्ञातुमसमर्थो भवति। अर्थज्ञानाय निगमनिरुक्तव्याकरणप्रभृतिशास्त्रस्यावलोकनं कर्त्तव्यमिति। निरुक्ते तादृशाः शब्दा व्याख्यातास्तेषामर्थोऽपि तत्र प्रतिपादितः। यथा तत्रैव निरुक्ते जर्भरी भर्तारौ, तुर्फरी हन्तारौ, पर्फरी भेत्ताराविति व्याख्यातम्।

निष्कर्षतः कथनमिदं सङ्गतं भविष्यति यन्मन्त्रेष्वर्थत्वं विद्यते। न हि मन्त्रा केवलं पठनाय एव प्रयुक्ताः। मन्त्रार्थज्ञानाय वेदाङ्गसाहित्यस्य वेदस्य चाध्ययनमनिवार्यम्। वेदे साहित्यिकसामाजिकार्थिकं राजनीतिकं भौतिकाध्यात्मिकादिसम्बद्धा अर्थाः सम्प्रति वैदिककालस्य यथार्थतां प्रकटयन्ति। तस्मिन् समये मानवमूल्यस्य कीदृशी स्थितिरासीदिति मन्त्रार्थनैव ज्ञायते। अर्थवन्तः शब्दसामान्यादिति कथयता यास्काचार्येण प्रारम्भ एव मन्त्रस्यार्थत्वं स्थिरीकृतम्। मन्त्रार्थत्वविवेचने वेदभाष्यकारसायणेनापि स्वकीयं कौशलं दर्शितम्। परं तत्र यास्कस्य प्रभावो नितरां दृश्यते। मीमांसासूत्राणामुपस्थापनं सायणेनैव ऋग्वेदभाष्यभूमिकायां विशेषेण कृतम्। अर्थत्वसिद्धये निरुक्तस्य दृष्टिस्तत्रालोक्यते।

पाणिनिपद्धत्यनुसारं प्रातिपदिकेऽर्थमनिवार्यम्। यतो हि—अर्थवदधातुरप्रत्ययः प्रातिपदिकमिति[1]। यदि प्रातिपदिका अर्थयुक्तास्तदा प्रातिपदिकनिष्पन्नानि पदानि कथमर्थरहितानि भविष्यन्ति। अर्थरहितस्य शब्दस्य पदावाप्तये संस्कृते योग्यता नास्ति। अतः सर्वाणि पदानि वैदिके लौकिके च संस्कृते प्रयुक्तानि नूनमेवार्थसम्पन्नानीति। अर्थवन्तः शब्दसामान्यादिति कथयता निरुक्तकारेण प्रतिपादितं यल्लोके यदि शब्दा अर्थयुक्ता अर्थानभिव्यञ्जयन्ति तथैव वेदेऽपि मन्त्रा अर्थवन्तो स्वाधिष्ठितानर्थानभिव्यञ्जयन्ति। निरुक्तस्य प्रसिद्धटीकाकारेण दुर्गाचार्येण मन्त्रार्थवत्त्वनिर्णये उपसंहृतम्—

इति प्रभिन्नेषु परस्य हेतुषु स्वपक्षसिद्धावुदिते च कारणे।
अवस्थिता मन्त्रगणस्य सार्थता तदर्थमेतत्खलु शास्त्रमर्थवत्[2] ॥ इति।

●

---

१. अष्टा० १।२।४५;　　२. नि० दु० वृ० १।५।

# प्रातिपदिकत्वविचारः

डॉ० आदित्यनाथभट्टाचार्यः
उपाचार्यः, संस्कृतविभागस्य
वर्धमानविश्वविद्यालये
पश्चिमवङ्गः

❀❀❀

'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( १।२।४५ ) इति पाणिनेः प्रथमाविभक्तिविधायकं सूत्रं विशेषेणालोचनीयमस्ति। अत्रास्माभिः विचार्यम्, प्रातिपदिकार्थमात्रे प्रथमायां कस्तावत् प्रातिपदिकार्थ इति ? प्रातिपदिकस्यार्थः प्रातिपदिकार्थः। किं पुनः प्रातिपदिकम् ? पदं पदमिति प्रतिपदम्, वीप्सायाम् अव्ययीभावः। प्रतिपदं भवमिति ठक्प्रत्ययेन प्रातिपदिकम् इति सिद्ध्यति।

अत्र सुबन्तं पदमेव ग्राह्यम्, न तु तिङन्तं पदमपि। तेन वृक्षः, वृक्षौ, वृक्षा इत्यादिषु सुबन्तपदेषु वृक्षशब्दस्य विद्यमानत्वात् तस्य प्रातिपदिकत्वम्। योगरूढपदमिदं न तु यौगिकम्। अन्यथा गच्छति, गच्छतः, गच्छन्ति इत्यादिषु तिङन्तपदेष्वपि विद्यमानत्वाद् गमादिधातुशब्दानामपि प्रातिपदिकत्वं स्यात्। तन्नोपपन्नम्, वृक्षादिनामशब्दानामेव प्रातिपदिकत्वप्रसिद्धेः। अतः 'रूढिर्योगमपहरति' इति न्यायात् प्रसिद्ध्या प्रातिपदिकं सुबन्तपदनिष्ठमेव भवेत्, न तु तिङन्तपदनिष्ठमपीति फलितम्।

अत्रेदं मन्तव्यम्, यद्यपि 'लघ्वर्थं हि संज्ञाकरणमि'ति भाष्यकृता नियम्यते, तथापि 'महासंज्ञाकरणम् अन्वर्थत्वाय' इति भाष्यकृदुक्तेर्यत्र यत्र पाणिनिना अन्वर्था महासंज्ञा समास्थीयते, तत्र तत्र संज्ञिसूत्रनिरूपणमपि न कार्यम्, अतः कारकसमासकर्मप्रवचनीयादीनाम् अन्वर्थमहासंज्ञानां संज्ञिसूत्राणि न कृतानीति सुमहत् फलम्।

नन्वेवं सत्यत्र प्रातिपदिकमिति महासंज्ञाकरणात् संज्ञिसूत्रमपि नैव कार्यम्। कथं तर्हि संज्ञिसूत्राण्यत्र पुनः पाणिनिना प्रणीतानीति प्रश्ने प्रतिविधेयम्, प्रातिपदिकमिति पारिभाषिकी संज्ञा। नैतत् केवलयौगिकम्, केवलयौगिकत्वे महती विपत्तिः। अतोऽन्वर्थत्वाभावाद् न्याय्यमेवात्र संज्ञिसूत्रविधानम्। तेन च धातुभिन्नप्रत्ययभिन्नप्रत्ययान्तभिन्नानाम् अर्थवच्छब्दानां प्रातिपदिकत्वं स्यादिति अर्थवत्सूत्रे निर्धारितम्। 'कृत्तद्धितसमासाश्च' इति सूत्रकरणाच्च

प्रत्ययान्तानां कृत्तद्धितसमासानां प्रातिपदिकत्वं सिद्धम्, 'अनर्थकस्य च निपातस्य प्रातिपदिकसंज्ञा वक्तव्या' इति वार्त्तिकवचनाच्च अनर्थकचादिनिपातानामपि प्रातिपदिकत्वं विभावनीयम्।

संज्ञिसूत्राकरणे त्वेषां समेषां न परिग्रहः स्यादित्यत एवास्याः संज्ञायाः पारिभाषिकत्वमुन्नेयम्। कथं तर्हि टिघ्वादिवत् लघुसंज्ञाम् अकृत्वा महासंज्ञा समाश्रितेति **आचार्यमतोपरि** नैवं तर्कः करणीयः।

अत्र स्त्रीप्रत्ययान्तशब्दानां प्रातिपदिकत्वमस्ति न वेति किञ्चिद्विचारणीयम्। अप्रत्यय इति निषेधाद् अर्थवत्सूत्रेण स्त्रीप्रत्ययान्तशब्दानां नैव प्रातिपदिकत्वं सिद्धम्। न च स्त्रीप्रत्ययास्तद्धितप्रत्ययान्तर्गता येन 'कृत्तद्धितसमासाश्च' इति सूत्रेणापि तेषां प्रातिपदिकत्वं स्यात्। 'ङ्याप्प्रातिपदिकात्' इति सूत्रे ङ्यापोः पृथग् ग्रहणात् स्त्रीप्रत्ययान्तशब्दानां प्रातिपदिकभिन्नत्वमेव विज्ञाप्यते।

अथ स्त्रीप्रत्ययान्तशब्दानां यदि प्रातिपदिकत्वमेव न स्यात्, तर्हि अजा शिवानी इत्यादिषु कथं प्रथमाविभक्तिर्जायेत? तत्रोच्यते—एतदर्थमेव सूत्रे लिङ्गग्रहणं कृतम्। तदुक्तं पण्डितप्रवरक्षितीशचट्टोपाध्यायमहोदयैस्तदीयमञ्जूषाख्यप्रख्यातपत्रिकायाम्—

"स्त्रीप्रत्ययानां तद्धितेष्वनन्तर्भावात् स्त्रीप्रत्ययान्ताः शब्दाः प्रातिपदिकसंज्ञया न क्रोडीक्रियन्ते, अत एव 'ङ्याप्प्रातिपदिकात्' इत्यत्र पृथक्तया ङ्यापोर्ग्रहणम्, अत एव स्त्रीप्रत्ययान्तेभ्यः शब्देभ्यः प्रथमासिद्ध्यर्थं सूत्रे लिङ्गोपादानम्।"

अत्र केचिदेवमाहुः 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया लिङ्गविशिष्टतया स्त्रीप्रत्ययान्तशब्दानां प्रातिपदिकत्वव्यपदेशाद् अजादौ प्रातिपदिकार्थमात्रे प्रथमाऽस्तु, ङ्याब्ग्रहणमपि निरर्थकमस्तु। तच्च द्योतितं महाभाष्येऽपि—

'एतान्येतस्याः परिभाषायाः प्रयोजनानि, यदर्थमेषा परिभाषा कर्त्तव्या। एतस्यां च सत्यां नार्थो ङ्याब्ग्रहणेन।'

तत्रैकदेशी सिद्धान्ती एवं समाधत्ते, 'विभक्तौ लिङ्गविशिष्टाग्रहणम्' इत्यपवादपरिभाषानुसारेण विभक्तिमाश्रित्य कृते कार्ये लिङ्गविशिष्टपरिभाषा न प्रवर्त्तते। पतञ्जलिरप्याह 'युवोरनाकौ' इति सूत्रभाष्ये—

'विभक्तौ लिङ्गविशिष्टं नेत्येषा परिभाषा न कर्त्तव्या'।

तदेवं लिङ्गविशिष्टपरिभाषाया अप्रवृत्तेः स्त्रीप्रत्ययान्तशब्दोत्तरं प्रातिपदिकार्थमात्रे प्रथमा न भवति। तत्र सूत्रे लिङ्गपदग्रहणाद् अत्र लिङ्गाधिक्ये प्रथमा कार्या।

वस्तुतस्तु महाभाष्यकारमते प्रातिपदिकार्थमध्ये लिङ्गग्रहणाद् वरं स्त्रीप्रत्ययान्तशब्दोत्तरं प्रातिपदिकार्थमात्र एव प्रथमाविधानम्। पुंस्त्वक्लीबत्ववत इव स्त्रीत्ववतो द्रव्यस्य वाचकं यत् प्रातिपदिकं तदुत्तरं स्वार्थे टाप्प्रभृतिप्रत्ययो विहितः। प्रातिपदिकनिष्ठं स्त्रीत्वं प्रातिपदिकं विशेषयति केवलम्। प्रातिपदिकेन द्रव्यं प्राधान्येनाभिधीयते, स्त्रीत्वादिकं तु विशेषणतया अप्राधान्येन अभिधीयत इति ध्येयम्। अतः स्त्रीप्रत्ययान्तशब्देभ्यः प्रातिपदिकार्थमात्रे प्रथमैव समीचीना इति समाहितं भाष्यदृष्ट्या।

अपि च द्रोणो व्रीहिरित्यत्र परिच्छेद्यपरिच्छेदकभावरूपभेदान्वयोपपत्तये परिमाणग्रहणं कृतम्, अन्यथा तत्र प्रातिपदिकार्थमात्रे प्रथमायां 'नामार्थयोरभेदातिरिक्तः सम्बन्धोऽव्युत्पन्नः' इति न्यायेन अभेदान्वयापत्तेः 'द्रोणाभिन्नो 'व्रीहि'रित्यनिष्टशाब्दबोधः प्रसज्येत, 'द्रोणपरिमितः व्रीहि'रिति विवक्षितशाब्दबोधस्तु न संगच्छेत। अतः परिमाणग्रहणं कार्यमिति यदभिलषितं व्याख्याकृद्भिस्तदपि चिन्तनीयम्। अस्तु तावद् द्रोणशब्दोत्तरं प्रातिपदिकार्थमात्रे प्रथमेव।

अत्र शक्यार्थमादाय प्रथमाविभक्तौ कृतायां ततो व्रीहिशब्देन च तस्यान्वयानुपपत्तौ वाक्यार्थबोधकाले द्रोणशब्दस्य द्रोणपरिमिते लक्षणा कर्त्तव्या, तेनाभिप्रेतशाब्दबोधोऽप्युपपद्यते। तदर्थमलमत्र परिमाणग्रहणेन, प्रातिपदिकार्थमात्रेणैवास्त्वस्य गतार्थता। निरीक्षितमेतत् सम्यक् तत्त्वबोधिनीप्रौढमनोरमादिग्रन्थेषु।

एवम् एकत्वद्वित्वादिसंख्यायाश्च महाभाष्यकारमते प्रातिपदिकार्थान्तर्भूतया एको द्वौ बहव इत्यत्र प्रातिपदिकार्थमात्रे प्रथमाविभक्तिसिद्धेः अर्थवत्सूत्रे वचनग्रहणमपि नावश्यकम्। लिङ्गपरिमाणवचनग्रहणं तु सूत्रे प्रपञ्चार्थम्।

अथ प्रातिपदिकस्य कीदृशी अर्थवत्ता तदेवास्माभिः समीक्ष्यते। प्रथमकल्पे नियतोपस्थितिकत्वेन शक्यार्थस्यैव प्रातिपदिकार्थता बोध्या। तथा हि प्रातिपदिकोच्चारणमात्रेण यस्तावदर्थो नियमेन ज्ञायते स एव प्रातिपदिकार्थः। स च शब्दस्य मुख्यार्थः वाच्यार्थो वेति बोध्यः। स च यद्यपि प्रधानतया वस्तुभूतो द्रव्यभूतो वा भण्यते, तथापि न केवलं द्रव्यम्, न च केवलो गुणः, न केवला क्रिया, न वा केवला जातिः शब्दार्थो भवति।

यदि केवलद्रव्यादेः शब्दार्थत्वं स्यात् तर्हि सास्नादिर्गौः, गोत्वं गौः इति सामानाधिकरण्येन प्रतीतिः स्यात्। न च तथा भवति। किन्तु गोः सास्नादिः, गोर्गोत्वम् इत्येवम् सर्वानुभवसिद्धप्रयोगे भेदेनान्वयात् शब्दार्थस्य द्रव्यादिभिन्नत्वमेव प्रतीयते। अतः सास्नादिमत्त्वस्यैव प्रातिपदिकार्थत्वं न तु सास्नादेरिति सिद्धम्। तच्च प्रदर्शितं पतञ्जलिना महाभाष्यस्य पस्पशाह्निके। प्रत्याहाराह्निके च 'चतुष्टयी

शब्दानां प्रवृत्तिरि'त्युक्त्या तत्रभवता शब्दानां द्रव्यादिचतुष्टयविशिष्टे समुदाये वा शक्तिरङ्गीकृता, न तु प्रत्येके ।

यद्यपि व्याकरणाचार्यव्याडिमते शब्दार्थनिर्णयकाले व्यक्तिमात्रपक्षः स्वीकृतः, वाजप्यायनेन तु जातिमात्रपक्षः समासादितः, तथापि पाणिनिना वस्तुगत्या जाति-व्यक्त्युभयपक्ष एवोररीकृतः । तथा हि, एतन्मते न केवलं द्रव्यं व्यक्तिर्वा शब्दार्थः, व्यक्तौ शक्तिस्वीकारे व्यक्तोनाम् आनन्त्यात् शक्तीनामप्यानन्त्यं स्यात्, तच्च गौरवावहम् ।

किञ्च केवलव्यक्तिपक्षे 'गौः पूज्यः, दानीयो विप्रः' इत्यादिव्यवहारेषु गवादि-व्यक्तेर्बोधाद् निखिलगवादिविषयको बोधो न स्यात्, 'जात्याख्यायामि'त्यादिसूत्रं च व्याकुप्येत । न च पुनः केवला जातिः कथमपि पदार्थः स्यात्, जातेरभिधया भाने व्यक्तेरभानात् । तथा च 'नागृहातविशेषणा बुद्धिः विशेष्येषूपजायते' इति न्यायेन विशेष्यरूपव्यक्तेर्ज्ञानात्पूर्वम् अभिधया मुख्यवृत्त्या विशेषणरूपजातेः ग्रहणे सति 'विशेष्यं नाभिधा गच्छत् क्षीणशक्तिर्विशेषणे' इति न्यायेन अभिधायाः क्षोणशक्तेर्विरतव्यापारत्वाद् अभिधाशक्त्या विशेष्यरूपव्यक्तेर्बोधो न स्यात् ।

न च मीमांसकमतमाश्रित्य लक्षणया गौणवृत्त्या व्यक्तेर्बोधः सम्भवेदिति वाच्यम्, यतो हि जातिशक्तिवादिनां मते गौरस्तीत्यादिस्थले गोशब्दाद् अभिधया गोत्वजातेर्ज्ञानानन्तरम् अस्तोत्यर्थेन सह गोत्वरूपजातेरन्वयसम्भवात् लक्षणाबोजा-न्वयानुपपत्तेः अनुपपत्तेर्लक्षणयापि सर्वानुभवसिद्धव्यक्तेर्बोधो न स्यात् ।

किञ्च केवलजातिपक्षे 'गौर्जायते', 'गौर्म्रियते', 'गामानय' इत्यादिशिष्टव्यव-हाराणाम् अनिष्टं प्रसज्येत, गोत्वरूपजातेरुत्पत्त्यभावाद् विनाशाभावाद् आनयना-सम्भवाच्चेति वेदितव्यम् । अपि चास्मिन् पक्षे बालश्च बालश्च बालश्च इत्यर्थ बाला इत्येकशेषवृत्तिर्न स्यात्, 'सरूपाणामेकशेष एकविभक्तौ' इति सूत्रस्य अनारभ्य-माणत्वात्, इत्यस्माद्धेतोः पतञ्जलिप्रमुखाणां मनीषिणाम् उभयपक्ष एव आग्रहो दृश्यते, न तु कस्मिंश्चिद् एकस्मिन् कक्षे पक्षपातः । तदवगतं यत् प्रातिपदिकार्थविषये द्विकपक्षः पाणिनिसम्मतः ।

वार्त्तिककृता पुनस्तदतिरिक्तलिङ्गसहितस्त्रिकपक्षः समाराधितः, केयटा-चार्येण अतिरिक्तसंख्यासहितश्चतुष्कपक्षः कक्षीकृतः, पतञ्जलिना तु तदतिरिक्त-कारकसहितः पञ्चकपक्षः समङ्गीकृतः, कर्त्तृत्वकर्मत्वादेः प्रातिपदिकनिष्ठशक्ति-

विशेषत्वात्[१]। एतान् पक्षान् समादाय विनिश्चिते प्रातिपदिकार्थत्वे शिष्टप्रयोगानुरोधेन कुत्रचित् शक्तिग्रहे सञ्जाते यथायथं शब्दार्थविज्ञानं भवति ।

अत्र सत्यामपि गुणक्रियाजातिकारकादीनामुपस्थितौ प्राधान्येन द्रव्यस्यैव बोधः। अतो वस्तुवाचकत्वं नामत्वमिति नामलक्षणम् अभिप्रेतमेव शाब्दिकैः। उक्तञ्च यास्काचार्येण—'सत्त्वप्रधानानि नामानि' ।

इदञ्चानुसन्धेयम्, कृत्तद्धितसमासाश्चेति सूत्रे 'अर्थवदि'त्यनुवृत्त्या कृदन्तादिप्रातिपदिकस्याप्यर्थवत्ता स्वीकर्त्तव्या, सा त्वर्थवत्सूत्रापेक्षया स्वतन्त्रा बोध्या, तद्धितान्तस्थले तद्द्रव्यादिरूपार्थसम्भवेऽपि अन्यत्र कृदन्तसमासस्थलयोस्तदसम्भवात् । अतोऽत्र कृत्तद्धितसमासेषु पदविधिषु पृथगर्थे सन्निविष्टपदानां समुदायशक्त्या 'विशिष्टैकार्थः' एकार्थीभावलक्षण एवार्थो ग्रहणीयः । तदुक्तम्—

'स च प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वरूपः' ।

अथ शङ्क्येत, क्विप्प्रत्ययान्तस्थले क्विप्प्रत्ययगतसकलावयवानां लोपात् केवलधातुरेवावशिष्यते । धात्वतिरिक्तस्य कस्यचिदसम्भवाद् एकार्थीभाव एव न सम्भाव्यते। तत्र का गतिरिति शङ्कायामुच्यते, अत्र विशिष्टार्थबोधकत्वं यद्यपि वास्तविकं नास्ति, तथापि अलौकिकविग्रहवाक्ये कल्पितैकार्थीभावसामर्थ्यस्यारोपणेन अर्थवत्त्वभानं भवति । तदुक्तं शब्दरत्ने—

'अलौकिकवाक्ये कल्पितैकार्थीभावस्य तत्राप्यारोपेणादोषात्' ।

मन्तव्यमिदं यत्, लोके वर्णसमुदायात्मकघटादिशब्दस्यैव हि अर्थवत्ता अनुभूयते, न तु तदवयवभूतानां वर्णविशेषाणामपि अर्थवत्ता कदाचिदप्युपलभ्यते । अतो हि समुदायोत्तरमेव विभक्तियोगः, न वर्णोत्तरमिति विशेषः । तथा चोक्तं स्पष्टीकृत्य 'हयवरट्' इति भाष्योद्द्योततत्त्वालोके—

'यथा रथाङ्गानां प्रत्येकं गमनाजनकत्वेऽपि समुदायस्य रथस्य गमनजनकता, यथा च सुराङ्गानां प्रत्येकम् उन्मादाजनकत्वेऽपि समुदायस्य सुराया उन्मादजनकता, तथा शब्दानां प्रत्येकमनर्थकत्वेऽपि समुदायस्य शब्दस्य अर्थवत्ता' ।

भाष्यकृता चोक्तम्—

'अनर्थकास्तु वर्णाः। कुतः ? प्रतिवर्णमर्थानुपलब्धेः' ।

अपि च 'सङ्घातस्यैकार्थ्यात् सुबभावो वर्णात्' इति भाष्यवार्त्तिकव्याख्यायामाहुः भाष्यकृतः —

---

१. तिङादिभिरभिहितस्य कर्तृत्वादेः प्रातिपदिकार्थता प्रसक्ता । तत्र 'अभिहिते प्रथमा' इति वार्तिकेन प्रथमापि सङ्गता ।

'सङ्घातस्यैकत्वमर्थः । तेन वर्णात् सुबुत्पत्तिर्न भविष्यति' ।

वस्तुतस्तु एकाल्विशिष्टधातुप्रातिपदिकप्रत्ययनिपातानामेव अर्थवत्त्वम् । तथापि सर्वेषां वर्णानां न सम्भवत्यर्थवत्ता । तत्र येषां वर्णानामर्थवत्ता तेषां धातु-प्रत्ययभिन्नानाम् अर्थवत्सूत्रेण प्रातिपदिकत्वात् सुब्विभक्तियोगः स्यात्, नान्येषामिति भाष्यकृन्मतम् । तदुक्तम्—

'तत्र किमस्माभिः शक्यं कर्त्तुम्—यद्धातुप्रातिपदिकप्रत्ययनिपाता एकवर्णा अर्थवन्तोऽन्येऽनर्थकाः ।'

उद्द्योतकृतश्चाहुः —

'केषाञ्चिद् वर्णानां स्वाभाविकशक्तिमत्त्वेन अर्थवत्त्वेऽपि सर्वेषां नार्थवत्ता' ।

अथ वर्णसमुदायात्मकशब्दवत् पदसमुदायात्मकवाक्यस्याप्यर्थवत्तोपपत्ते-र्वाक्यस्यापि प्रातिपदिकत्वमस्तु, अतस्तदुत्तरं स्वादिविभक्तिर्भवतु, इत्येवं प्राप्ते इद-मुच्यते, 'कृत्तद्धितसमासाश्च' इति सूत्रे समासवाक्यस्यैव विशेषेण प्रातिपदिकत्व-विधानाद् इदमेव हि ज्ञाप्यते यत् समासव्यतिरिक्तानाम् अन्येषां वाक्यानां प्राति-पदिकत्वं नैव स्यादिति । तदुक्तं भाष्यकृता—

'समास एवार्थवतां समुदायानां प्रातिपदिकसंज्ञा भवति, नान्य इति ।

कल्पान्तरे आरोपितार्थस्य लाक्षणिकार्थस्य वा प्रातिपदिकार्थता अनुमोदिता । तदुक्तं शब्देन्दुशेखरे—

'परे त्वत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं तदाश्रयश्च, स च मुख्य इवारोपिततदाश्रयोऽपि ।'

नन्वत्र शशशृङ्गादिशब्दा न वस्तुसन्तः, अत. 'अलीका' इत्यर्थवत्ताभावात् कथमेषां प्रातिपदिकत्वम् ? प्रातिपदिकत्वाभावे तु सुबुत्पत्त्यभावाद् अपदत्वेन कथं शास्त्रे व्यवहारः ? तत्रोच्यते—

वैयाकरणैर्न केवलं बाह्या व्यावहारिका एव वा पदार्थाः स्वीकृताः, बौद्धा अपि पदार्थाः काल्पनिका आरोपितार्था वा अङ्गीकृताः । शशशृङ्गादीनां व्यावहारिक-पदार्थत्वासम्भवेऽपि रज्जुसर्पादिवद् मनःकल्पितत्वाद् बौद्धार्थत्वमस्त्येव । यथा सादृश्याद् रज्जौ सर्पविभ्रमः, एवं शृङ्गसादृश्यात् शशकर्णयोः शृङ्गभ्रमः । अतः काल्पनिकार्थस्य प्रसिद्धत्वात् शशशृङ्गादीनां प्रातिपदिकत्वम् अर्थवत्सूत्रेण सङ्गत-मेवेति तदुत्तरं सुबुत्पत्तौ पदत्वसम्भवात् शिष्टवाक्येऽपि व्यवहारो युज्यते । अतश्चाहुः शब्दरत्नकृतः—'कृत्तद्धितसमासाश्चे'ति सूत्रव्याख्यायाम्—

'शशशृङ्गादिपदानाञ्च बौद्धे तस्मिन् शक्तिरिति न तदर्थमपि समासग्रहणमिति बोध्यम् ।'

अयं भावः—ज्ञानमात्रं प्रति विषयस्य कारणत्वाभ्युपगमात् शशशृङ्गादिशब्दजन्यबोधे शशशृङ्गादिशब्दानां बोधविषयता स्वीकर्त्तव्या । स च शशशृङ्गादिविषयः स्वाप्निकवस्तुवद् ज्ञानकालीनः प्रातिभासिकसत्ताविशिष्ट एव वा समास्थेयः । अत्रोऽत्र शशे शृङ्गम्, वन्ध्यायां पुत्रः, खे पुष्पम् इत्याद्यारोपगर्भविग्रहमादाय सप्तमीसमास एव कार्यः, न तु षष्ठीसमासः । षष्ठीसमासे तु प्रतियोग्यनुयोगिनोर्वैशिष्ट्यावगाही कश्चिद् व्यवहारोपयोगिसम्बन्धो मिथ आपद्येत । तच्चात्र न सम्भवति । सप्तमीसमासावलम्बने तु सादृश्यदूरत्वपित्तादिदोषवशात् शशादौ शृङ्गादीनां रज्जुसर्पादिवदारोपाङ्गीकारे आरोपस्य च व्यवहारकाल एव बाधितुं शक्यत्वाद् न काचिदनुपपत्तिः स्यात्—ईदृशस्थले कश्चित् कल्पितः सम्ब्रन्धो बौद्धसामर्थ्यं वा ज्ञानकाले स्वीक्रियेत, ततः समासाङ्गीकारे न किमपि बाधकमवतिष्ठेत । अपि च बहिर्बाधितत्वेन शशादौ शृङ्गादीनां ज्ञानं बौद्धार्थास्तित्वकल्पनायां पर्यवस्यति । तदुक्तं जगन्नाथचरणैर्ज्योत्स्नायाम्—

'ज्ञानं प्रति विषयस्य कारणत्वेन स्वप्नभ्रमाद्युपपत्तये बौद्धार्थकल्पनाया आवश्यकत्वादिति भावः ।'

किञ्च 'सिद्धे शब्दार्थसम्बन्धे' इति भाष्यवार्त्तिके शब्दार्थयोर्नित्यतादात्म्यसम्बन्धोऽभिहितः । स च 'शब्दस्य सत्त्वे अर्थावगमः, तदसत्त्वे तु न तदवगमः' इत्यन्वयव्यतिरेकबलादुपपन्नः । तञ्च द्रढयति 'सिद्धं त्वन्वयव्यतिरेकाभ्यामि'ति भाष्यवार्त्तिकम् । अत्र प्रकृतिभूतशब्द एवार्थवाचकः, प्रत्ययस्तु तद्द्योतक एवेति स्पष्टीकृतं कैयटेन—

'प्रकृतिः सर्वानर्थान् अभिदधाति, द्योतकास्तु विभक्तय इति सिद्धैवार्थवत्ता' इति ।

अतः शशशृङ्गादीनां सिद्धप्रकृतिभूतशब्दानां सत्त्वमेवार्थविज्ञाने पुष्कलं कारणमित्यनुसन्धेयम् । तदुक्तं हरिणा—

'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते' ॥ इति ।

अतो हि महाभाष्ये प्रथमवाक्ये शब्दानुशासनमेव प्रतिज्ञातम्, न तु पृथक्तया अर्थानुशासनमपि । एवं शास्त्रदृष्ट्यैव योग्यतायामर्थवत्तासिद्धेः खपुष्पादिशब्दानां लोकव्यवहारक्षमताऽपि सम्भाव्यते ।

इदन्तु वस्तुवादिनां जडवादिनां वा मतानुसारेण बोध्यम्। भाववादिनां मते तु सत्त्वलक्षणो महानात्मैव प्रातिपदिकार्थः स्यात्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्', 'सर्वं खल्विदं ब्रह्म तज्जलान्' इत्यादिश्रुतिभ्यः चराचरजगदुपादानभूततया निरतिशयसत्स्वरूपं ब्रह्मतत्त्वमेव द्रव्यशब्दवाच्यम् एकव्यक्तिभूतं निखिलशब्दार्थरूपेण अविशेषेण परिगृह्यते। तच्च स्पष्टीकृतं महाभाष्ये 'द्रव्यं नित्यमाकृतिरनित्या' इति वाक्ये तद्व्याख्यायाञ्च, सन्दर्शितञ्च तत् कैयटेन 'असत्योपाध्यवच्छिन्नब्रह्मतत्त्वमेव द्रव्यशब्दवाच्यमि'ति प्रदीपवाक्यसन्दर्भे। सर्वमेतदभिप्रेत्य चोक्तं माधवाचार्येण सर्वदर्शनसङ्ग्रहे—

'प्रातिपदिकार्थश्च सत्तेति प्रसिद्धम्। ....सा च सत्ता उदयव्ययवैधुर्यान्नित्या। सर्वस्य प्रपञ्चस्य तद्विवर्त्ततया देशतः कालतो वस्तुतश्च परिच्छेदराहित्यात् सा सत्ता महानात्मेति व्यपदिश्यते'' । इति ।

एवञ्च निरुक्ते यास्काचार्या अप्याहुः—

'एष महानात्मा सत्त्वलक्षणस्तत्परं तद्ब्रह्म तत्सत्यम्। ....तन्निष्ठो भूतात्मा सैषा भूतप्रकृतिरिति।'

सुष्ठूक्तञ्च महाभाष्ये—'न सत्तां पदार्थो व्यभिचरति'।

शाब्दिकमते यद्यपि ध्वन्यात्मको वर्णात्मको वा शब्दो लोकव्यवहारकाले अर्थवाचकत्वेनाभ्युपगम्यते, तथापि सूक्ष्मदृशा विचारणायां वर्णस्य वर्णसमुदायस्य वा अनित्यत्वेनार्थवाचकत्वाभावाद् न तत्त्वतः शब्दत्वम्; किन्तु वर्णव्यङ्ग्यस्तदतिरिक्तो नित्यो ब्रह्मस्वरूपः स्फोट एव अर्थवाचको भूत्वा प्रकृतः शब्दः स्यादित्यवधृतम्।

शब्दश्रवणानन्तरं शक्तिग्रहपदार्थस्मरणादौ सत्येव हि शाब्दबोध उपजायते। अतः शब्दस्य वर्णात्मकत्वे उत्तरोत्तरवर्णोत्पत्तिकाले पूर्वपूर्ववर्णानां विनाशाद् विनष्टा वर्णाः कथमर्थमभिदधति? अतो शब्दानां न वर्णात्मकत्वम्। किन्तु घटादिशब्दोपस्थापितसकलवर्णैर्नित्यस्य स्फोटस्य शरीरैः परमात्मन इवाभिव्यक्तिर्भवति। एवं पूर्वपूर्ववर्णानुभवसहितचरमवर्णव्यङ्ग्योऽखण्डशक्तिविशेष एव स्फोटः, तेन स्फोटेन च घटादेर्ज्ञानं भवतीति सिद्धम्। अतः 'स्फुटति अर्थो यस्मात्', 'स्फुट्यते व्यज्यते ध्वनिभिर्यः' इति व्युत्पत्तिभ्यां स्फोटस्यार्थवाचकत्वं ध्वनिव्यङ्ग्यत्वं चोपपद्येते। परापश्यन्तीमध्यमावैखरीषु मूलाधारस्था निष्क्रिया बिन्दुरूपिणी अनाहता परावाक् तथा नाभिदेशस्थिता योगसमाधिसमारूढा पश्यन्ती च वाक् चिद्रूपतया ब्रह्मस्वरूपा। वैखरीमध्यमावाग्भ्यां युगपद् नाद उद्भवति।

तत्र हृदयमध्यस्थमनोमात्रगोचरमध्यमाख्यवाचो यो नाद उत्पद्यते, स खलु अर्थवाचकस्फोटाभिव्यञ्जक एव स्यात्। कण्ठदेशस्थमनुष्यव्यवहार्यवैखरीवाचो यो नादः प्रभवति, स तु भेरीप्रभृतिनादवत् श्रवणग्राह्यं निरर्थकध्वनिमात्रम्। अतः स्फोटस्यैवार्थवाचकत्वात् तस्यैव प्रातिपदिकत्वमित्यभिलषितम् अर्थवत्सूत्रे शाब्दिकैः।

माधवाचार्यैरुक्तं सर्वदर्शनसङ्ग्रहे—

'वर्णानां वाचकत्वानुपपत्तौ यद्बलादर्थप्रतीतिः स स्फोट इति वर्णव्यतिरिक्तो वर्णाभिव्यङ्ग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोटः' इति।

वैयाकरणा वर्णातिरिक्तस्य पदस्य वाक्यस्य वा वाचकत्वं समिच्छन्ति। तत्त्वविदस्तु पुनः 'पदे वर्णानामिव वाक्ये पदानां कल्पितत्वात् तेषामर्थवत्त्वमपि काल्पनिकमिति वाक्यस्यैव शब्दत्व'मित्याहुर्महाभाष्योद्द्योतकृतः। अतो वर्णपदवाक्याभिधानेषु त्रिविधस्फोटेषु वाक्यस्फोट एव मुख्यः। वाक्यार्थेनैव हि सर्वत्र पूर्णतया अर्थसम्प्रतिपत्तिर्भवति। तदुक्तं न्यायभाष्यकृता—

'वर्णसमूहो वाक्यमर्थसमाप्तौ'।

उक्तञ्च नागेशभट्टेन मञ्जूषायाम्—

'वाक्यस्फोटो मुख्यः। तस्यैव लोकेऽर्थबोधकत्वात् तेनैवार्थसमाप्तेश्च।'

तदेवं प्रकृतिप्रत्ययैर्व्युत्पादितानां व्यावहारिकशब्दानाम् अर्थवत्त्वं न यथार्थम्, अपि तु काल्पनिकमेव। यथार्थम् अर्थवत्त्वं तु स्फोटस्यैव सिद्धम्। 'प्रकृतिप्रत्ययस्तत्तदर्थविभागश्च सर्वः कल्पित एव। परमार्थतस्तु स्फोट एवार्थवानिति सिद्धान्तादि'ति अभिहितञ्च मनोरमायाम्। एतावता प्रातिपदिकस्य दुरूहतदर्थस्य च स्वरूपमवधारितमस्माभिः किञ्चित् तात्त्विकलौकिकदृष्टिभ्यामिति सर्वमनवद्यम्।



# आगमशास्त्रं तत्र वाक्तत्त्वञ्च

डॉ० राधेश्यामचतुर्वेदी
उपाचार्यः, संस्कृतविभागस्य
काशीहिन्दूविश्वविद्यालये
वाराणसी

❋❋❋

आगमशब्दः आ, ग, म इति त्रिभिरक्षरैर्निष्पन्नः। त्रीण्यपि आगमाक्षराण्युपादाय उक्तम्—

"आगतं शिववक्त्रेभ्यो गतं च गिरिजाश्रुतौ।
मतं च वासुदेवेन (कार्तिकेयेन) तस्मादागम उच्यते" ॥ इति।

अर्थादागमः शिवपार्वत्योः शिवकार्त्तिकेययोर्वा संवादरूपः। पार्वती कार्तिकेयो वा प्रष्टा शिवश्च प्रतिवक्ता। परमशिवस्य चिद् आनन्द-इच्छा-ज्ञान-क्रियारूपा पञ्चशक्तयः सन्ति। इमा अन्तरङ्गा शक्तय एव ईशान-तत्पुरुष-सद्योजात-वामदेव-अघोर इति नामभिः प्रसिद्धानि। शिवस्य पञ्चमुखानि सन्ति। एभिरेव परमेश्वरस्तन्त्रं समुदपादयत्। एतेनेदमायातं यत् परमेश्वरस्य शक्तिरेव तन्त्रोत्पत्तेरुत्सवभूता। स्वच्छन्दतन्त्रे उक्तम्—

"गुरुशिष्यपदे स्थित्वा स्वयं देवो व्यवस्थिता।
पूर्वोत्तरपदैर्वाक्यैस्तन्त्रं समवतारयत" ॥ (स्व० त० ८।३१)

"प्रष्ट्री च प्रतिवक्त्री च स्वयं देवी व्यवस्थिता"। इत्यपि श्रूयते।

यथा वेदाः प्राक् श्रुतिपरम्परायामुपनिबद्धा आसन्, तथैवागमशास्त्रमपि तामेव परम्परामनु प्रचलदासीत्। उक्तं च शिवदृष्टिशास्त्रे—

शैवादीनि रहस्यानि पूर्वमासन् महात्मनाम्।
ऋषीणां वक्त्रकुहरे तेष्वेवानुग्रहक्रिया ॥ (शि० दृ० ७।१०७)

आगम-निगम इति धाराद्वयी यद्यपि स्वतन्त्ररूपेण परस्परनिरपेक्षतया प्रसृता अस्यां भारतभूमौ, तथापि ते परस्परपूरके। निगमः सिद्धान्तरूप आगमश्च तस्यैव सिद्धान्तस्य व्यवहाररूपः प्रक्रियारूपो वा। एतदेव मनसि निधाय सम्भवतो वाराहीतन्त्रम् आगमं वेदस्याङ्गभूतं स्वीकरोति। तथा चोक्तं तत्र—

"कल्पश्चतुर्विधः प्रोक्त आगमो डामरस्तथा ।
यामलश्च तथा तन्त्रं तस्य भेदाः पृथक् पृथक्" ॥ इति ।

अत्र श्लोके आगमतन्त्रयोः पार्थक्यं परिलक्ष्यते । वस्तुतस्तन्त्रशास्त्रस्य क्षेत्रम् आगमशास्त्रस्य क्षेत्राद् विस्तृततरम् । समस्तो भौतिको विस्तारः, आध्यात्मिकमनन्तं च विश्वं तन्त्रस्य विषया भवन्ति । तन्त्रशास्त्रस्य विशालता मालिनीविजयतन्त्रे वर्णिता—

"सिद्धयोगीश्वरीतन्त्रं नवकोटिप्रविस्तरम्" । इति । ( मा० वि० ११८ )

विस्मृतिविनाशोपेक्षादिकारणवशात् तन्त्रशास्त्रसम्बद्धा केवलं नवलक्षश्लोका जगति प्राप्यन्ते । तत्र लक्षैकमात्रं भारतवर्षे प्रचलन्ति ।

अनाकलितेस्वीपूर्वादारभ्य त्रयोदशख्रीष्टाब्दपर्यन्तं तन्त्रशास्त्रं न केवलं भारते, अपि तु तिब्बत-चीन-थाईलैण्ड-मंगोलिया-कम्बोडियाप्रभृतिदेशेषु प्रभावशालिरूपेण प्रचलदासीत् । तिब्बतभाषायां "ऋग्युद्' इति नाम्ना प्रसिद्धं तन्त्रशास्त्रम् अष्टोत्तरसप्तति( ७८ )भागेषु तिब्बतदेशे प्राप्यते तत्र चत्वारिंशदुत्तरषट्शताधिकद्विसहस्रं ( २६४० ) ग्रन्थाः सन्ति ।

आगमस्योद्भवस्थानविषये मतैक्यं नास्ति । केचिद् वङ्गदेशं केचिद् गौडदेशम् अस्योद्भवस्थानं मन्यन्ते । शैवागमस्योत्पत्तिर्मध्यदेशे जाता इत्यपि केषाञ्चिन्मतम् । बौद्धीयवज्रयानसाधनाया उत्पत्तेर्मुख्यं केन्द्रम् आन्ध्रप्रदेश आसीत् । एतेनेदमायातं यद् आगमस्य पृथक् पृथक् शाखानामुत्पत्तिस्थानानि पृथक् पृथगासन् ।

शिवमुखोक्तेऽस्मिन् शास्त्रे शिवः परमं तत्त्वम् । अत एव स परमशिव इति कथ्यते । कौलाचार्या एनं विश्वमयं मन्यन्ते, तन्त्राचार्या विश्वोत्तीर्णम्; किन्तु त्रिकमतावलम्बिनां मते शिवो विश्वातीतो विश्वमयश्च युगपदेवास्ति । मात्रया अयं विश्वमयः शेषेण विश्वोत्तीर्णः । उक्तं च पुरुषसूक्ते—

"एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" ॥ ( पु० सू० ३ )

यथाऽचलप्रतिष्ठे समुद्रे क्वचिल्लघुतरङ्गाः क्वचिद् बृहदूर्मयः क्वचिच्छान्तिर्निश्चलता च सहैव परिलक्ष्यन्ते, एवमेव परमशिवेऽपि विश्वोत्तीर्णता विश्वमयता च सहैव वर्तेते । विश्वोत्तीर्णतादशायाम् इदं विश्वं परमशिवे मयूराण्डरसन्यायेनापरिस्फुट राजते शिवे । विश्वमयतादशायाम् इदं विश्वं तस्यैव परिस्फुटो विस्फारो भवति, अण्डादाविर्भूतनानावर्णपुच्छादियुक्तमयूरशरीरवत् । विश्वोत्तीर्णतादशायां शिवः "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्युक्तिं चरितार्थयन् राजते ।

याऽस्य विश्वमयतादशा साऽस्यैव शक्तेः प्रसरः। पारमेश्वरी इयं शक्तिस्तस्य स्वातन्त्र्यरूपा स्वभावभूता। इयं शक्तिश्चिद्रूपा न तु जडा। मीमांसका वेदान्तिनश्चापि शक्तिं स्वीकुर्वन्ति; किन्तु तेषां मते शक्तिर्मायारूपा अनिर्वचनीया मिथ्या अस्ति। योगदर्शने चितिशक्तिरपरिणामिनी स्वीक्रियते। सा कूटस्थनित्या। संक्षेपशारीरककारः सर्वज्ञात्ममुनिरमलां चितिशक्तिं स्वीकरोति। आगमशास्त्रे शक्तेः स्वरूपं नितान्तं भिन्नम्। प्रत्यभिज्ञाहृदये उक्तम्—

"चितिः स्वतन्त्रा विश्वसिद्धिहेतुः"। (प्र० हृ०, सू० १)

अस्याः शक्तेः परिणामो न भवति किन्तु प्रसारः सङ्कोचश्च सहैव भवतः। सूत्रे स्वतन्त्रशब्दो ब्रह्मवादिनां शक्तितावैलक्षण्यमाचक्षाणो माहेश्वर्यसारतां ब्रूते। चिद्रूपा शक्तिर्वेदान्ते सुप्ता गुप्ता वास्ति। इयं ब्रह्मण उपाधिः। तस्माद् इदं विश्वमैश्वर्यं वेदान्ते औपाधिक आगन्तुकः। आगमे चिच्छक्तिः स्वाभाविकी, न त्वौपाधिकी।

इयं चितिर्देशकालादिभिरपरिच्छिन्ना अवच्छेदकविरहिता अखण्डा अस्ति। इयं स्वातन्त्र्यमयो बोधो बोधमयं स्वातन्त्र्यं वेति कथ्यते। यद्यपि शिवशक्त्योरभेद आगमे बहुधा प्रतिपादितः—" न शिवः शक्तिरहितो न शक्तिर्व्यतिरेकिणी। शक्तिशक्तिमतोर्भेदः शैवे जातु न वर्ण्यते"॥ इत्यादि। तथापि जागतिकदृष्ट्या अत्र शिवांशो निष्क्रियः साक्षी चास्ति शक्त्यंशश्च सर्वदा पञ्चकृत्यकारी वर्तते। किन्तु उभयोरभेदस्वीकाराद् मन्यते यत् श्रीपरमशिवभट्टारक एवेत्थं नानावैचित्र्यसहस्रैः स्फुरति, शिवादि-धरण्यन्तम् अखिलमभेदेनैव स्फोरयति। तस्मादन्यद् न किञ्चिद् ग्राह्यं ग्राहकं वा।

शिवः प्रकाशरूपः शक्तिश्चास्य विमर्शः। विमर्शस्यैवेदं फलं यत् पञ्चकृत्यं सर्वदा प्रचलदास्ते। इदं पञ्चकृत्यं सृष्टिः स्थितिः संहारो निग्रहोऽनुग्रहश्च। आदौ शिवः स्वस्वातन्त्र्येणात्मानं निगृह्णाति, अर्थाद् गोपयति, पश्चात् स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति सृजति। ततः स्थितिं करोति अर्थाद् नानारूपेण ग्राह्यग्राहकभेदेन लीलाविलासं करोति। भगवता व्यासेनापि सूचितम्—

"लोकवत्तु लीलाकैवल्यम्"। ( ब्र० सू० २।१।३३ ) इति।

लीलावितानानन्तरमात्मनो रूपं संजिहीर्षुरात्मनोंऽशभूतान् मनुष्यान् दीक्षादिदानद्वाराऽनुगृह्णाति, अर्थात् तेषु पूर्णाहंभावमुत्पाद्य स्वात्मसात् करोति।

उपर्युक्तेषु पञ्चकृत्येषु यदा स्वरूपगोपनानन्तरं संविच्छक्तिः सृष्टिं चिकीर्षति, तदा प्राणरूपेण परिणता भवति। उक्तञ्च—"प्राक् संवित् प्राणे परिणता" इति।

अस्यायं स्पष्टार्थः—शुद्धसंवित्स्वरूपः परमेश्वरः पूर्णः सन्नपि लीलाविलासाय स्वस्वातन्त्र्येण आत्मानमपूर्णमवभाषयिषुः स्वाविभक्तं विश्वं विभक्तवत् करोति। यदायं स्वे विश्वोत्तीर्णे रूपे विमर्शनं कृत्वा विविक्ताकाशरूपं धारयति, अर्थात् सर्वविधभावैर्विनिर्मुक्तः सन् अनावृतरूपेण स्वयं स्फुरति। इयमेव चैतन्यस्य शून्यरूपता। उक्तं च तैत्तिरीयोपनिषदि—"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इति (तै० उ० २।१)। अस्यां शून्याकाशस्वरूपायां संविदि संविच्छक्तिः स्वयं बिन्दुरूपेणात्मानं प्रकटयति। इयं बिन्दुरूपा संविदेव महामाया कुण्डलिनीत्याद्यनेकैर्नामभिर्लोके व्यवह्रियते। इयमेव प्रथमं वाक्तत्त्वं परावाग् इति वा कथ्यते। एतावद्वर्णनेनेदमायातं यत् परमेश्वर आत्मानं द्विधा असृजत्—एकं शब्दरूपेण वाग्रूपेण वा, अपरमाकाशरूपेणार्थरूपेण वा। एतत्त्ववश्यमवधेयं यत् तस्यामवस्थायामाकाशबिन्दू वा, वागर्थौ वा अत्यन्तमविविक्तरूपेण तिष्ठतः।

चैतन्यशक्तिः संविच्छशक्तिर्वा आत्मानं शून्यरूपेण प्रकटय्य पश्चाद् आत्मानं प्राणरूपेण परिणमयति उन्मीलयति वा तदुक्तं स्वच्छन्दतन्त्रे—

वर्णाः शब्दात्मकाः सर्वे जगत्यस्मिन् चराचरे।
स्थिताः पञ्चाशता .... ... .... .... .... .... ....॥

शब्दात् प्राणः समाख्यातः तस्माद् वर्णास्तु प्राणतः।
उत्पद्यन्ते लयं यान्ति यत्र शब्दो लयं गतः॥

(स्व० तं० ४।२४७-४८)

प्राणः संविच्छक्तेः किञ्चिच्चलनस्य स्पन्दस्य वा प्रथमः प्रसरः। व्यष्टिदेहे बुद्धेराविर्भावात् प्रागेव प्राणस्योल्लासः सञ्जायते। यतो ह्यन्तःकरणस्य सारभूता बुद्धिः प्राणमेवाश्रित्यात्मानं प्रकटयितुं समर्था भवति। अस्मिन् मानवीयशरीरे तिस्रो भूमयः—प्राणः, बुद्धि, देहश्च। तत्र प्राणभूमावेकः स्वाभाविको धर्म उच्चार इति नाम्ना प्रसिद्धः। अयं प्राणस्य स्पन्दात्मक उच्चार एव देहं स्वायत्तीकृत्य तिष्ठति येनाचेतनोऽपि देहश्चेतन इव प्रतिभाति।

अस्मात् प्राणात्मकादुच्चाराद् एकोऽव्यक्तध्वनिर्निरन्तरं स्फुरन्नास्ते। इयं द्वितीया पश्यन्ती वाक्। एनाम् अनाहतनादमपि कथयन्ति आगमविदः। अनाहतः, अर्थाद् आघातं विना उत्तिष्ठन् नादः अनाहतो नाद इति कथ्यते। शरीरे मूलाधारनामकमेकं चक्रं शरीरस्य मध्यभागे नाभिजननेन्द्रिययोर्मध्येऽस्ति। एतत् प्रथमायाः परावाचः स्थानम्। अनाहतनादात्मिका पश्यन्तीति नाम्ना प्रसिद्धा या द्वितीया वाक्, तस्याः स्थानं नाभिप्रदेशः। इयं पश्यन्ती वाक् प्राणिमात्रे स्वाभाविकरूपेण प्रचलति। नास्य कश्चित् कर्त्ता उत्प्रेरयिता वाऽस्ति। अकारादिहकारान्ताः सर्वे

वर्णा अस्यां पश्यन्त्यां वाच्यविभक्तरूपेण विद्यमाना भवन्ति। यतो ह्येयं वाग् वर्णोत्पत्तेर्निमित्तभूताऽस्ति, तस्मादियमपि वर्णपदवाच्या भवति। पूर्वमुक्तं यत् परावाचि वागर्थावविविक्तौ तिष्ठतः। अस्यां द्वितीयायां पश्यन्त्यां वाच्यपि शब्दार्थयोरभिन्ना स्थितिर्भवति, यद्यपि आभ्यन्तरे भेदस्य स्फुरत्ता जाग्रियमाणा भवति। वाक्तत्त्वस्य परावस्था पूर्णतयाऽव्यक्ता, पश्यन्ती तस्य तत्त्वस्य किञ्चिद् व्यक्तावस्था। अत्र योगिनः साधका वा चैतन्यस्य स्फुरणं साक्षादनुभवन्ति। पश्यन्तीवाच इयमेवावस्था आत्मसाक्षात्कार, मन्त्रसिद्धिः, इष्टदर्शनमित्यादि कथ्यते। यथोक्तं बृहदारण्यके—"आत्मा वाऽरे द्रष्टव्यः" ( बृ० उ० २।४।५), "यत् साक्षादपरोक्षाद् ब्रह्म" (बृ० उ० ३।४।१ ) छान्दोग्ये च—"य आत्मा अपहतपाप्मा विजरो विमृत्युः.....सोऽन्वेष्टव्यः" स विजिज्ञासितव्यः (छा० उ० ९।७।१)।

तृतीया वाग् मध्यमा इति नाम्ना आगमशास्त्रे प्रसिद्धा। अस्याः स्थानं हृदयम्। सृष्टिक्रमे परावाचः प्रारभ्य पश्यन्तीमतिक्रम्य यदा मध्यमा वाक् प्राप्यते तदा अभेदस्य क्षरणं भवति भेदश्च सूक्ष्मरूपेण परिस्फुरति। इयं मध्यमा वाक् प्रयत्न-निरपेक्षा सती स्वाभाविकरूपेण हृदये प्रवहति। मध्यमा वागेव मध्यनाड्या द्वारोद्घाटनस्य सूचिका। अस्यां वाचि भेदाभेदयोः साङ्कर्यं दृश्यते। विश्वं स्वतो भिन्न-रूपेण प्रतीयमानमपि अभिन्नमिवाभाति। एनां प्राप्तस्य योगिनो दृष्टिः क्रमशोऽन्तर्मुखी भवितुं प्रारभते, प्राणः, मनः सर्वं सूक्ष्मतामापन्नं भवति, फलतः योगिनः साधकस्य वा अविद्याच्छन्नो हृदयाकाशः निर्मलो भवन् आलोकितो भवति। कामक्रोधादयो दोषास्तेषां वासनाश्च मनसोऽपसरन्ति। अन्तराकाशस्य नैर्मल्येन सह हृदयसरोवरे स्थितं भावरूपं कमलं विकसितं भूत्वा ऊर्ध्वमुखं भवति। साधकः संसाराद् विरक्तिमनुभवति ; किन्त्वस्यामवस्थायामपि नैरन्तर्येण ज्योतिषो दर्शनं न भवति तमोनिवृत्तिस्तु भवत्येव। यदा इयं वाग् हृदये दृढीभूता भवति तदाऽन्ये ध्वनयः क्षीणक्षीणतरा भवन्ति शब्दाज्ज्योतिष आविर्भावश्च भवति।

चतुर्थी वाग् वैखरीति नाम्ना प्रसिद्धा। विखरः स्थूलो देहस्तस्मिन् भवा जाता उत्पन्ना वा वाणी वैखरी। "वैखरी विश्वविग्रहा" इति कथितम्। निखिलमपि चराचरात्मकं विश्वं वैखरी वाच एव परिणामः प्रकाशो वा। वागिन्द्रियेण यस्या उच्चारणं भवति, श्रोत्रेन्द्रियेण च यस्याः श्रवणं भवति, सा वैखरी वाक्। इयमेव शब्दस्य स्थूलं रूपम्। जपकीर्त्तनादिषु जागतिके व्यवहारे वा वैखरी एव साधनरूपा। अस्याः प्रयोगे प्रयत्नस्यापेक्षा भवति। अत्र कर्त्तृत्वाभिमानः पूर्णरूपेण जागर्ति। इयं पूर्णतो भेदमयी। अत्र शब्दार्थयोः परस्परं भेदः स्पष्टरूपेण प्रतिभाति। अस्याः स्थानं कण्ठदेशोऽस्ति।

पूर्वमुक्तं यद् निखिलमपि विश्वं चिच्छक्तेरेव विस्फारः। मालायां सूत्रमिवेयं चिच्छक्तिर्भेदाभेदमये विश्वेऽनुस्यूता। यदाभेदमयदृष्ट्या वयं पश्यामस्तदा शिवः शक्तिश्च परस्परं भिन्नौ तौ पुरुषस्त्रीरूपौ महालिङ्ग-महायोनिपदवाच्यौ भवत.। ताभ्यामेव स्वरव्यञ्जनात्मका वर्णा उत्पन्ना भवन्ति। शिवः स्वररूपः शक्तिश्च व्यञ्जनरूपा। अन्यप्रकारेण शिवो बीजरूपः शक्तिश्च योनिरूपा। यथा स्वरं विना व्यञ्जनं निष्क्रियं निरुपयोगि च भवति, अत एव व्यवहाराय सर्वत्र व्यञ्जने स्वरोऽनुस्यूतो भवति, यथा वा बीजं बिना योनिर्निष्प्रयोजना भवति, अत एव सृष्टिकार्याय बीजयोन्योः सम्मेलनं संघट्टो वा आवश्यको भवति, तथैव सर्वत्र भेदमय्या वैखरीवाण्याः परस्परं संघट्ट आवश्यकः। एतेनैव संघट्टेन व्यवहारश्चलति। उक्तञ्च मलिनीविजयतन्त्रे—"....... बीजं स्वरा मताः। कादिभिश्च स्मृता योनिः....... ॥ प्रतिवर्णविभेदेन शतार्द्धकिरणोज्ज्वला। बीजमन्त्रः शिवः शक्तिर्योनिरित्यभिधीयते" ॥ इति।

मयोक्तं प्राग् यत् परमेश्वर आत्मानं द्विधा सृजते—शब्दरूपेणार्थरूपेण च। शब्दरूपेण सृजन्नयं वर्णानां सृष्टिं करोति, अर्थरूपेण च तत्त्वानाम्। वर्णाः अकारादि-हकारान्ताः पञ्चाशत्संख्याकाः, तत्त्वान्यपि शिवादि-धरण्यन्तानि पञ्चाशत्संख्याकानि। वर्णानामियं मालिका परमेश्वरस्य परमेश्वर्या वा क्रियाशक्तेर्विजृम्भणम्। तदुक्तं मालिनीविजयवार्तिके—

अकारादिहकारान्तः प्रसरो यः प्रगीयते।
क्रियाशक्तिविजृम्भेयं समस्ता वर्णमालिका ॥ ( मा० वि० वा० ३५५-५६ )

उपरि वर्णिता मध्यमावाक् तस्यैव परमेश्वरस्य ज्ञानशक्तेर्विजृम्भणम्, पश्यन्ती चेच्छाशक्तेरुल्लासः। अस्तु, आदिहान्तानां पञ्चाशद्वर्णानां मध्ये एकैको वर्ण एकैकस्य तत्त्वस्य बीजभूतः। वर्णितं चैतद् विस्तरेण मालिनीविजयतन्त्रे, अन्येष्वागमग्रन्थेषु च। एतस्य संक्षेपेण परिचयो दीयते—पारमेश्वरी इयं सृष्टिर्द्विधा—शुद्धा मलिना च। शिवतत्त्वादारभ्य शुद्धविद्यापर्यन्तं तत्त्वं परमेश्वरः स्वयं सृजति। तस्यायं क्रमः — शिवः शक्तिः सदाशिव ईश्वरः शुद्धविद्या चेति पञ्चतत्त्वानि परमेश्वरसृष्टानि। तदनन्तरं परमेश्वरः स्वांशभूतमनन्तनाथनामकं देवमुत्पादयति। स अनन्तनाथो मायात आरभ्य पृथिवीपर्यन्तं पञ्चचत्वारिंशत्तत्त्वानि सृजति। तत्त्वित्थम्—पृथिव्यादि ५+तेषां तन्मात्राः ५+दशेन्द्रियाणि+मनः+अहङ्कारः+बुद्धिः+प्रकृतिः+पुरुषः+कलाविद्यादिसहिता माया ६+शुद्धविद्या+ईश्वरः+सदाशिवः+शक्तिः+शिवः+कलाः पदानि मन्त्रा भुवनानि च १६, इत्येवं पञ्चाशत्।

आदिहान्तरूपेण परिस्फुटाया वैखर्या वाच आकारादारभ्य विसर्गपर्यन्तं स्वरात्मकं रूपं ककाराच्चारभ्य हकारपर्यन्तं व्यञ्जनात्मकं रूपं सर्वत्र प्रसिद्धम्। सर्वत्र सामान्यजनेष्वपि प्रसिद्धोऽयं क्रम आगमेषु 'मातृका' इति शब्देन व्यवह्रियते। स्वरव्यञ्जनयोरपरमपि रूपमुपलभ्यते। तत् 'मालिनी' इति पदेन व्यवह्रियते। अस्य रूपस्य प्रारम्भः 'न'कारेण भवति परिसमाप्तिश्च 'फ'-कारेण। अवशिष्टा वर्णा मध्ये अक्रमेण नियोजिता भवन्ति। तद्यथा—न ऋ ॠ ऌ ॡ थ च ध ई·······इत्यादि। अनयोर्वर्णमालयोर्मातृका अक्षुब्धवर्णमाला मालिनी च क्षुब्धवर्णमाला कथ्यते। मातृकया शिवतत्त्वसमावेशो विलम्बेन भवति मालिन्या च शीघ्रं भवतीत्यनयोरुपयोगभेदः। इत्थमिदं स्पष्टं यद् वैखरीवाक्तत्त्वस्य किं स्वरूपं कश्च उपयोगः।

इदानीं यावत् परापश्यन्त्यादिचतुर्णां वाक्तत्त्वानां यः क्रमो वर्णितः, स सृष्टि-क्रमः। अयं शैवागमानुसारं मया कीर्तितः। सृष्टेरन्योऽपि क्रम योगिनीहृदयादि-तान्त्रिकग्रन्थेषूपलभ्यते। तत्र परापश्यन्त्यादिवाचां शान्ता अम्बिका (=परावाक्), वामा (=पश्यन्ती), ज्येष्ठा ( मध्यमा ), रौद्री (=वैखरी) इति नामभिर्वर्णनमस्ति। योगिनीहृदये वर्णितमस्ति यद् यदा आद्याशक्तिर्विश्वमयरूपमाधातुमिच्छति, तदा तस्यां स्पन्दनं जायते। तस्य स्पन्दनस्य स्फुरत्ताया वा प्रथमः परिणामः 'श्रीचक्रम्' अस्ति। अस्मिन् चक्रे पञ्चमहाभूतादितत्त्वानां प्रतीकरूपास्तत्तद् वर्णाः कल्पिताः।

प्रश्नः समायाति—वैखरी वाग् या प्रत्यक्षा विश्वविग्रहा विश्वव्यवहारहेतुश्च दृश्यते, तस्या जागतिकव्यवहार एवोपयोगः किम्? अन्यत्रापि वा? अत्र उच्यते—वैखरीवर्णमालाया मुख्योपयोगः साधनक्रियायामस्ति। शास्त्रेषु उक्तम्—"देवो भूत्वा देवं यजेत" इति। इदं शरीरं शश्वदशुद्धम्। यथोक्तं पतञ्जलिना योग-सूत्रभाष्ये—

"स्थानाद् बीजादुपष्टम्भान्निःस्यन्दान्निधनादपि।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः"॥

अन्यच्च—

"जिह्वा दग्धा परान्नेन करौ दग्धौ प्रतिग्रहात्।
मनो दग्धं परस्त्रीभिः कथं सिद्धिः वरानने"॥ इति।
( कु० तं० १५।७३ )

अतो हेतोः अस्मिन्नशुद्धे शरीरे शुद्धता कथमाधेया ? इति प्रश्नः। उत्तरमस्ति — न्यासद्वारा शरीरे शुद्धि देवत्वाधानं च क्रियते। वर्णमालिकायास्तत्तद्वर्णास्तत्तद् देवानां दिव्यशक्तीनां वा बीजभूताः। यथा—ऐं इति सरस्वतीदेवतायाः, श्री इति महालक्ष्म्याः, क्रीं इति महाकाल्या बीजभूतो वर्णः। पूजाकाले तत्तदङ्गे बीजाक्षराणां न्यासेन तत्तद् दिव्यशक्तीनामाधानं भवति, यथा—'ऐं अङ्गुष्ठाभ्यां नमः' इत्यङ्गुष्ठयोः सरस्वतीशक्तेराधानम्। शास्त्रेषूक्तं यद् दिव्यन्याससम्पन्नः पुरुषो यदि हस्तेन गजं ताडयेद् गजो मृतो जायते। स्थूलतमा वृक्षा पादाघातमात्रेण धराशायिनो भवन्ति।

अन्यच्च साधकानां कृते दीक्षा आवश्यकविधिः। गुरुर्दीक्षया शिष्यं साधनायोग्यं करोति। सा दीक्षा मन्त्रद्वारा दीयते। मन्त्रा वर्णमयाः। स्तुतौ वर्णा वर्णमयानि च पदानि प्रयुज्यन्त इति वैखरीवर्णानां सार्थक्यम्। देवानां पूजायै अपि वैखरीवर्णानामुपयोगो भवति। तत्त्वित्थम्—देवानां पूजा पञ्चोपचारैः (गन्धपुष्पधूपदीपनैवेद्यैः) क्रियते। क्वचित् कदाचिद् गन्धादिपदार्था नोपलभ्यन्ते चेत् पूजा कथं विधेया इति समस्यायाः समाधानं वर्णा एव भवन्ति। लं इति पृथिवी तत्त्वस्य बीजाक्षरम्, वं इति जलस्य, यं इति वायोः, रं इति वह्नेः, हं आकाशस्य बीजाक्षरम्। 'ॐ लं पृथिव्यात्मकं गन्धं समर्पयामि' इत्यादिरूपेण देवानां पूजा कर्तुं शक्यते। स्थूलवैखरीवाक्तत्त्वस्य स्थूलोपयोग उपरि दर्शितः; किन्त्वेतस्य वास्तविक उपयोगोऽस्ति पूर्णाहन्त्व प्राप्तिः। अकारोऽनुत्तरस्य परमशिवस्य वाचकः, हकारो विसर्गश्च शक्तितत्त्वस्य वाचकाविति अहवर्णाभ्यां शिवशक्ती निरूप्येते। शिवांशात् शक्त्यंशाद् वा पृथग्भूतस्य जीवस्य इदमेव लक्ष्यं यत् पुनस्तत्रैव शिवे शक्तौ वा समाविष्टः स्यात्। यतो हि शिवत्वलाभं विना दुःखस्यात्यन्तिकैकान्तिकनिवृत्तिः परमानन्दलाभश्च न सम्भवति। एतत्प्राप्त्यै वाक्तत्त्वस्योपयोगः। आगमेषु सर्वत्र साधनायाः प्राधान्यं वर्णितम्। साधनां विहाय नान्यः पन्था विद्यतेऽयनाय। साधना बाह्यानुष्ठानेन प्रारभ्यते। तत्र बाह्यवर्णानामुपयोगः। जपयोगः सुरतयोगो वा स्यात्, इष्टदेवताया नाम्नस्तत्सम्बन्धिमन्त्रस्य वा जपः सुकरोपायः। अतः साधनाप्रारम्भाय वाक्तत्त्वस्य आवश्यकता।

सर्वत्र आगमे षट्चक्रभेदो वर्ण्यते। कुण्डलिनीजागरणं षट्चक्रभेदश्च पूर्णाहन्तावाप्तये द्वारभूते। मन्त्रस्य जपः कुण्डलिनीबोधे सहायकः। षट्चक्राणां क्रमस्त्वित्थम्—अस्मिन् पिण्डदेहे पञ्चमहाभूतानि पृथिव्यादीनि तत्तत्स्थाने स्थितानि। यथा मूलाधारे पृथ्वीतत्त्वम्, नाभेः पार्श्वे जलतत्त्वम्, हृदयसमीपे अग्नितत्त्वम्, कण्ठाधो वायुः, शिरसि आकाशः। एतानि पञ्चतत्त्वान्यभिलक्ष्य पञ्च-

चक्राणि कल्पितानि आगमविद्भिः। तानि तु क्रमेण—मूलाधार-स्वाधिष्ठान-मणिपूर-अनाहत-शाकिनी-नामभिर्व्यवह्रियन्ते। एतदतिरिक्तमाज्ञाचक्रस्य सहस्रारस्यापि सत्ता स्वीक्रियते। तत्र मूलाधारादारभ्य आज्ञाचक्रपर्यन्तं क्रमशश्चतुर्दल-षड्दल-दशदल-द्वादशदल-षोडशदल-द्विदलकमलानि सन्ति। वस्तुत इमानि कमलानि न सन्ति; किन्तु अकारादिहकारान्तैः पञ्चाशद्वर्णै रचितानि विशिष्टप्रकारकाणि यन्त्राणि सन्ति। एते वर्णा पृथक् पृथक् स्थित्वा परस्परसहयोगेन नानाविधान् विकल्पान् सृजन्ति। एभिर्विकल्पैः कामक्रोधलोभादिवृत्तयोऽनुप्राणिता भवन्ति। साधकस्य इदमेव लक्ष्यं यद् वैखरीवाण्या इमान् वर्णान् विगलितान् कृत्वा मध्यमायां नादाभासरूपे परिणमयेत्। तदनन्तरं पश्यन्त्यां विशुद्धनादमयज्योतीरूपे परिवर्त्तयेत्। पश्यन्त्याः परावाचं प्राप्य यदा शब्दब्रह्मणो भेदो भवति, तदा परमायाः सिद्धेरुदयो भवति। पूर्णाहन्तायाश्च प्राप्तिर्भवति। जीवस्य सहस्रारे गतिर्वस्तुतो जीवांशस्यैव परमशिवाभिमुखं गतिरस्ति। वैखरी-मध्यमा-पश्यन्ती-वाच एव परावाग्रूपे परिणता महाप्रकाशं परमशिवत्वं प्रापयन्ति। तदा देहात्माभिमानोऽपसृतो भवति, अप्राकृत-स्वरूपे च जीवस्य स्थितिर्भवति। एनामवस्थामुपलभ्य उत्तोर्यैव वा यथार्थोपासना प्रारभते। अत एवोक्तं "नाशिवस्य शिवोपास्तिर्घटते कल्पकोटिभिः" इति। अर्थाद् यदि शिवस्य उपासना कर्त्तव्याऽस्ति तर्ह्यादौ जीवेन मनुष्येण वा शिवत्वस्योपलब्धिः कर्त्तव्या, तदनन्तरमेव शिवस्योपासना वास्तविकी भवति। जीवदशायां शिवोपासना वास्तवी उपासना नास्तीति।

# शून्य-ब्रह्मणोः साम्य-वैषम्यनिरूपणम्

डॉ० हरिप्रसादोऽधिकारी
प्राध्यापकः,
तुलनात्मकधर्मदर्शनविभागस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणस्याम्

❀❀❀

भारतीयदर्शनप्रस्थाने प्रस्तुतयोः शून्य-ब्रह्मवादयोर्महत्त्वं सर्वसम्मतम्। शून्यवादो बौद्धदर्शनस्यान्तिमं तत्त्वम्। एवमेव ब्रह्मतत्त्वं वेदानुकूलदर्शनानां चूडान्तं निदर्शनम्। उभयोरेव दर्शनयोर्लक्ष्यमुद्देश्यं वाऽनादिकालादज्ञाननिधौ निमज्जितमानवस्य मोचनमेव। सर्वैर्विवेकशीलैरत्र प्रपञ्चयुतं जगज्जालं पुरतोऽवलोक्यते। जगद्द्रष्टृत्वेनास्माकमपि सत्ता सुसिद्ध्यत्येव। चतुर्णां पञ्चानां वा भूतानां समन्वयरूपैवेयं जगत्सृष्टिरिति बहूनां मतम्। भूता हि भवन्ति जडाः। जडेभ्यो भूतेभ्यः कथं चैतन्योत्पत्तिरिति बहुविवादग्रस्तो विषयः। इममेव विषयमधिकृत्य सर्वे दार्शनिकाश्चिन्तकाश्च सन्ति प्रवृत्ताः। सर्वमान्यं समाधानं नैव प्रतीयते सुलभ्यम्। भेदवादानां बाहुल्यात् तत्त्वनिर्धारणकर्मणि योग्यतमचिन्तका अपि किंकर्त्तव्यविमूढतामापद्यन्ते। का कथा सामान्यानाम्? शङ्करपरमाचार्यैराचार्यगौडपादैरपि मतवादानामेतेषां चर्चा कृताऽस्ति। यथाह सः —

पञ्चविंशक इत्येके षड्विंश इति चापरे।
एकत्रिंशक इत्याहुरनन्त इति चापरे[1]॥

अन्यत्र च हठाच्चैतन्योत्पत्तिरिति केचित्। ईश्वरकृतमित्यन्ये। अविद्याजन्यमित्यपरे।

## आत्मचिन्तनम्

आचार्यशङ्करदर्शने आत्मतत्त्वविज्ञानेनैव मोक्षः सम्भवति परं नागार्जुनदर्शनेऽनात्मज्ञानमेव निर्वाणदानायालं मन्यते। न केवलमिदमेव, अपि तु सर्वानर्थानां मूलमात्मदृष्टिरिति समामनन्ति बौद्धाः। यथोक्तम्—

---

१. गौडपादकारिकायाम् २।३६।

सत्कार्यदृष्टिप्रभवानशेषान्
क्लेशांश्च दोषांश्च धिया विपश्यन् ।
आत्मानमस्याविषयञ्च ज्ञात्वा
योगी करोत्यात्मनिषेधमेव[1] ॥

सर्वं क्षणिकं सर्वमनात्ममिति भगवतो बुद्धस्योपदेशस्य मूलतत्त्वम् । परं शाङ्करदर्शनानुसारन्त्वात्मोपलब्धेरभाव एव सर्वबन्धनमूलकारणमस्ति । स्वयंसिद्धस्य स्वतः प्रमाणभूतस्य वाऽऽत्मनोऽभावकल्पनमप्यसम्भवमिति तन्मतम् । यथोक्तं तेन—

"स्वयंसिद्धस्य साक्षिणोऽप्रत्याख्येयत्वात्[2]" ।

सामान्यतयापि सर्वतः पूर्वं स्वास्तित्वज्ञानं ततो जगद्ज्ञानं ततश्चेश्वरकल्पनमिति ज्ञानपद्धतिः । परं यदात्मसत्तैव निराकृता चेत् कथं सिद्ध्यति द्वयोः सत्ता । कश्चाङ्गीकरोति तत्त्वम् ? कश्च साधयति मिथ्यात्वम् ? विषयेऽस्मिन्सोत्साहं प्रतिपादयन्ति शङ्कराचार्यवर्याः— "न हि तत्सिद्धं मृतमिवोज्जीवयितुं पुनरन्यथा कर्तुं शक्यते वैनाशिकशतैरपि"[3] ।

एवंविधे बहुविवादभरिते विषये किमपि लेखनं न तथा सरलं प्रतिभाति तथापि संक्षेपेणोभयोर्दर्शनयोस्तात्पर्यप्रकाशनप्रयासः क्रियते । आचार्यशङ्कर उपनिषदाधारीकृत्यं वात्मवादसिद्धान्तं समुद्भावयामासेति सर्वज्ञातो विषयः । गौतमबुद्धोपदेशेषु गूढरूपेणावस्थितं शून्यतत्त्वन्त्वाचार्यनागार्जुनसन्निधिमवाप्यालोकिततमं जातमित्यप्यवधेयमत्र ।

ब्रह्मवादप्रतिष्ठापक आचार्यशङ्करो यद्यपि पदे पदे बौद्धसिद्धान्तखण्डने प्रवृत्तो भवति, तथापि यथा विज्ञानवादादीनां खण्डने रुचिं प्रदर्शयति न तथा शून्यवादखण्डने ।

शून्यावादिनं प्रत्याह शङ्करः —

"शून्यवादिपक्षस्तु सर्वप्रमाणविप्रतिषिद्ध इति तन्निराकरणाय नादरः क्रियते न ह्ययं सर्वप्रमाणसिद्धा लोकव्यवहारोऽन्यत्तत्त्वमनधिगम्य शक्यतेऽपह्नोतुमपवादाभाव उत्सर्गप्रसिद्धेः[4] ।

## शून्यवादिनां तत्त्वप्रियत्वम्

अत्रेदं ध्यातव्यं यत् शून्यवादिन आचार्याः किमपि प्रमाणप्रमेयादिकं नाङ्गीकुर्वन्ति, तत्त्वञ्च तिरस्कुर्वन्तीति शङ्कराशयः प्रतीयते परं माध्यमिकग्रन्थानामनुशीलनेन तेषां तत्त्वप्रियत्वं परिलक्ष्यते । वक्ति चाचार्यो नागार्जुनः स्वयम्—

---

१. मध्यमकालोके; २ प्र० सू० मां० २।२।५।२९ ।
३. प्रश्नोपनिषदि—६।२ ; ४. ब्र० सू० शां० २।२।६।३१ ।

"अपरप्रत्ययं शान्तं प्रपञ्चैरप्रपञ्चितम् ।
निर्विकल्पमनानार्थमेतत्तत्त्वस्य लक्षणम्[1] ॥

**ब्रह्मतत्त्वस्याप्रपञ्चेयत्वम्—**

यथा शून्यतत्त्वं प्रपञ्चैरप्रपञ्चितमबुद्धिग्राह्यञ्चास्ति, तथैव ब्रह्मतत्त्वमपि न बुद्ध्यादिभिः करणैर्ग्राह्यमिति प्रतिपादितमाचार्यशङ्करेण । यथाह सः —"यस्माच्छ्रोत्रादेरपि श्रोत्राद्यात्मभूतं ब्रह्म अतो न तत्र तस्मिन् ब्रह्मणि चक्षुर्गच्छति स्वात्मनि गमनासम्भवात् । तथा न वाग्गच्छति, वाचा हि शब्द उच्चार्यमाणेऽभिधेयं प्रकाशयति, तदभिधेयं प्रति वाग्गच्छतीत्युच्यते । तस्य च शब्दस्य तन्निवर्तकस्य च करणस्यात्मा ब्रह्म, अतो न वाग्गच्छति[2] ।

**शङ्कराचार्यदृष्ट्या शून्यम्**

कतिपये विद्वांसः समामनन्ति यत् शङ्कराचार्येण शून्यतार्थो न तथा गृहीतो यथा मन्यन्ते बौद्धाचार्याः । मन्ये लोकप्रसिद्धमभावात्मकं शून्यशब्दं लक्ष्यीकृत्यैव शङ्करेण सर्वप्रमाणविप्रतिषिद्धमिति विशेषणं प्रयुक्तम् । अत्र पक्षद्वयं सम्भवति— प्रथमः पक्षः शङ्करस्य बौद्धप्रयुक्तशून्यशब्दतात्पर्येण सहापरिचयः, द्वितीयस्तु शून्यवादमद्वैतवादस्य पूर्वभूमिं विज्ञाय शून्यशब्दं भ्रान्त्यर्थे प्रयुज्यास्माद्विरमत्याचार्यः[3] ।

कथनमिदं कियत्सत्यसंवलितमित्यत्र जायते सन्देहः । यद्यप्याचार्यशङ्करः शून्यवादमधिकृत्य नाधिकं लिलेख, तथाप्यस्य परिचयो नासीत् शून्यवादेन सहेति वक्तुं दुःशक्यम् । प्रायशः सर्वैरेवाद्वैतवादिभिर्बौद्धमतनिराकरणं कृतमस्ति । अतः झटिति तेषां बौद्धमतज्ञानं नासीदिति वक्तुं नोचितम् । विद्यारण्यस्वामिप्रभृतिभिरुक्तमस्ति —

निरधिष्ठानविभ्रान्तेरभावादात्मनोऽस्तिता ।
शून्यस्यापि समाप्तित्वादन्यथा नोक्तिरस्य ते ॥

अपि च—

अभावो येन भावेन ज्ञायते शून्यवादिना ।
तस्य भावस्य सद्भावो वद केन निवार्यते ? ॥

किञ्च शून्यं नाम किञ्चित्तत्त्वमस्ति न वा ? आद्ये समागतोऽसि मार्गे, वेदान्तमतप्रवेशात्, तथा च नाममात्रे विवादः, वेदान्तसिद्धान्तस्य त्वयं सौगतमताद्भेदः —न ज्ञानाकारोऽर्थः, किन्तु बाह्यानिर्वचनीयत्वान्मायामयः । खण्डनखण्डखाद्यकारोऽपि वदति—

---

१. मूलमाध्यमिककारिकायाम् —१२।९ ; २. केनोपनिषद्-शाङ्करभाष्ये—४ ।
३. बौद्धदर्शन और वेदान्त, पृ० १४२ ।

सौगतब्रह्मवादिनोरयं विशेषो यदादिमः।
सर्वस्य मिथ्यात्वं वदति द्वितीयस्त्वात्मान्यस्य[1] ॥

उपर्युक्तकथनैर्वेदान्तिनां शून्यतत्त्वविवेचनपटुत्वं परिलक्ष्यते। अतो वेदान्तिभिर्ना विज्ञायते शून्यतत्त्वमिति कथनं समीक्षणीयमेव।

**शून्यवाददृष्ट्या व्यवहारः**

विभिन्नपथपथिकयोरप्येतयोः शून्य-ब्रह्मवादिनोर्बहुत्रावलोक्यते साम्यम्। साधारणतयेदं प्रतीयते यदेतयोर्दृश्यजगत्सत्ता न स्वीक्रियते। परमेतयोर्यदा सम्यगवगाहनं क्रियते, तदा स्फुरत्यन्यदेव। एतयोर्न केवलमुच्छेदपरायणत्वमासाद्यते; अपि तूभयत्रैव दृश्यजगतो व्यावहारिकी सत्ता स्वीकृतास्ति। यथाहायंनागार्जुनः —

व्यवहारमनाश्रित्य परमार्थो न दृश्यते।
परमार्थमनागम्य निर्वाणं नाधिगम्यते[2] ॥

ब्रह्मवादेऽपि प्रातिभासिक-व्यावहारिक-पारमार्थिकभेदेन व्यवहारस्यास्तित्वं स्वीक्रियते।

**शून्यब्रह्मणोरनिर्वचनीयत्वम्**

शून्यताशब्दोऽयमनिर्वचनीयत्वञ्च व्यनक्ति। यथाहाचार्यश्चन्द्रकीर्तिः — "प्रपञ्चो हि वाक् प्रपञ्चयत्यर्थानिति कृत्वा वाग्भिरव्याहृतमित्यर्थः"[3]।

उपनिषदि च न तत्र वाग्गच्छतीत्यादिभिर्वाक्यैस्तत्त्वस्यानिर्वचनीयत्वं सुस्पष्टतया समुद्घोषितम्। अपि च बौद्धाः — परमार्थसत्यं कतमत्? यत्र ज्ञानस्याप्यप्रचारः[4]।

शून्यताशब्दवाच्ये परमार्थलक्षणभूते तत्त्वे सर्वप्रपञ्चोपशमो जायत इति माध्यमिककथनम् ईशोपनिषद्यपि प्रतिपादितम् —

"यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः[5] ॥

उपर्युक्तमेव द्रढयन्नाह नागार्जुनः —

कर्मक्लेशक्षयान्मोक्षः कर्मक्लेशाविकल्पतः।
ते प्रपञ्चात् प्रपञ्चस्तु शून्यतायां निरुध्यते[6] ॥

---

१. अद्वैतसिद्धिः ( कलिकातासंस्करणम् ), ८५ पृष्ठे।
२, मूलमाध्यमिककारिकायाम् २४।१०; ३. माध्यमिकवृत्तौ (बौ० द० मी०तो गृहीतम्)।
४. तत्रैव; ५. ईशावास्योपनिषदि ७ मन्त्रे; ६. मू० मा० का० १२।५।

आर्यदेवस्तु शून्याहिंसयोरैक्यं प्रतिपादयन् जगाद—

धर्मं समासतोऽहिंसां वर्णयन्ति तथागताः।
शून्यतामेव निर्वाणं केवलं तदिहोभयम्[1] ॥

यथाचार्यशङ्करेण मायास्वरूपं साङ्गाप्यनङ्गाप्युभयात्मिका····प्रभृतिभिरव्याकृतरूपेण वर्णितम्, तथैव प्रदर्शितं बौद्धाचार्येणार्यमैत्रेयनाथेनापि स्वप्रणीते महायानसूत्रालङ्कारनामकग्रन्थे—

न सन्न चासन्न तथा न चान्यथा
न जायते व्येति न चावहीयते।
न वर्धते नापि विशुध्यते पुन-
र्विशुध्यते तत् परमार्थलक्षणम्[2] ॥

एवमेवाचार्यशङ्करोऽपि—"दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसद् अद्वयं ब्रह्म" इत्यादिभिस्तस्यानिर्वचनीयत्वं साधयति[3]।

**उभयोर्वैषम्यविवेचनम्**

अत्र तावत् क्रमप्राप्तं वैषम्यविवेचनमपि क्रियते किञ्चित्—'बौद्धैः परमार्थतत्त्वं भावाभावादिविकल्पविवर्जितं स्वीक्रियते। यथोक्तम्—भावाभावान्तरद्वयरहितत्वात् सर्वस्वभावानुत्पत्तिलक्षणा शून्यता[4]'।

शङ्कराचार्यस्तु बौद्धानभाववादिनो मन्यते। स्वप्रतिपादितमद्वैततत्त्वमपि शून्यतत्त्वमिव मा भवत्विति तद्वारणाय ब्रह्मसूत्रभाष्ये लिलेखाचार्यशङ्करः—"वाङ्मनसातीतत्त्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते[5]"।

**उभयत्रैव तत्त्वस्यानुत्पादत्वम्**

मध्यमकशास्त्रे प्रतीत्यसमुत्पादतत्त्वस्यानुत्पादत्वमुपवर्णितमस्त्याचार्यनागार्जुनेन। यथोक्तं तेन—

अनिरोधमनुत्पादमनुच्छेदमशाश्वतम्।
अनेकार्थमनानार्थमनागममनिर्गमम् ॥
यः प्रतीत्यसमुत्पादं प्रपञ्चोपशमं शिवम्।
देशयामास सम्बुद्धस्तं वन्दे वदतां वरम्[6] ॥

---

१. चतुःशतके—१२।१३;
२. महायानसूत्रालङ्कारे—६।१।
३. छान्दोग्योपनिषदि—अष्टमाध्यायस्योपोद्घाते;
४. माध्यमिकवृत्तौ।
५. ब्र० सू० शा० भा० ३।२।१२;
६. मध्यमकशास्त्रे—१।

एवमेवाचार्यशङ्करेणापि स्वकीये माण्डूक्योपनिषद्भाष्येऽद्वैततत्त्वस्योत्पत्तिलयादीनां निषेधः कृतोऽस्ति—"नाप्यद्वैतमुत्पद्यते लीयते वा। अद्वैतं चोत्पत्तिप्रलयश्चेति विप्रतिषिद्धम्[1]"।

अपि च—अद्वैतं परमार्थतः, तस्मान्न कश्चित् प्रपञ्चः प्रवृत्तो निवृत्तो वास्तीत्यभिप्रायः[2]।

अन्यच्च—प्रपञ्चोपशमोऽद्वयः — प्रपञ्चोपशमः प्रपञ्चो द्वैतभेदविस्तारस्तस्योपशमोऽभावो यस्मिन् स आत्मा प्रपञ्चोपशमोऽत एवाद्वयः[3]।

यथा मध्यमकशास्त्रेऽनुत्पादो वर्णितः प्रतीत्यसमुत्पादस्यानुत्पादत्वञ्च वर्णितम्, एवमेव शङ्करपरमार्थतत्त्वमपि वर्तते—परमार्थसत्यं तु न कश्चिद् जायते जीवः कर्त्ता भोक्ता च नोत्पद्यते केनचिदपि प्रकारेण[4]।

**तत्त्वस्याप्राप्तिलक्षणत्वम्**

शून्यवादेऽद्वैतवादे चोभयत्रैव निर्वाणप्राप्तिरुपवर्णिता। यथाह्यार्यनागार्जुनः —

अप्रहीणमसम्प्राप्तमनुच्छिन्नमशाश्वतम्।
अनिरुद्धमनुत्पन्नमेतन्निर्वाणमुच्यते[5] ॥

शङ्कराचार्योऽपि वक्ति गीताभाष्ये—'न हि आत्मा नाम कस्यचित् कदाचिद् अप्रसिद्धः प्राप्यो हेय उपादेयो वा'[6]।

जीवनस्य चरमावस्थैव मोक्षनाम्ना निर्वाणनाम्ना वाऽभिसम्बोध्यते। यथाऽद्वैतवेदान्ते परमार्थावस्थायां निरोधोत्पत्तिबद्धसाधकमुमुक्षुत्वादीनां प्रश्ना नैवोत्पद्यन्ते। एवमेव शून्यवाददर्शनेऽपि निर्वाणमनिर्वाणशब्देनाभिहितमस्ति। तद्यथा—

'अनिर्वाणं हि निर्वाणं लोकनाथेन देशितम्[7]।

वस्तुतस्तु निर्वाणकल्पनैव व्यर्थास्ति। यतो हि 'न हि निर्वाणं नाम प्राप्यमुपादेयं वा वस्तु[8]।

---

१. गौडपादकारिकायाम् (शाङ्करभाष्ये)—२।३२; २. तत्रैव—१।१७।
३. तत्रैव—२।३५; ४. तत्रैव—३।४८।
५. मूलमाध्यमिककारिकायाम्—२५।३।
६. गीता-शाङ्करभाष्ये—१८।५०; ७. म० का० वृ०, पृ० ५४० (अद्वैतवेदान्ते समुद्धृतम्)।
८. तत्रैव।

शून्यवादाद्वैतवादयोरुभयोरेव मुक्तावस्थायां व्यावहारिकसत्तागतज्ञानस्य समुच्छेदो जायते। द्वाभ्यामेव निर्वाणकाले मुक्तिकाले वा प्रपञ्चप्रवृत्तेर्विलयः स्वीक्रियते। द्वाभ्यामेवास्मिन्नेव जीवने मुक्तिर्भवतीति स्वीक्रियते। बौद्धानां परिनिर्वाणमद्वैतिनां विदेहमुक्तिश्च परस्परं साम्यं भजतः।

अत्र तावत् प्रसङ्गप्राप्तं किञ्चिद्वैषम्यमपि विवेचनीयमेवेति कृत्वा विविच्यते— अद्वैते साधको मुक्ति प्राप्य स्वयं बुद्धस्वरूपतामापद्य सच्चिदानन्दरूपतामापद्यते। अतो वेदान्ताभिमतं मुक्तिस्वरूपं सच्चिदानन्दरूपमस्ति। एतद्विपरीतं शून्यवाददर्शने निर्वाणं भावाभावरहितं प्रतिपादितमस्ति—"न चाप्तवृत्तिमात्रं भावाभावेति परिकल्पितुं पार्यते। एवं न भावाभावं निर्वाणम्[1]; परन्तु पालिग्रन्थेषु बहुत्र निर्वाणं सुखरूपमपि वर्णितमस्ति। अतस्तत्रापि द्वयोः साम्यमस्त्येव[2]।

अत्रेदमवधेयं यद् बौद्धदर्शने समुपवर्णितं तत्परमानन्दमयं सुखं निर्विषयस्य मनसोऽस्ति। अद्वैतवेदान्ते च तत्सुखमात्मसुखं ब्रह्मानन्दञ्चास्ति[3]।

**संसारनिर्वाणयोरभेदः**

शून्यवादिभिर्निर्वाण-जगतोर्मध्ये भेदो न स्वीक्रियते। यथाहार्यनागार्जुनः—

न संसारस्य निर्वाणात् किञ्चिदस्ति विशेषणम्।
न निर्वाणस्य संसारात् किञ्चिदस्ति विशेषणम्[4]॥

अपि च—

निर्वाणस्य च या कोटिः कोटिः संसरणस्य च।
न तयोरन्तरं किञ्चित् सुसूक्ष्ममपि विद्यते[5]॥

**तत्त्वे बुद्धेरप्रवेशः**

यथोपनिषदि—"अन्य एव तद्विदितादित्यादिभिर्वाक्यैस्तत्त्वस्यानिर्वचनीयत्वं संसाधितम् एवमेव शून्यवादिनोऽपि शब्दव्यवहारः केवलं बालव्यवहारायैव क्रियत इति वदन्ति—

---

१. माध्यमिकवृत्तौ ; २. निब्बानं परमं सुखम्—भागदिय सुतन्तं मज्झिमनिकाये—२.३१५, धम्मपदे—१८।८ च।

३. पदीपस्सेव निब्बानं विमोक्खो अदुचेतसो—थेरीगाथा, अद्वैतवेदान्ते ११६ पृ० समुद्धृतम्।

४. मूलमाध्यमिककारिकायाम्—२५।१९; ५. तत्रैव—२५।२०।

शून्यमिति न वक्तव्यमशून्यमिति वा भवेत् ।
उभयं नोभयं वेति प्रज्ञप्त्यर्थं तु कथ्यते[1] ॥

**निराग्रहदृष्टिः**

कस्यामपि सीमितायां दृष्टौ मानवः समाबद्धो न भवेदिति भवति सत्यान्वेषण-परायणानां दार्शनिकानां ध्येयम् । वैशिष्ट्यमिदं माध्यमिकदर्शने पूर्णतामापद्यते[2] । एतदेव प्रकटीक्रियते—"मध्येऽपि स्थानं न करोति पण्डितः' इत्यादिभिः पद्यैः । यया शून्यतया सर्ववस्तूनां निःस्वभावता विज्ञायते सा शून्यताऽपि परमार्थावस्थायां त्याज्या । अत एव माध्यमिकैः शून्यताया अपि शून्यता प्रतिपादिता । उक्तञ्च—

शून्यता सर्वदृष्टीनां प्रोक्ता निःशरणं जिनैः ।
येषां तु शून्यतादृष्टिस्तानसाध्यान् बभाषिरे[3] ॥

अस्य तात्पर्यं त्विदमेव यद् यदि कुत्रापि किमप्याग्रहस्यांशोऽवशिष्यते चेत् तदनिष्टकरमेव बौद्धनये । न हि केनापि तत्त्वोपदेशः कर्तुं शक्यः, तस्यानिर्वचनीयत्वात् । विषयेऽस्मिन्न हि बुद्धेन भगवताऽपि देशितमिति कथनं सुतरामवधेयम् । यथोक्तम्—

आत्मेत्यपि प्रज्ञपितमनात्मेत्यपि देशितम् ।
बुद्धैर्नात्मा न चानात्मा न किञ्चिदपि देशितम्[4] ॥

न च मुनिना किञ्चिन्नोक्तमित्युक्तेरागमबाधो भवतीति वाच्यम्, यतश्चैवं हीनमध्योत्कृष्टविनेयजनाशयनानात्वेन, नात्मानात्मतदुभयप्रतिषेधेन बुद्धानां धर्मदेशना प्रवृत्ता, तस्मान्नास्त्यागमबाधो माध्यमिकानाम् । यथोक्तमार्यदेवेन—

वारणं प्रागपुण्यस्य मध्ये वारणमात्मनः ।
सर्वस्य वारणं पश्चाद् यो जानीते स बुद्धिमान्[5] ॥

यथा वैदिका ऋषयः—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिभिर्वाक्यैस्तत्त्वस्यावाच्यतां संसूचयामासुः । स्थितिरियं समवलोक्यते बौद्धजगत्यपि । उक्तञ्चाचार्यचन्द्रकीर्तिना—

"यस्मादनुत्पन्ना निरुद्धा निर्वाणमिव धर्मता धर्मस्वभावः धर्मप्रकृतिर्व्यवस्थापिका, तस्मान्न तत्र चित्तं प्रवर्तते । चित्तस्याप्रवृत्तौ च कुतो निमित्ताध्यारोपः ।

१. मूलमाध्यमिककारिकायाम्—२२।११ ।
२. बौद्धचर्यावतारभूमिकायाम्—लद्दाखसंस्थानप्रकाशितायाम् ।
३. मूलमाध्यमिककारिकायाम्—१३।८;     ४. तत्रैव—१८।६ ।
५. तत्रैव—१८।६ ( प्रसन्नपदायाम् ) ।

तदभावात् कुतो वाचां प्रवृत्तिः। अतश्च न किञ्चिद् बुद्धैर्भगवद्भिर्देशितमिति स्थितमविकलम्"। यथाह शून्यवादप्रतिष्ठापकाचार्यनागार्जुनोऽपि—

सर्वोपलम्भोपशमः प्रपञ्चोपशमः शिवः।
न क्वचित्कस्यचित्कश्चिद् धर्मो बुद्धेन देशितः[१]॥

**यत्नोपरमत्वम्**

तत्त्वनिरूपणप्रसङ्गे औपनिषदिका वेदान्तिनस्तत्त्वस्यागेयत्वं सामान्यज्ञानविरुद्धत्वञ्चोपवर्णयन्ति। केनोपनिषद्भाष्ये यथाहाचार्यशङ्करः —

"सर्वकरणानामविषयमिति—यत् सर्वकरणानामविषयं निर्विशेषेण सर्वकरणानि भाष्यते तद् 'ब्रह्मेव त्वं' ततोऽतिरिक्तज्ञानाय यत्नो न कर्तव्य इति यत्नोपरम एव लक्ष्यते। विद्धीत्यनेनातिरिक्तं मा विद्धीत्यभिप्रायः"[२] इति।

एवमेव समानप्रवृत्तिरवलोक्यते सौगतशास्त्रेष्वपि। यथोक्तम्—

सर्वं तथ्यं न वा तथ्यं चातथ्यमेव च।
नैवातथ्यं नैव तथ्यमेतद्बुद्धानुशासनम्॥

प्रतिपादितं भगवता स्वयमेव—

"लोको मया सार्धं विवदति नाहं लोकेन सार्धं विवदामि। यल्लोकेऽस्ति सम्मतं तन्ममाप्यस्ति सम्मतम्। यल्लोके नास्ति सम्मतं तन्ममापि नास्ति सम्मतम्"[३] इति।

**धर्मपरिभाषासाम्यम्**

यथा ब्राह्मणसंस्कृतौ—'हृदयेनाभ्यनुज्ञातो यो धर्मस्तन्निबोधत, मनःपूतं समाचरेत्' इत्यादिभिर्मनुष्यस्याभ्यन्तरिकीच्छैव धर्मप्रमाणत्वेनोपन्यस्ता। तमेव भावं प्रकटयत्ययं बौद्धश्लोकोऽपि—

यद्यद् यस्य प्रियं पूर्वं तत्तत्तस्य समाचरेत्।
न हि प्रतिहतः पात्रं सद्धर्मस्य कथञ्चन[४]॥

उपर्युक्तकथनैरुभयत्रैव व्यक्तिस्वातन्त्र्यं विचारस्वातन्त्र्यं वा पूर्णतया प्रतिष्ठितमासीदिति सुस्पष्टं सिद्ध्यति।

---

१. मूलमाध्यमिककारिकायाम्—१८।७; २. केनोपनिषद्भाष्ये—२।१ (टिप्पण्याम्)।
३. मूलमाध्यमिककारिकायाम्—१८।८; ४. तत्रैव।

**चतुष्कोटिस्वरूपविमर्शः**

आर्यनागार्जुनानुसारं तर्काणां चत्वारः प्रकाराः सम्भवन्ति। मानवानां सविकल्पिका बुद्धिश्चतुष्कोटियुक्ततर्कपङ्कमध्ये निमग्ना भवति। कोऽपि जागतिकः पारमार्थिको वा विचारो भावाभावोभयरूपोभयद्वारेणैव निर्गतो भवति। परं तत्त्वन्तु चतुष्कोटिविमुक्तं भवति। तद्यथा—

न सन्नासन्न सदसन्न चाप्यनुभयात्मकम्।
चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुः[1]॥ इति।

शून्यवादप्रतिष्ठापनायाचार्यनागार्जुनेन विलक्षणतर्कपद्धत्या चतुष्कोट्यात्मकरूपेण वस्तुपरीक्षणं कृतमस्ति। प्रत्ययपरीक्षाप्रकरणे स्वतः परतोऽनुभयतः सर्वेभ्य एवोत्पत्तिप्रतिषेधः कृतोऽस्ति। सर्वत्रैकैव पद्धतिरनुसृताऽस्त्याचार्येण।

एवमेव ब्रह्मवादप्रतिष्ठापका आचार्यशङ्करा अपि ब्रह्मणश्चतुकोटितर्कविनिर्मुक्तत्वं साधयन्ति। यथोक्तं तैः—

"इतश्च न जायते किञ्चित्। यज्जायमानं वस्तु स्वतः परत उभयतोऽनुभयतो वा सदसत्सदसन्न जायते, न तस्य केनचिदपि प्रकारेण जन्मसम्भवमस्ति। सच्चेन्न जायते सत्त्वाद् मृत्पिण्डवत्। यद्यसत्तथापि न जायतेऽसत्त्वादेव शशविषाणादिवत्। अथ सदसत्तथापि न जायते विरुद्धस्यैकस्यासम्भवात्। अतो न किञ्चिद्वस्तु जायत इति सिद्धम्"[2] इति।

शून्यवादतात्पर्यं बोधयँल्लिखत्याचार्यचन्द्रकीर्तिरपि—"नैव स्वत उत्पन्ना जातु विद्यन्ते भावाः, क्वचन केचन नापि परत उत्पद्यन्ते भावाः, न द्वाभ्यां नापि अहेतुतः"[3] इति।

**शून्यब्रह्मणोरभेदः**

बहुभिर्विद्वद्भिर्बहुविमर्शानन्तरं शून्यब्रह्मणोरेकत्वमपि संसाधितमस्ति[4]।

---

१. भारतीयदर्शने—डॉ० वी० एन० सिंहेन ३१६ पृष्ठे, बौद्धदर्शनमीमांसायां पं० बलदेवोपाध्यायेन च २६५ पृष्ठे समुद्धृतोऽयं श्लोकः। एतस्य नागार्जुनप्रणीतत्वं सिद्ध्यति, विषयदृष्ट्या।
२. गौडपादकारिकायां ४ श्लोके शाङ्करभाष्यम्।
३. मूलमाध्यमिककारिकायां प्रसन्नपदायाम् १।५।
४. बौद्धदर्शनमीमांसायां २७५ पृष्ठे।

बौद्धदर्शने कृतभूरिपरिश्रमो म० म० पं० वी० एस० भट्टाचार्यमहोदयोऽपि लिलेख—"अयञ्च शिवः प्रपञ्चोपशमो गोडपादानुगामिनां वेदान्तिकानां मोक्षो बौद्धानान्तु निर्वाणं शून्यं वा"[१] इति।

शून्य-ब्रह्मणोरेकत्वसाधनप्रसङ्गे तत्तत्सम्प्रदायानुयायिभिर्व्यवहृतानि तद्विषयक-विशेषणपदानि च सुतरां महत्त्वपूर्णानि। यथा-शून्यकथनं शान्तं शिवमद्वैतमनवधि-प्रपञ्चैरप्रपञ्चितमित्यादिभिः शब्दैः क्रियते, तथैवाद्वैततत्त्वस्य कथनमपि ब्रह्मशान्त-शिवादिभिः शब्दैः क्रियते। तत्त्वन्त्वेकमेव। केवलं तत्प्रतिपादनशैली भिन्नास्ति[२]।

इत्थं विषयविवेचनेनाचार्यशङ्करप्रतिपादितनिर्विशेषाद्वैतवादस्य तुलना नागार्जुनप्रतिपादितेन शून्यतत्त्वेन कर्तुं शक्यत इति बौद्धदर्शने कृतभूरिपरिश्रमा आचार्यनरेन्द्रदेवमहोदया अपि सङ्गिरन्ते[३]।

**उपसंहारः**

एतद्विमर्शानन्तरं सुस्पष्टतया वक्तुं शक्यं यत् शून्यवाद-ब्रह्मवादयोस्तत्प्रति-ष्ठापकयोश्च राजते किमप्यनिर्वचनीयं साम्यम्। अतो दोषदृष्टिं विहायोभयोः पर्यालोचनस्यावश्यकता वर्तते। यदि दोषदृष्टिर्नश्यति तदा साम्यैक्यं वाऽवलोक्यते, नो चेत् कुमारिलभट्टाचार्योक्तिरियं सत्यतामापद्यते—

"नात्रातीव प्रकर्तव्यं दोषदृष्टिपरं मनः।
दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते"[४]॥ इति।

●

१. आगमशास्त्रे ४२ पृ० वी० एस० भट्टाचार्यप्रणीते।
२. बौद्धदर्शनमीमांसायां २७७ पृष्ठे।
३. महायानसूत्रालङ्कारभूमिकायां २२ पृष्ठे ( बौद्धभारती-संस्थान-प्रकाशितायाम् )
४. कुमारिलभट्टविरचित-मीमांसाश्लोकवार्तिकस्योपोद्घाते।

# योगश्चित्तवृत्तिनिरोधः

डॉ० सी० ए० शैला
प्राध्यापिका, भारतीयतत्त्वमीमांसायाः
श्रीशङ्कराचार्यविश्वविद्यालये
क्षेत्रीयकेन्द्रम्, Panmana
कोल्लम्, केरल-प्रदेशः

❀❀❀

भारतीयपरम्परायां नवदर्शनानि प्रचलितानि सन्ति। तेषु षडास्तिकसंज्ञितानि त्रीणि नास्तिकसम्मतानि च। येन तत्त्वं दृश्यते तद्दर्शनम्।

सेश्वरसांख्यदर्शनमेव योगदर्शनस्य प्रथमकल्पः। अस्य दर्शनस्य आस्तिकदर्शनक्रमे द्वितीयं[1] स्थानम्। काले प्रणष्टं भगवान् पतञ्जलिरुज्जहारेति योगदर्शनस्य पातञ्जलदर्शनाभिधेयत्वम्। विषयेऽस्मिन् प्राचीनग्रन्थरूपेण पातञ्जलयोगदर्शनमेव लभ्यते यद्यपि तत्र वेदसाहित्ये वैदिकसाहित्ये च योगविषये बहूक्तमस्ति[2]। तस्मिन् योगदर्शने पतञ्जलिमुनिना सूत्रं प्रणीतम्। पतञ्जलिविषये प्रचालितमेकं पद्यमस्ति[3]।

पातञ्जलयोगदर्शनं चतुर्षु पादेषु विभक्तमस्ति[4] —समाधि-साधन-विभूति-कैवल्यभेदेन। समाधिपादे योगस्य स्वरूपमुद्देश्यं लक्षणं चित्तवृत्तिनिरोधोपायस्यो-

---

१. The students Sanskrit-English Dictionary, Vaman Shivram Apte, P. 459.

२. युञ्जते मन उत युञ्जते धियः। ( ऋ० सं० ५।८१।१ )
युञ्जानः प्रथमं मनस्तत्त्वाय सवित्वा धियः। ( यजुषि—११।१ )
इमं विवस्वते योगं प्रोक्तवानहमव्ययम्।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत्॥ ( भगवद्गीता—४।१ )

३. शब्दानामनुशासनं विदधता पातञ्जलं कुर्वता
भाष्यं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके।
वाक्यतो वपुषा मलाः फणिभृता मर्तेव येनोद्धृता
तस्य श्रीरणरङ्गमल्लनृपतेर्वाचो जयन्त्युज्ज्वलाः॥

४. प्रकरणद्वादशी, डॉ० रमेशचन्द्र शुक्ल, पृ० ८५।

पाया विभिन्नयोगानाञ्च विवेचनं कृतमस्ति। तत्र 'अथ योगानुशासनम्' इति सूत्रेण प्रथमपाद आरभ्यते। अथशब्दः स्वरूपेण मङ्गलभूतः[1], तदुच्चारणमपि मङ्गलभूतम्। अथशब्दोऽधिकारद्योतकः। अधिकारश्चारम्भः। योगशास्त्रमारब्धं वेदितव्यमिति सूत्रार्थः।

अनन्तरं प्रतिपाद्यस्य योगस्य लक्षणमुच्यते—'योगश्चित्तवृत्तिनिरोधः' इति। योगो नाम समाधिः[2]। तदुक्तं योगवासिष्ठे—

इमं गुणसमाहारमनात्मत्वेन पश्यतः।
अन्तःशीतलता तस्य समाधिरिति कथ्यते॥ इति।

युज् समाधौ, अनुशिष्यते व्याख्यायते इति योगः। निर्मलसत्त्वगुणपरिणामरूपस्य चित्तस्य वृत्तीनां बहिर्मुखपरिणतिविच्छेदाद् अन्तर्मुखतया प्रतिलोमपरिणामेन स्वकारणे चित्ते लयो योग[3] इत्युच्यते। योगेनैव मानवस्य चित्तं निर्मलं शुद्धं स्थिरञ्च भवितुमर्हति। योगः सार्वभौमधर्मोऽस्ति। वृत्तिर्नाम चित्तस्य अङ्गाङ्गिरूपतया परिणामः। क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति चित्तभूमयः[4] पञ्च। चित्तं हि कदाचित्क्षिप्तं कदाचिन्मूढं कदाचिद्विक्षिप्तं कदाचिदेकाग्रं कदाचिन्निरुद्धं चेति पञ्चवृत्तिकम्। यदा चित्तस्य केनापि विषयेण सह सान्निध्यं भवति, तदा तत् तस्यैव विषयस्याकारं बिभर्ति। क्षिप्तं नाम तेषु तेषु विषयेषु क्षिप्यमाणमस्थिरं चित्तमुच्यते। क्षिपति वितथीकरोति प्रयत्नमिति क्षिप्तम्। मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धय इत्यत्र कश्चित्पदार्थेतरमूढमनुष्येभ्यो व्यावर्त्य क्षिप्तावस्थापन्ना यतति सिद्धयतित्येवं भगवता निर्दिष्टम्[5]। रजोगुणादस्थिरं बहिर्मुखतया विषयेषु प्रेरितमित्यर्थः। ईदृशं चित्तं प्रायो दैत्यदानवानां सदैव। मूढावस्थायां चित्तः किं कर्तव्यं किमकर्तव्यमिति विवेचनमन्तरेण क्रोधद्वेषादिभिर्विरुद्धकृत्येष्वेव नियमितो भवति। ईदृशं चित्तं प्रायः सदैव रक्षःपिशाचादीनाम्। तत्र मूढावस्था पामराणामविदिताध्यात्मतत्त्वानां पशुतुल्यानां केवलविषयैषिणां भवति। मूढावस्था निराकरणीयत्वेनोपदिष्टा।

---

१. ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ॥

२. सलिले सैन्धवं यद्वत् साम्यं भवति योगतः।
तथात्ममनसोरैक्यं समाधिरभिधीयते॥

३. भारतीय चिन्ता, दामोदरन्, पृ० २४५।

४. पातञ्जलयोगदर्शनम्, पृ० ८।

५. श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥ ( भगवद्गीता—२।५३ )

विदितात्मतत्त्वानां प्रयतमानानामपि प्रबलविषयाक्षिप्तमनसां क्षिप्तावस्था। क्षिप्ताद्विशिष्टं विक्षिप्तम्। सत्त्वोद्रेकाद् दुःखसाधनं परिहृत्य सुखसाधनेष्वेव शब्दादिषु प्रवृत्तं विक्षिप्तम्। ईदृशं चित्तं सदैव देवानाम्। विक्षिप्तावस्थायां मनो एकस्मिन् विषये न संतिष्ठते[1]। प्रयतमानानां क्षणमवतिष्ठते मनः पुनश्चञ्चलं भवतीत्येवंविधम्।

एतदेव यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्। यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह बुद्धिश्च न विचेष्टति तमाहुः परमां गतिम्। तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणम्। अप्रमत्तस्तदा भवति योगो हि प्रभवात्ययौ" इत्येवं नचिकेतं समुपदिशता यमराजेन क्षिप्तविक्षिप्तयोर्योगत्वेनानुपगमात्। क्षिप्तमूढविक्षिप्तावस्था योगानुकूला न भवन्ति। एकाग्रावस्था निरुद्धावस्था च अवश्यमेव योगानुकूले, तयोः सत्त्वगुणप्रधानत्वात्। एकाग्रावस्थायां चित्तम् एकस्मिन् विषये आरूढं भवति। निरुद्धावस्थायां चित्तस्य सर्वा अपि वृत्तयो लुप्ता भवन्ति तस्मात् चित्तं स्वकीयां स्वाभाविकीं स्थिरां शान्तामवस्थामधिगच्छति। एकाग्रावस्थाया नामान्तरं भवति सम्प्रज्ञातयोगः, निरुद्धावस्थायाश्चापरं नामधेयं भवति असम्प्रज्ञातयोगः। सम्यग् प्रज्ञायतेऽस्मिन् प्रकृतेर्विविक्ततया ध्येयमिति। सम्प्रज्ञातसमाधौ चित्तं ध्येये लीनं भूत्वा तन्मयीभवति। असम्प्रज्ञातसमाधौ सर्वासामपि चित्तवृत्तीनां विषयाणाञ्च तिरोभावः सञ्जायते। असम्प्रज्ञातसमाधि प्रपन्नो योगी मुक्तो भवति।

चित्तस्य पञ्चवृत्तयः[2] सन्ति। ते प्रमाणविपर्ययविकल्पनिद्रास्मृतयः[3]। अत्रानधिगतार्थनिश्चयाकाशवृत्तिः प्रमाणम्। प्रमाणलक्षणन्तु अविसंवादिज्ञानं तत्करणं प्रमाणमिति।

इन्द्रियद्वारेण बाह्यवस्तूपरागाश्चित्तस्य तद्विषयविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्[4]। मिथ्याज्ञानं विपर्ययः। अतथाभूतेऽर्थे तथोत्पद्यमानं ज्ञानं विपर्ययः[5]। तस्यार्थस्य यद्रूपं तस्मिन् रूपे न प्रतिष्ठति तस्यार्थस्य यत् पारमार्थिकं रूपं न तद् भासयतीति यावत्। अर्थशून्यः केवलकल्पनामयो यः प्रत्यय आहार्यज्ञानरूपः स विकल्पः। विकल्प[6] इत्येतेन पदेन कल्पितं वस्तु समुपस्थाप्यते वस्तुतस्तद् वस्तुनः स्थितिर्न कालत्रयेऽपि दृश्यते।

---

१. सर्वदर्शनकौमुदी, पृ० १५४;　　२. भारतीयदर्शनानि, पृ० २२५।
३. पातञ्जलयोगदर्शनम्—१।६;　　४. तत्रैव—१।७।
५. तत्रैव—१।८;　　६. तत्रैव—१।९।

निद्राख्या चित्तवृत्तिस्तमोगुणप्रधाना भवति। तत्कारणाद् जाग्रत्स्वप्नावस्थयोरनुभवो लीयते। निद्रायां मनः क्रियारतमेव भवति। विषयज्ञानस्य चाभावो जायते। अत इयं वृत्तिरभावप्रत्ययालम्बनेति[1] कथ्यते। प्रमाणेनानुभूतस्य विषयस्य योऽयं असम्प्रमोषः संस्कारद्वारेण बुद्धावुपारोहः, सा स्मृतिः।

निद्रा तु असंवेद्यमानविषया। स्मृतिश्च प्रमाणविकल्पनिद्रानिमित्ता। उक्तानां पञ्चविधानां चित्तवृत्तीनां निरोधोऽभ्यासवैराग्याभ्यां साध्यः। अभ्यासवैराग्याभ्यां यासां प्रकाशप्रवृत्तिनियमरूपाणां चित्तवृत्तीनां यत्नप्रतिहननं स निरोधः।

प्रकाशप्रवृत्तिनियमरूपाणां निवृत्तबाह्यविषयसम्बन्धानां अन्तर्मुखतया स्वकारण एव चित्ते शक्तिरूपतया अवस्थानम्[2]। अभ्यासो नाम वृत्तिरहितस्य चित्तस्य एकाग्रतायां यत्नः।

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। आभ्यामभ्यासवैराग्याभ्यां प्रकाशप्रवृत्तिनियमरूपा या वृत्तयस्तासां निरोधो भवति। तत्र विषयदोषदर्शनजेन वैराग्येण तद् वैमुख्यमुत्पाद्यते। इत्थं ताभ्यामभ्यासवैराग्याभ्यां[3] चित्तवृत्तिनिरोधः कार्यः। एवं चित्तवृत्तिनिरोधपदानां व्याख्यानेन सम्यगुक्तश्चित्तवृत्तिनिरोधलक्षणमेव योगः।

योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥ इति।



१ पातञ्जलयोगदर्शनम्—१।१०।
२. अभ्यासवैराग्याभ्यां तन्निरोधः। (पातञ्जलयोगदर्शनम्—१।१२)
३. असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ (भगवद्गीता—६।३५)

# कालिदासीयकाव्येषु शकुनसन्दर्भाः

डॉ० राजदेवमिश्रः

कुलपतिचरः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀ ❀ ❀

शक्नोति शुभाशुभं विज्ञातुमनेनेति शकुनमिति रूपेण येन शुभाशुभयोर्ज्ञानं कर्तुं शक्यते तत् शकुनमिति कथ्यते। शकुनस्य भाविशुभाशुभयोः सूचकत्वमेव वर्तते, कस्यचिदपि जनस्य भविष्यत्कालिकीं स्थितिं प्रभावयितुं तस्य (शकुनस्य) क्षमता नास्ति। आचार्यवराहमिहिरस्य मते शकुनं मनुष्याणां जन्मान्तरकृतस्य शुभस्याशुभस्य वा कर्मणः पाकं (फलं) सूचयति—

अन्यजन्मान्तरकृतं कर्म यच्च पुंसां शुभाशुभम्।
यत्तस्य शकुनः पाकं निवेदयति गच्छताम्[1]॥

शकुनस्य भाविघटनासूचकताऽऽकस्मिकी भवति। सङ्केतरूपस्य शकुनस्य भाविघटनया साकं कारणकार्यभावसम्बन्धो न भवति। कारणान्तरैरुत्पद्यमानानां शुभाशुभकर्मणां शकुनः सूचकत्वमेव धारयति न कारणत्वम्। शकुनं विहाय फलितज्योतिषसामुद्रिकादीनामपि भाविघटनादिसूचकता सुप्रसिद्धा। फलितज्योतिषस्य गणितज्योतिषाश्रयता तथा सामुद्रिकशास्त्रस्य हस्तरेखाद्युपरि निर्भरता भवति; परन्तु शकुनानामीदृशी स्थितिर्नास्ति।

शकुनस्य मूलेऽन्धविश्वासो महतीं भूमिकां निर्वाहयति। तस्य स्थितिः संसारस्य सर्वेषु देशेषु येन केनापि रूपेण विद्यते। अस्मिन् वैज्ञानिके युगेऽपि शकुनसम्बद्धमान्यता नूनमेव तस्य माहात्म्यं प्रख्यापयति। शकुनगता विश्वासपरम्परा मानवसमाज इव प्राचीना। वस्तुतो मानवस्य शकुनेषु विश्वासः सार्वभौमिकः सार्वकालिकश्चास्ति। साहित्ये समाजस्य प्रतिबिम्बनं भवति। अतस्तस्मिन् समाजे दर्शितमहत्त्वानां शकुनादीनामपि स्थितिर्नितरां स्वाभाविकी। अत्रेदमपि ध्येयं यत्

---

१. बृहत्संहिता, शाकुनाध्यायः, श्लोकः-५।

संसारस्य विविधदेशेष्वधिगतानां शकुनानां चेद् विमर्शो विधीयेत तदा नूनमेव वक्तुं पार्यते यत्तद्विषयकस्वरूपविश्वासादिषु तथा तत्सम्बद्धसिद्धान्तादिषु महत्साम्यं विद्यते।

काव्यादिग्रन्थोपलब्धानां शकुनानामाकलनेन सामान्यतस्तेषामधोलिखिताः पञ्चवर्गा निर्धारयितुं शक्यन्ते ।

**१. ग्रहोपग्रहादिसम्बद्धानि**—वर्गेऽस्मिन् सूर्य-चन्द्र-धूमकेतूल्कादिभ्यः प्राप्तानि तथान्यनक्षत्रसम्बद्धानि च शकुनानि परिगणयितुं शक्यन्ते ।

**२. प्राकृतिकतत्त्वप्राप्तानि**—अस्मिन् वर्गे वायु-विद्युत्प्रवातादिसम्पृक्तानि शकुनानि परिगण्यन्ते ।

**३. पशुपक्ष्यादिगतानि**—अस्मिन् व्याघ्रशृगालादिपशूनाम्, काकोलूकादि-पक्षिणाम्, सर्पनकुलाद्यन्यजीवानाञ्च गत्यादिसम्बन्धिनां शकुनानां समावेशः क्रियते ।

**४. स्वप्नसम्बन्धीनि**—अस्मिन् स्वप्नदृष्टानां वस्त्वादीनां शकुनभूतानां परिगणनं भवति ।

**५. शारीरिकक्रियाचिह्नादिगतानि**—अस्मिन्नङ्गस्फुरणादिसम्बद्धानि चक्र-पद्मादिशारीरिकचिह्नसम्बद्धानि शकुनानि गण्यन्ते ।

उक्तपञ्चवर्गातिरिक्त एकोऽन्यो वर्गोऽपि कर्त्तुं शक्यते यस्मिन्नन्यविषयगतशकु-नानां परिगणनं स्यात् ।

मानवजीवने परम्पराप्राप्तविविधशकुनसन्दर्भान् दृष्टिगतान् विधाय विश्व-वाङ्मयस्यानेकैर्विद्वद्भिः सुविशदो विचारो विहितः । भारतीयाचार्यवराहमिहिरादि-ग्रन्थेषु शकुनस्वरूपादिविचारः सम्यक्तया जातः । आचार्यवराहमिहिरेण शकुनानां वर्गनिर्धारणेऽपि प्रयासः कृतो विद्यते[1] ।

अथ निबन्धेऽस्मिन् वर्गनिर्धारणादिगता विस्तृता चर्चा कर्त्तुं न युज्यत इति प्रकृतमनुसरामः ।

भारतीयसमाजेऽपि शकुने विश्वासप्रवृत्तिरतिप्राचीना लक्ष्यते । वैदिककालादद्य यावत् तत्प्रवृत्तिनैरन्तर्यं दृश्यते । संस्कृतवाङ्मयस्य विभिन्नवर्गेषु विविधशकुन-सन्दर्भाः समुपलभ्यन्ते । वैदिकसंहितासु, ब्राह्मणेषु, आरण्यकेषु, गृह्यसूत्रादिषु प्राप्ते-रनेकशकुनप्रसङ्गैर्भारतीयजीवने तद्दीर्घकालिकी माहात्म्यमण्डिता स्थितिः सूच्यते ।

लौकिक-संस्कृतग्रन्थेषु वाल्मीकीयरामायणादिष्वपि तत्सन्दर्भाः सहजतो दृश्य-मानतां गच्छन्ति । महाकविकालिदासो भारतीयधर्मसमाजसंस्कृत्यादीनां सफल-

---

१ द्रष्टव्या वराहमिहिरकृता बृहत्संहिता ।

चित्रकारोऽतस्तस्य रचनासु नानाविधशकुनसन्दर्भाः सहजतोऽवाप्यन्ते। सम्प्रति तत्कृतिषु दृष्टिगतानां शकुनप्रसङ्गानां विमर्शः क्रियते।

कुमारसम्भवे तृतीये सर्गे शिवं प्रति प्रस्थितः कामदेवो नन्दिनो दर्शनं तथैव परिहरति यथा समक्षे स्थितं शुक्रमशुभसूचकं मत्वा जनास्तं परिहरन्ति—

'दृष्टिप्रपातं परिहृत्य तस्य कामः पुरः शुक्रमिव प्रयाणे'[1]।

अत्र शुक्रस्य पुरोविद्यमानताऽशुभसङ्केतत्वेन चर्चिता विद्यते।

रघुवंशमहाकाव्यस्य तृतीयसर्गे दिलीपपुत्रस्य रघोर्जन्मकालिकोच्चस्थानीयानामसूर्यङ्गतानां पञ्चानां ग्रहाणां स्थितिस्तस्य भाविभाग्यसूचकतया मता। यथा—

ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैरसूर्यगैः सूचितभाग्यसम्पदम्।
असूत पुत्रं समये शचीसमा त्रिसाधनाशक्तिरिवार्थसञ्चयम्[2]॥

मार्गे पवनानुकूल्यं यात्रिणो मनोरथसिद्धिदत्वेन तथा तत्प्रातिकूल्यं कार्यसिद्धिबाधकत्वेनोरीक्रियते। रघुवंशमहाकाव्यस्य प्रथमे सर्गे सन्तानकामनया वसिष्ठाश्रमं प्रस्थितयोः सुदक्षिणादिलीपयोर्मार्गे पवनानुकूलता पुत्रप्राप्तिरूपमनोरथसाधिकात्वेनाऽऽकलिता—

'पवनस्यानुकूलत्वात्प्रार्थनासिद्धिशंसिनः'[3]।

एवमेव तृतीये सर्गे रघोर्जन्मकाले सुखं वहतो वायोरपि माङ्गल्यदत्वं सूचितं विद्यते—

दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम्[4]॥

मेघदूते यक्षसन्देशवाहकस्य मेघस्यालकापुरीं प्रति प्रस्थानसमये मन्दम्मन्दमानुकूल्येन प्रवहतो वायोरवस्थितिरपि तत्कार्यसाधकतया स्वीकृता। दूतकर्मनियोजितं मेघं यक्षो वदति—

'मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम्'[5]।

---

१. कुमारसम्भवम्—३।४३; २. रघुवंशमहाकाव्यम्—३।१३।
३. तदेव—१।४२; ४. तदेव—३।१०; ५. पूर्वमेघे—१०।

अभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के पतिगृहम्पति प्रस्थानरतायाः शकुन्तलाया मार्ग आकाशवाणीतः शान्तानुकूलवनस्थितिरूपा कृता घोषणा मङ्गलदायिकात्वेनाऽऽकलिता—

'शान्तानुकूलपवनश्च शिवश्च पन्थाः'[१]।

उक्तपद्यांशस्य व्याख्यां कुर्वन् टीकाकारो राघवभट्टः पूर्वोक्तमेव तथ्यं समर्थयति—

'शान्तोऽनुकूलश्चासौ पवनश्च यत्र स पन्थाश्च शिवो माङ्गल्यरूपः सुखप्रदश्च। अनुकूलेऽपि शकुनसूचकत्वम्'।

प्रवातादेः प्रातिकूल्यममङ्गलदायकरूपेणाङ्गीक्रियते।

रामविवाहावसरे मिथिलानगरीं प्रति गच्छतो दशरथस्य पथि प्रतिकूलगामिझञ्झावातः परशुरामद्वारा करिष्यमाणोत्पातसूचकत्वादशुभविधायकतया जातः—

'तस्य जातु मरुतः प्रतीपगा वर्त्मसु ध्वजतरुप्रमाथिनः।
चिक्लिशुर्भृशतया वरूथिनीमुत्तटा इव नदीरया नदीम्'[२]॥

प्रतिकूलपवनादिकस्थितिं विलोक्य दशरथस्य चेतस्यमङ्गलाऽऽशङ्का जायते। अत एव स स्वगुरुमेतस्मिन् विषये पृच्छति—

'तत्प्रतीपपवनादिवैकृतं प्रेक्ष्य शान्तिमधिकृत्य कृत्यवित्।
अन्वययुक्त गुरुमीश्वरः क्षितेः स्वन्तमित्यलघयत् स तद् व्यथाम्'[३]॥

किञ्चित्कालानन्तरमेव भयानकविघ्नभूतपरशुरामस्योपस्थितिर्जायते। अत्र प्रतिकूलपवनादेरशुभसूचकता नितरां स्पष्टा।

रघुवंशस्य तस्मिनेव सर्गे यदा दशरथो विश्वामित्रस्यानुरोधं दृष्टिगतं विधाय यज्ञविधानबाधकराक्षसवधाय विश्वामित्रेण सार्धं रामलक्ष्मणयोर्गमनायानुमतिं ददाति, तदा मेघकृतसपुष्पजलवर्षणं राक्षसवधरूपाभीष्टकार्यसाधकत्वेनाकलितम्—

'यावदादिशति पार्थिवस्तयोर्निर्गमाय पुरमार्गसंस्क्रियाम्।
तावदाशु विदधे मरुत्सखैः सा सपुष्पजलवर्षिभिर्घनैः'[४]॥

तत्रैव सर्गे जनकपुरतोऽयोध्यां परावर्तमानस्य दशरथस्य पथि दृश्यमाना धूलिधूसरा दिशः परशुरामोत्पातरूपसूचकतयाऽवगम्यन्ते—

१. अभिज्ञानशाकुन्तलम्—४।१०; २. रघुवंशमहाकाव्यम्—११।५८।
३. तदेव—११।६२; ४. तदेव—११।३।

'श्येनपक्षिपरिधूसरालकाः सान्ध्यमेघरुधिरार्द्रवाससः ।
अङ्गना इव रजस्वला दिशो नो बभूवुरवलोकनक्षमाः'[1] ॥

अत्रेदं ध्यातव्यं यद् दिशां नैर्मल्यं शुभसूचकं तथा मालिन्यादिकमशुभसूचकमवगम्यते । उपरि दिगनैर्मल्यस्य भाव्यशुभसूचकता प्रदर्शिता । अधस्तने पद्ये रघुजन्मसमये दिङ्निर्मलता रघोर्भाविशुभशंसिनीत्वेन गृहीता -

'दिशः प्रसेदुर्मरुतो ववुः सुखाः प्रदक्षिणार्चिर्हविरग्निराददे ।
बभूव सर्वं शुभशंसि तत्क्षणं भवो हि लोकाभ्युदयाय तादृशाम्'[2] ॥

शिवारुतममङ्गलसूचकरूपेणावबुध्यते । अयोध्यां प्रति गमनक्रियातत्परस्य दशरथस्य मार्गे शृगालिनीनां रवः श्रवणगोचरतां गतो येन भार्गवकोपजनितस्य भाविनोऽमङ्गलस्य सूचनाऽवगम्यते—

'भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववासिरे ।
क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवा'[3] ॥

वामभागगता मयूरचातकादयः पक्षिणो मृगादयः पशवश्च सैन्यसम्पदबलप्रदत्वेन गृह्यन्ते—

'बर्हिणश्चातकाश्चाषा ये च पुंसं गताः खगाः ।
मृगा वा वामगा दृष्टाः सैन्यसम्पद्बलप्रदाः'[4] ॥

यथा चातकादीनां मधुरशब्दास्तथाऽऽकाशे बलाकानां मेघसम्पर्के समुड्डयनं कार्यसाधकरूपेणोररीक्रियते । मेघदूतस्य पूर्वभागे यक्षसन्देशोद्वहनरतस्य मेघस्य प्रस्थानक्षणे चातकबलाकादीनामवस्थितेः कार्यसिद्धिरूपशुभसूचकताऽधस्तने पद्येऽवाप्यते—

'मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः'[5] ॥

शरीरस्य विविधाङ्गानां स्फुरणेन मङ्गलामङ्गलयोः सूचनाऽधिगम्यते । पुरुषाणां दक्षिणदेहभागे तथा स्त्रीणां वामदेहभागे जायमानः स्पन्दः शुभफलप्राप्ति-

---

१. रघुवंशमहाकाव्यम्—११।६० ;     २. तदेव—३।१४ ;     ३. तदेव—११।६१ ।
४. पूर्वमेघे दशमश्लोकस्य टीकायां विल्सनमहाभागः, प्र० मोतीलालबनारसीदासः, पृ० ३७ ।
५. पूर्वमेघे—१० ।

सूचकतया स्वीक्रियते। ततो विपरीतदशायां जातः स्पन्दोऽशुभसङ्केततयाऽवगम्यते—

'पुंसां यदा दक्षिणदेहभागे स्त्रीणां तु वामावयवे प्रजातः।
स्पन्दः फलानि प्रदिशत्यवश्यं निहन्त्यनुक्ताङ्गविपर्यये च'[१] ॥

विक्रमोर्वशीयस्य तृतीयेऽङ्के यदा नाटकस्य नायकभूतं राजानं पुरूरवसं विदूषको वदति यदप्सरसोर्वश्या सह तत्समागमोऽवश्यम्भावी। तदा राजा स्वदक्षिणभुजस्फुरणेन क्रियाप्राप्तिरूपाभिलाषपूर्तिम्प्रत्याश्वस्तो जायते। अत्र दक्षिणभुजस्य भाविशुभसङ्केतत्वं निर्विवादमेव—

'वचोभिराशाजननैर्भवानिव गुरुव्यथः।
अयमास्पन्दितैर्बाहुराश्वासयति दक्षिणः[२]' ॥

अभिज्ञानशाकुन्तले कण्वाश्रमं प्रविष्टस्य दुष्यन्तस्य यदा बाहुः स्फुरति, तदा स आशङ्कते यच्छान्तेऽस्मिन्नाश्रमे बाहुस्फुरणस्य किं फलं भविष्यति ?

'शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य'[३]।

आशङ्क्येत्थं स आश्वस्तो भवति यदेतादृशे आश्रमेऽपि भवितव्यतावशान्माङ्गल्यावाप्तिर्भवितुं शक्नुयात्—

'अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र'[४]।

तत्रैव सप्तमेऽङ्के तद्बाहुस्पन्दनमज्ञातस्थानगतायास्तत्पत्न्याः शकुन्तलाया निकटस्थोपस्थितिः सूचिता—

'मनोरथाय नाशंसे किं बाहो ! स्पन्दसे वृथा।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते'[५] ॥

रघुवंशस्य षष्ठे सर्गे इन्दुमतीस्वयंवरावसरे रघुपुत्रस्याजस्य समक्षं यदेन्दुमती समागता तदा तस्य चेतसि वरणावरणात्मिकाऽऽशङ्का जायते। तदानीमेव तस्य दक्षिणबाहुः स्फुरितो जातस्तेन तस्य शङ्का दूरीभवति। तस्य मनसि इन्दुमतीप्राप्तिरूपाऽऽशा जायतेतराम्। प्रसङ्गेऽस्मिन् दक्षिणबाहुस्फुरणस्य भाविशुभसूचकत्वं स्पष्टम्—

---

१. विक्रमोर्वशीयम्, श्लो० १, टिप्पणी ; २. तदेव—३।९।
३. अभिज्ञान० १।१५; ४. तदेव—१।१५ ; ५. तदेव—७।१३।

'तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद'[1] ॥

नारीणां दक्षिणनेत्रस्य स्फुरणस्यामङ्गलता प्रसिद्धा । दुष्यन्तसभाभवने शार्ङ्गरव-शारद्वताभ्यां सह समुपस्थितायाः शकुन्तलाया यदा दक्षिणनेत्रं स्पन्दते तदा सा नितरां भीता जायते । यथा—

**शकुन्तला**—(निमित्तं सूचयित्वा) अहो किं मे वामेतरं नयनं स्फुरति ।

**गौतमी**—जाते प्रतिहतममङ्गलम् ! सुखानि ते भर्तृकुलदेवता वितरन्तु[2] ।

एवमेव रघुवंशस्य चतुर्दशे सर्गे रामस्यादेशमाश्रित्य लक्ष्मणेन गुप्तरूपेण वनवासाय नीयमानया सीतया स्ववामेतरनेत्रस्फुरणेन भाविभयानकदुःखस्य सूचना समवगम्यते । अधस्तने श्लोके सीताया दक्षिणनेत्रस्य स्फुरणस्याशुभसूचकत्वं स्फुटमेव—

'जुगूह तस्याः पथि लक्ष्मणो यत् सव्येतरेण स्फुरता तदक्ष्णा ।
आख्यातमस्यै　　गुरुभाविदुःखमत्यन्तलुप्तप्रियदर्शनेन[3] ॥

नारीणां वामनेत्रस्फुरणस्य माङ्गल्यसूचकत्वमङ्गीक्रियते । निम्नाङ्कितश्लोके मालविकाया वामाक्षिस्पन्दनं तस्या मनसि प्रियदर्शनाभावमूलकं नैराश्यं दूरीकृत्य प्रियदर्शनरूपाशां सञ्चारयति—

'दुर्लभः प्रियो मे तस्मिन् भव हृदय निराश-
　　महो ह्यपाङ्गो मे परिस्फुरति किमपि वामः ।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
　　नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम्'[4] ॥

तथैव पञ्चमेऽङ्के मालविकाया वामनेत्रस्पन्दनं तत्प्रियेण सार्धं विवाहरूपस्य भाविशुभसङ्केतं दर्शयति—

**मालविका**—( आत्मगतम् ) जानामि निमित्तं कौतुकालङ्कारस्य, तथापि मे हृदयं विसिनीपत्रगतमिव वेपते । अपि च दक्षिणेतरद् नयनमपि मे स्फुरति[5] ।

मानवहृदयनैर्मल्यशैथिल्यादिनाऽपि भाविशुभाशुभयोः पूर्वज्ञानं कर्तुं पार्यते । अकारणमेव प्रसन्नं जायमानं मन आगामिशुभस्य खिन्नं च सद् अशुभस्य द्योतकत्वं

---

१. रघुवंशमहाकाव्यम्—६।६८;　　२ अभिज्ञान०, अ० ५ ।
३. रघुवंशमहाकाव्यम्—१४।४९;　　४. मालविका० २।४ ।
५. तदेव—५।६ ( गद्यम् ) ।

भजते । विक्रमोर्वशीयस्य प्रथमेऽङ्के स्वप्रेयसीमूलचिन्तया चिन्तितस्य राज्ञो मनोऽकस्मात् शान्ति व्रजति तेन स उर्वशीप्राप्त्यर्थमाशावान् भवति । अत्र शान्ति ( सुखं वा ) गतस्य मनसः प्रियतमावाप्तिरूपस्य शुभफलस्य पिशुनत्वं स्फुटमेव —

असुलभा सकलेन्दुमुखी च सा किमपि चेदनङ्गविचेष्टितम् ।
अभिमुखीष्विव वाञ्छितसिद्धिषु व्रजति निर्वृतिमेकपदे मनः'[१] ॥

उक्तपञ्चवर्गगतेभ्यो व्यतिरिक्तानामपि शकुनानां स्थितिः संस्कृतसाहित्ये दृश्यते । विशेषस्त्रीपुरुषाणां दर्शनम्, अश्रुकङ्कणादीनां पतनादिकमपि मङ्गलामङ्गलज्ञानं कारयितुं प्रभवतः —

रघुवंशस्य द्वादशे सर्गे शूर्पणखाकर्णनासिकाविच्छेदक्रुद्धानां रामं प्रति युद्धाय प्रस्थितानां च राक्षसानामग्रे कर्णनासिकाहीनायाः शूर्पणखायाः स्थितिस्तेषां विनाशरूपममङ्गलं सूचयन्तीव लक्ष्यतेतराम्—

'मुखावयवलूनां तां नैर्ऋता यत्पुरो दधुः ।
रामाभियायिनां तेषां तदेवाभूदमङ्गलम्'[२] ॥

रघुवंशस्य दशमे सर्गेऽयोध्यानगर्या राजभवने दशरथस्य रामादिपुत्रजननकाले राक्षसराजस्य रावणस्य किरीटेभ्यो मणयो राक्षसश्रियोऽश्रव इव पतिताः । अत्र मणिपातो रावणस्य भाविविनाशं सूचयति—

'दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः'[३] ॥

मनुष्याणां कृते प्रसन्नतां गतैर्देवैरभीष्टवस्तुप्रदानमप्युत्तरकालिकमाङ्गल्यसूचकत्वेनावधार्यते । अभिज्ञानशाकुन्तलस्य चतुर्थेऽङ्के कण्वाश्रमे यदा वनदेवताप्रदत्तान्याभरणानि गौतमीसमक्षं समानीतानि ऋषिकुमाराभ्यां तदा शकुन्तलामवलोक्य प्रियंवदा वदति—"हलाऽनयाऽभ्युपपत्त्या सूचिता ते भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीरिति" । अत्र हर्षितदेवद्वारा प्रदत्तान्याभरणानि माङ्गलिकत्वेनावधारितानि ।

अभीष्टमङ्गलाधायकप्राणिवस्त्वादीनामाकस्मिकोपस्थितिरपि माङ्गल्यामाङ्गल्यविधायकतयोरीक्रियन्ते । कस्यचिदभिप्रेतस्य प्राणिनो वस्तुनो वा चिन्तनकाल एव यदा तस्याकस्मिकोपस्थानं भवति तदा तस्य मङ्गलकारित्वं गृह्यते ।

रघुवंशस्य प्रथमे सर्गे सन्तानाभिलाषिणं सपत्नीकं दिलीपं यदा गुरुवसिष्ठः सन्तानप्राप्तये नन्दिनीं सेवितुमादिशति—

१. विक्रमोर्वशीयम्—१।९; २. रघुवंशम्—१२।४३; ३. तदेव—१०।७५ ।

'सुतां तदीयां सुरभेः कृत्वा प्रतिनिधिं शुचिः ।
आराधय सपत्नीकः प्रीता कामदुघा हि सा'[१] ॥

तदैवानिन्द्या नन्दिनी वनादावृत्य तत्रोपस्थिता भवति शुभदर्शनां तां गामवलोक्य शकुनज्ञो गुरुर्दिलीपं वदति—"राजन् ! नाम्ना कीर्तिता सत्येवेयं कल्याणी गौरुपस्थिताऽतस्त्वं स्वपुत्रप्राप्तिरूपकार्यसिद्धिं निकटवर्तिनीमेव जानीहि"—

'अदूरवर्तिनीं सिद्धिं राजन् विगणयात्मनः ।
उपस्थितेयं कल्याणी नाम्नि कीर्तित एव यत्'[२] ॥

अत्र सहसा नन्दिनीरूपकल्याणोपस्थितेर्मनोरथप्रदत्वेन ग्रहणं स्पष्टमेव ।

इत्थं कालिदासीयकाव्येषु दृष्टिगोचरीभूतानां कतिपयशकुनसन्दर्भाणां माङ्गल्यामाङ्गल्यप्रदत्वरूपो व्याख्यासहितो विमर्शः कृतः । सन्दर्भेऽस्मिन् ध्येयमिदं यद् अपशकुनजन्य-कुफलावाप्तिभीता जना जातेऽपशकुने तन्निवारणायापि प्रयत्नवन्तो दृश्यन्ते । भारतेन साकमन्यदेशेष्वपि अपशकुननिवारणार्थं क्रियमाणा उपायाः संदृश्यन्ते । एतादृशानामुपायानां वैविध्यमपि स्वाभाविकम् । यद्यपि भारतीये समाजेऽपशकुननिवृत्तिमूलका अनेक उपायाः प्रचलिताः सन्ति; परन्तु संस्कृतकाव्येषु तेषां स्थितिः स्वल्पैव । अपशकुनानां शान्तिर्देववन्दनादिभिर्यज्ञादिविधानैश्च क्रियत इति ।



१. रघुवंशम्—१।८१;   २. तदेव—१।८५ ।

# रीतितत्त्वमीमांसा

श्रीबैरिष्टरतिवारी
सरस्वतीभवनम्,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

❀❀❀

**पृष्ठभूमिः —**

साहित्यविद्याया अनवद्यपरम्परा यद्यपि वेदादेवारभ्यते तथापि भरतमुनिमारभ्य पण्डितराजजगन्नाथपर्यन्ता द्विसहस्राब्दविस्तृता सा ऐतिहासिकीति निश्चप्रचम्। काव्यस्य रसात्मकत्वाभ्युपगमेन, चमत्कारस्य रससारत्वात्, तस्यापि सौन्दर्यमूलकत्वात्, तस्यापि सौन्दर्यप्रयोज्यत्वात्, तस्यापोद्धारदृशान्तःसौन्दर्य-बहिःसौन्दर्यभेदाभ्यां वर्गीकरणेनालङ्कारगुणरीतिप्रभृतीनां काव्योत्कर्षाधायकत्वं निर्विवादम्। तदुक्तं विश्वनाथेन—

'वाक्यं रसात्मकं काव्यं दोषास्तस्यापकर्षकाः।
उत्कर्षहेतवस्ते स्युर्गुणालङ्काररीतयः'[1] ॥

रीतिरात्मा काव्यस्येति वदन्तो वामनप्रभृतयः शब्दार्थकलेवरस्य काव्यस्य विवेचनमेव प्रपञ्चयन्ति।

वस्तुतस्तु काव्यरचनायास्तत्त्वद्वयम्—भावपक्षः, कलापक्षश्च। भावपक्षोऽनुभूतिरूपः, कलापक्षश्च शिल्परूपः। रीतिः कलापक्षाश्रिततत्त्वेष्वन्यतमा। भावानुभूतितारतम्यस्य तीव्रतासम्पत्यर्थं रीतेरावर्जकता सहृदयहृदयाह्लादकारिणी भवति। काव्यकर्मणः, काव्यसमीक्षायाश्च क्षेत्रे पौरस्त्यरीतिसिद्धान्तस्य, पाश्चात्यशैलीसिद्धान्तस्य चेयमेव पूर्वपीठिका।

## रीतिसिद्धान्तस्योद्भवः

**१. दण्डिमतम्—**

संस्कृतकाव्यशास्त्रे रीतिसिद्धान्तस्य प्रवर्त्तकः क इति जिज्ञासायां 'दण्डि'-कवेर्नाम स्मृतिपथमवतरति। काव्यादर्शे 'रीति'पदसमानार्थतया मार्गशब्दस्य

---

१. सा० द०, १ परि०।

प्रयोगः क्रियते। मार्गस्य परिभाषा यद्यपि दण्डिना न कृता, तथापि काव्यादर्श-विश्लेषणेन दण्डिनो मार्गविषयिणी दृगुन्मीलिता भवति। 'शरीरं तावदिष्टार्थ-व्यवच्छिन्ना पदावली[1]' इत्युपक्रम्य—

"तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः।
इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्॥
तथापि न तदाख्यातुं सरस्वत्यापि शक्यते[2]"॥ इत्यभिहितम्।

तद्रीत्या पदावल्या इष्टतायै अर्थस्येष्टत्वमावश्यकम्। तन्मते काव्ये शब्दार्थयोः समुचिता संयोजना समपेक्षिता। एवं शब्दार्थयोः समुचिता संयोजना-सरणिरेव मार्गः, सैव रीतिः। प्रतिकविरियं भिन्ना। तन्मूलत्वाद् रीतीनामानन्त्यं भवति। तथापि दण्डिना रीतीनां गौडवैदर्भादिभेदाः कृताः। 'विशेषो गुणात्मा' इति न्यायाद् गुणकृत एव रीतिषु विशेषः। ते च गुणाः काव्यगुणशब्देनोच्यन्ते। इमे काव्यगुणा भरतेन नाट्यशास्त्रे निर्दिष्टाः —

'श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजः कान्तिः समाधयः[3]'॥

एतेषु श्लेषप्रसादसौकुमार्यौजःसमतानां सम्बन्धः काव्यवर्णविन्यासेन, अर्थ-व्यक्तिरुदारत्वकान्तिसमाधीनां सम्बन्धो भावेनार्थेन च सहास्ति। माधुर्यस्य सम्बन्ध उभाभ्याम्। वैदर्भमार्गे माधुर्यार्थव्यक्त्युदारत्वौजःसमाधय उभयमार्गसाधारणाः, शिष्टानां पञ्चानां गुणानां ग्रहणं मूलतो वैदर्भमार्गे यथोक्तरूपेण, गौडमार्गे किञ्चित् परिवर्त्तनेन वर्त्तते। गौडवैदर्भमार्गयोरेतद्विलक्षणलक्षणेन स्पष्टमस्ति यद् वैदर्भमार्गे रमणीयकोमलपरिष्कृतसुबद्धा रचनाशैली स्वीकृता। भावानां प्राञ्जल-तायाः समानुपातिकस्यौचित्यस्यास्ति महत्त्वम्; परन्तु गौडमार्गे परुषचमत्कारपूर्ण-शब्दाडम्बरयुक्ता शैली स्वीकृता।

## २. वामनमतम्—

दण्डिनोऽनन्तरं रीतिसिद्धान्तस्य व्याख्याकारो बभूवाष्टमख्रीस्तशतकीयो वामनः। दण्डिनो मार्ग एव वामनस्य रीतिः। यद्यपि आग्नेये महापुराणे महाकाव्य-स्वरूपनिर्वचनप्रसङ्गेन 'सर्वरीतिरसैः पुष्टम्' इत्युक्त्वा रीतितत्त्वं सङ्गृहीतम्, तथापि केचनाधुनिका अग्निपुराणं नवीनं यद्वा, आग्नेयं साहित्यनिरूपणं प्रक्षिप्तं मन्यन्ते।

---

१. काव्यादर्शः —१।१०;　　२. तदेव—१।१०१-१०२;　　३. ना० शा० १।४१।१००।

सिद्धान्तरीत्या पुराणत्वाविशेषादष्टादशस्वन्यतमत्वात्पुराणान्तरेषु स्मृतत्वात् प्रक्षेपाक्षेपस्य प्रतारणामात्रपरत्वमेव । यथा तथा वास्तु, व्याकरणदृष्ट्या रीतिमार्ग-पदयोः पर्यायत्वमेवेति । तदुक्तं भोजराजेन—

"वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः ।
रीङ्गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते" ॥
( सर० कण्ठा० १।२।२७ )

वामनाचार्यमते 'रीतिरात्मा काव्यस्य' इत्युपक्रम्य 'विशिष्टा पदरचना रीतिः', 'विशेषो गुणात्मा' इत्यनूक्तम् । भरत-दण्डिप्रतिपादिता शाब्दा आर्थाश्च गुणा वामनेनापि सङ्गृहीताः । तद्रीत्या 'गुणाः काव्यशोभाजनकाः', 'अलङ्काराः काव्य-शोभातिशयाधायकाः' ।

## गुणबोधक-सारिणी

| क्रमः | शब्दगुणाः | लक्षणानि | अर्थगुणाः | लक्षणानि |
|---|---|---|---|---|
| १. | श्लेषः | वर्णानां क्लिष्टा योजना मार्दवं च | श्लेषः | बहूनां भावानां सम्मेलनम् |
| २. | प्रसादः | शब्दयोजनायां सघनता-परिहारः | प्रसादः | अर्थस्य प्राञ्जलता |
| ३. | समता | शब्दयोजनायां साम्यम् | समता | भावानां क्रमबद्धवर्णनम् |
| ४. | माधुर्यम् | दीर्घसमासाभावात् प्रत्येक-पदस्य पृथक् प्रतीतिः | माधुर्यम् | उक्तेः चमत्कारपूर्णता |
| ५. | सुकुमारता | कोमला पदयोजना | सुकुमारता | मसृणवर्णानामुपयोगः |
| ६. | अर्थव्यक्तिः | शब्दप्रयोगस्य सम्पूर्णता | अर्थव्यक्तिः | वस्तुवर्णने स्वभाविकी सजीवता |
| ७. | उदारता | सशक्तपदयोजनायां सजीवता | उदारता | अश्लीलत्वग्राम्यत्व-परिहारः |
| ८. | ओजः | गाढबन्धत्वम् | ओजः | भावानां प्रौढिः |
| ९. | कान्तिः | शब्दानामुज्ज्वलत्वात् सम्पन्नताः | कान्तिः | रसाभिव्यक्तिप्रामुख्यम् |
| १०. | समाधिः | आरोहावरोहक्रमः | समाधिः | मूलार्थसम्बन्धः |

वामनाचार्येण एतेषां रीतिवैशिष्ट्याधायकानां गुणानां माध्यमेन रीति-सङ्कल्पनायां भावपक्षस्य महत्त्वम् इदंप्रथमतया स्पष्टीकृतम्। यद्यपि दण्डिनाऽप्येषा दिगुन्मीलिता, तथापि वामनेन रीतिसङ्कल्पनायां भावपक्षस्य महत्त्वस्थापना ऐदम्प्राथम्येन कृता। भरतोक्ता दण्डिस्वीकृता दश गुणा विस्तारिताः। गुणाश्रित-पदसङ्घटनायां 'विशिष्टा पदरचना' रीतेर्बाह्यं तत्त्वम्, रसभावालङ्काराश्चान्तरिकं तत्त्वम्। विविधानां रीतिविभेदकानां तत्त्वानां पदयोजना-समासयोजना-रसपरिपाक-वक्रोक्ति-प्रभृतीनां निरूपणं वामनेनैव प्रत्यक्षतया कृतम्।

वामनेन वैदर्भी-गौडी-व्यतिरिक्ता पाञ्चाली रीतिरप्याविष्कृता। भौगोलिका-धारेण रीतिवर्गीकरणस्य दण्डिप्रतिपादिता सरणिर्वामनाचार्येण स्वीकृता। कवि-शैलीनां दैशिकत्वसाधारण्येनेमां व्यवस्थां विधायापि देशेन रीतेः सम्बन्धानित्यत्वमेव प्रोक्तम्। तदुक्तम्—

'विदर्भादिषु दृष्टत्वात् तत्समाख्या'।

'विदर्भगौडपाञ्चालेषु देशेषु तत्रत्यैः कविभिर्यथास्वरूपमुपलब्धत्वात् तत्स-माख्या, न पुनर्देशैः किञ्चिदुपक्रियते काव्यानाम्'[1]।

## वैदर्भीरीतेर्वैशिष्ट्यम्

श्रीवामनाचार्यरीत्या वैदर्भी-रीतिः समग्रगुणसम्पन्ना, गौडी-रीतिरोजः-कान्तिभ्यां स्थिरीभूता, पाञ्चाली-रीतिर्माधुर्य-सौकुमार्याभ्यां स्वरूपायिता; परन्तु वैदर्भीरीतौ सर्वेषां गुणानां समुच्चयो भवति। अयं काव्यपाकः —

'गुणस्फुटत्वसाकल्यं काव्यपाकं प्रचक्षते'[2]।

इति न्यायात्। वैदर्भीरीतिप्रतिकूलतया गौडीपाञ्चाल्यौ भवतः। गौडीरीतौ अर्थयोजनादृष्ट्या भावानां प्रौढिः, रसपरिपाकस्य महत्त्वम्, शब्दयोजनायां समास-शैली, पदानामुज्ज्वलता च; परन्तु पाञ्चालीरीतावर्थयोजनायां चमत्कारपूर्णता, कोमला, मधुरा पदावली च। एवं वैदर्भी सर्वश्रेष्ठा रीतिरित्युक्तं श्रीहर्षेणापि नैषधे—

'धन्यासि वैदर्भिगुणैरुदारैर्यया समाकृष्यत नैषधोऽपि'। इत्यादिना।

### ३. उद्भटमतम्—

वामनसमकालीन आचार्य उद्भटभट्टो यद्यपि रीतीनां निरूपणं न करोति, परन्तु तद्विवेचिता वृत्तयो रीतिरूपा इति वक्तुं शक्यते। तेन वृत्तीनां विश्लेषणमनु-

१. काव्यालङ्कारसूत्रवृत्तिः—१।२।१०।
२. तदेव—३।२।१४।

प्रासालङ्कारनिरूपणप्रसङ्गेन कृतम् । प्रतीहारेन्दुराजो[1] वक्ति यद् रसाभिव्यक्ति-दृष्ट्या समुचितवर्णविन्यासो वृत्तिः । सैव वामनोक्ता पदसङ्घटनात्मिका रीतिः । वृत्तयः परुषा ग्राम्या उपनागरिकाश्चेति तिस्रः[2] ।

**४. रुद्रटमतम्—**

वामनोद्भटभट्टयोरनन्तरं रुद्रटाचार्येण रीतिनिरूपणे नवीना परिपाटी, पूर्वाचार्यै रीतिविषये वर्णविन्यासक्रममूलकं वर्गीकरणं च विहितम् ; परन्तु रुद्रटाचार्येण समासयोजनामूलकं वर्गीकरणं रीतीनां कृतम् । तद्रीत्या वैदर्भीरीतौ असमासा, गौडीरीतौ दीर्घसमासा, पाञ्चालीरीतौ लघुसमासा पदसङ्घटना भवति । मध्यमसमासाधारिता चतुर्थी रीती रुद्रटेन प्रथममाविष्कृता लाटीनाम्ना प्रसिद्धा; परन्तु तदुत्तरवर्त्तिभिराचार्यैर्नोररीकृता सा ।

रुद्रटाचार्येण चतसृणां रीतीनां साकमेव पञ्चानां वृत्तीनामपि निरूपणं कृतम् । उद्भटमतमनुसरताऽनेनानुप्रासालङ्कारनिरूपणप्रसङ्गेनैव वृत्तिनिरूपणं कृतम् । ताश्च मधुरा-प्रौढा-परुषा-ललिता-भद्रा-संज्ञिकाः । वृत्तयो रसाद्यभिव्यक्त्यनुगुणवर्णव्यवहारात्मिकाः । दण्डिवामनादिप्रतिपादितशब्दयोजना-भावयोजनामूलकं सिद्धान्तमपहायानेन समासयोजना-वर्णयोजनामूलको रीतिवृत्तिनिरूपणसिद्धान्तः प्रतिपादितः । रुद्रटेन रीतिसिद्धान्तस्य स्फुटीकरणं न कृतमित्यन्या विचारणा[3] ।

**५. कुन्तकमतम्—**

श्रीमद्राजानककुन्तकाचार्येण रीतिविषये नूतना दिगुन्मीलिता । काव्यरीतिविषये प्रादेशिकरीतिवादस्य खण्डनमनेन कृतम् । प्रादेशिकन्यायानुसरणेन रीतीनामानन्त्यमिति, तन्नोचितम् । काव्यरीतिर्न कविकुलस्य प्रादेशिको धर्मः । तदुक्तम्—

'देशभेदनिबन्धनत्वे रीतिभेदानां देशानामानन्त्याद् असंख्यत्वं प्रसज्यते । न च विशिष्टरीतियुक्तत्वेनात एव काव्यकरणे मातुलेयभगिनीविवाहवद् देशधर्मतया व्यवस्थापयितुं शक्यम् । देशधर्मो हि वृद्धव्यवहारपरम्परामात्रशरणः शक्यानुष्ठानतां नातिवर्त्तते । तथाविधकाव्यकरणं पुनः शक्त्यादिकारणकलापसाकल्यम्, अपेक्ष्यमाणं न शक्यते यथाकथञ्चिदनुष्ठातुम् । न च दाक्षिणात्यगीतविषयसुस्वरतादिध्वनिरामणीयकवत् तस्य स्वाभाविकत्वं वक्तुं पार्यते । तस्मिन् सति तथाविधं काव्यकरणं सर्वस्य स्यात्' इति[4] ।

---

१. अयमभिनवगुप्तपादाचार्यस्य गुरुरिति लोचनीयमङ्गलपद्यान्तरे प्रोक्तम् ।

२. काव्यालङ्कारसारसंग्रहः, प्रतीहारेन्दुराजस्य लघुवृत्तिः, पृ० ५ ।

३. रुद्रटः, काव्यालङ्कार० १।४, ३६,१५,२०;२।१९ ।

४. वक्रोक्तिजीवितम्—१।२४ वृत्तिः ।

श्रीकुन्तकाचार्यरीत्या उत्तमाधममध्यमरीतिभेदकरणमप्यनुचितम्। तथा हि—'न च रीतीनामुत्तमाधममध्यमभेदेन त्रैविध्यं ( रीतीनाम् ) व्यवस्थापयितुं न्याय्यम्। यस्मात् सहृदयहृदयाह्लादकारिकाव्यलक्षणप्रस्तावे वैदर्भीसदृशसम्भवाद् मध्यमाधमयोरुपदेशवैयर्थ्यमायाति। परिहार्यत्वेनाप्युपदेशो न युक्ततामवलम्बते। तैरेवानभ्युपगतत्वात्। न चागतिविगतिन्यायेन यथाशक्ति दरिद्रनानादिवत् काव्यकरणीयमर्हतामर्हति'[1]।

श्रीकुन्तकाचार्येण सर्वतः प्रथमं कविस्वभाव एव रीतिभेदनियामक उक्तः। कविस्वभावनिबन्धनत्वेन कवि-काव्यप्रस्थानभेदः समञ्जसतामवगाहते।

यद्यपि कविस्वभावभेदनिबन्धनत्वाद् अनन्तभेदभिन्नत्वमनिवार्यम्, तथापि परिसंख्यातुमशक्यत्वात् सामान्येन त्रैविध्यमेवोपपद्यते। सुकुमार-विचित्र-मध्यमेति भेदात्।

रीतिपदमपहाय कुन्तकेन मार्गशब्दस्योपयोगः कृतः शब्दार्थयोरानुकूल्यमौचित्यम्। सौभाग्यं विभिन्नानां गुणानां समन्वयजनितं काव्यस्यालौकिकचमत्कारजनकं तत्त्वम्। काव्यगुणं शब्दवाक्यप्रबन्धधर्मरूपेणैव स्वीकृतम्। काव्यमार्ग-(रीति) भेदकतत्त्वेषु माधुर्य-प्रसाद-लावण्याभिजात्यानां गुणविशेषाणामपि कल्पना कुन्तकाचार्येण कृता। तथा हि—

'आभिजात्यप्रभृतयः पूर्वमार्गोदिता गुणाः।
अत्रातिशयमायान्ति जनिताहार्यसम्पदः॥
माधुर्यादिगुणग्रामो वृत्तिमाश्रित्य मध्यमाम्।
यत्र कामपि पुष्णाति बन्धच्छायातिरिक्तताम्॥
मार्गोऽसौ मध्यमो नाम नानारुचिमनोहरः।
स्पर्धया यत्र वर्तन्ते मार्गद्वितयसम्पदः॥
असमस्तमनोहारिपदविन्यासजीवितम्।
माधुर्यं सुकुमारस्य मार्गस्य प्रथमो गुणः॥
अक्लेशव्यञ्जिताकूतं झटित्यर्थसमर्पणम्।
रसवक्रोक्तिविषयं यत् प्रसादः स कथ्यते॥
वर्णविन्यासविच्छित्तिपदसन्धानसम्पदा।
स्वल्पया बन्धसौन्दर्यं लावण्यमभिधीयते॥
श्रुतिपेशलताशालिसुस्पर्शमिव चेतसा।
स्वभावमसृणच्छायमाभिजात्यं प्रचक्षते'॥ इति।

( व० जी० १।३०-३७ )

---

१. वक्रोक्तिजीवितम्—१।२४ वृत्तिः।

कुन्तकोक्ताः काव्यमार्गीया गुणा वस्तुतो विचित्रमार्गेऽतिशयतां प्राप्याष्टविधाः सञ्जायन्ते। तदुक्तम्—

वैदग्ध्यस्पन्दिमाधुर्यं पदानामत्र बध्यते।
याति यद् व्यक्तशैथिल्यं बन्धबन्धुरतां गतम्॥
असमस्तपदन्यासः प्रसिद्धः कविवर्त्मनि।
किञ्चिदोजः स्पृशन् प्रायः प्रसादोऽप्यत्र दृश्यते॥
गमकानि निबध्यन्ते वाक्ये वाक्यान्तराण्यपि।
पदानीवात्र कोऽप्येषः प्रसादस्यापरः क्रमः॥
अत्रालुप्तविसर्गान्तैः पदैः प्राप्तैः परस्परम्।
ह्रस्वैः संयोगपूर्वैश्च लावण्यमतिरिच्यते॥
यन्नातिकोमलच्छायं नातिकाठिन्यमुद्वहत्।
आभिजात्यं मनोहारि तदत्र प्रौढिनिर्मितम्'॥ इति।
(व० जी० १।४४-४८)

एवं कुन्तकेन रीतेः पूर्वापेक्षयाधिकं वैज्ञानिकं विश्लेषणं कृतम्।

### ६. आनन्दवर्धनमतम्

साहित्यदर्शने ध्वनिसिद्धान्तस्य प्रतिष्ठाकाराः श्रीमदानन्दवर्धनाचार्या रसवादिसाहित्यालोचनसरणिव्यवस्थापनपरमाचार्याः 'काव्यस्यात्मा ध्वनिरिति बुधैः' इति प्रतिज्ञाय ध्वनिः काव्यस्य जीवितं तत्त्वमिति ध्वन्यालोके प्रतिपादयामासुः। ध्वनिसम्प्रदाये गुणा रसधर्मा माधुर्यौजःप्रसादा भामहोक्ताः स्वीकृताः। सङ्घटनानिरूपणक्रमे प्रोक्तम्—

'असमासा समासेन मध्यमेन च भूषिता।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता'[१]॥

सङ्घटना (रीतिः) रसादीन् व्यनक्ति, गुणानाश्रित्य तिष्ठति।

'गुणाः सङ्घटना चेत्येकं तत्त्वम्', 'गुण-सङ्घटनयोर्भेदः' इति द्वितीयः पक्षः। तत्रापि गुणाश्रया सङ्घटना, सङ्घटनाश्रया वा गुणाः। तत्रैक्यपक्षे सङ्घटनाश्रयगुणपक्षे च गुणानात्मभूतानाधेयभूतान् वाऽऽश्रित्य सङ्घटना रसादीन् व्यनक्ति।

यदा तु गुणसङ्घटनयोरन्तरम्, सङ्घटनाश्रयो वा गुण इति पक्षस्तदा गुणानाश्रित्य तिष्ठन्तीति गुणपरतन्त्रस्वभावा न तु गुणरूपैवेत्यर्थः। यदि गुणाः सङ्घटनाश्चेत्येकं तत्त्वं तदा गुणानामनियतविषयत्वप्रसङ्गः। गुणानां माधुर्यप्रसादप्रकर्षः

१. ध्वन्या० ३।५।

करुणविप्रलम्भशृङ्गारविषय एव। रौद्राद्‌भुतादिविषयमोजः, माधुर्यप्रसादौ रसभाव-तदाभासविषयावेव। एवं विषयनियमो व्यवस्थितः। सङ्घटनायास्तु स विघटते। शृङ्गारेऽपि दीर्घसमासा रचना प्राप्यते, यथा—

'अनवरतनयनजललवनिपतनपरिमुषितपत्रलेखान्तम्।
करतलनिषण्णमबले वदनमिदं कं न तापयति'[1]॥

एवं रौद्रवीरादावप्यसमासा सङ्घटना दृश्यते—

'यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम्'। इति।
(वेणीसंहारः)

तेन गुणसङ्घटनयोरैक्यमनुपपन्नम्। न वा सङ्घटनाश्रया गुणाः। दण्डि-उद्‌भट-रुद्रटप्रभृतिभिर्गुणानां सङ्घटनाश्रयत्वमुक्तमेव।

यदि तु शब्दाश्रया गुणास्तत् सङ्घटनास्वरूपत्वं तदाश्रयत्वं वा प्राप्तमेव। न ह्यसङ्घटिताः शब्दा अर्थविशेषं प्रतिपाद्य रसाद्याश्रितानां गुणानामाश्रया भवन्ति, अवाचकत्वात्। नैवम्, वर्णपदव्यङ्ग्यत्वस्य रसादीनां प्रति प्रतिपादितत्वात्। अभ्यु-पगते वा वाक्यव्यङ्ग्यत्वे रसादीनां न नियता काचित् सङ्घटना तेषामाश्रयत्वं प्रति-पद्यते। अतोऽनियतसङ्घटना एव शब्दा गुणानां व्यङ्ग्यविशेषानुगता आश्रयाः। एवमनियतसङ्घटनशब्दाश्रयत्वे गुणानां न काचित् क्षतिः। एवमन्ये गुणाः, अन्या च सङ्घटना (रीतिः)।

गुणव्यतिरिक्तत्वे गुणरूपत्वे च सङ्घटनाया नियमहेतुर्वक्तृवाच्ययोरौ-चित्यमेव।

आनन्दवर्धनरीत्या काव्यरीतयोऽस्पष्टाः। "अशक्नुवद्भिर्व्याकर्त्तुं रीतयः सम्प्रवर्तिताः" इत्युक्तत्वात्। तथा च ध्वनितत्त्वोद्‌घाटनात्प्राग् रीतिसिद्धान्तः प्रचलितः। ध्वनितत्त्वं मनाग् अस्पृष्ट्वैव तै रीतिरात्मा काव्यस्येत्युक्तम्।

## ७. मम्मटमतम्

रसध्वनिवादिप्रमुखाचार्यः श्रीमम्मटभट्टैर्वामनप्रोक्तवृत्तीनामुपनागरिकादीनां ग्रहणं कृतम्। तेन वृत्तीनां सम्बन्धो गुणैः स्थापितः। तास्तिस्रः —

१. उपनागरिका—माधुर्याभिव्यञ्जकवर्णमयी सा।

२. परुषा—ओजःप्रकाशकैर्वर्णैः परुषा।

३. कोमला—उपर्युक्तवर्णव्यतिरिक्तवर्णवती।

---

१. ध्वन्या० ३, पृ० १६७।

तदुक्तं काव्यप्रकाशे—

'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते ।
ओजःप्रकाशकैस्तैस्तु परुषा कोमलापरैः ॥
केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः[१]' ॥

एतास्तिस्रो वृत्तयो वामनादीनां मते वैदर्भी-गौडी-पाञ्चाल्याख्या रीतयो मताः। एवं मम्मटाचार्यो वृत्तीनां महत्त्वं स्वीकरोति ; परन्तु रीतीनां चर्चा मतान्तररूपेण कृता। वामनस्य रीतिगुणकल्पनाया वैज्ञानिकः परिष्कारः काव्यप्रकाशे कृतः ।

## ८. विश्वनाथमतम्

ध्वनिसम्प्रदाये साहित्यदर्पणकारेण विश्वनाथेन रीतिसिद्धान्तस्य गम्भीरा विवेचना कृताऽस्ति । तदुक्तम्—

'वाक्यं रसात्मकं काव्यम्, रीतयोऽवयवसंस्थानविशेषवत्[२]' इति ।

वामनस्य 'रीतिरात्मा काव्यस्य' इति मतं खण्डयित्वाऽनेन काव्यस्य रसात्मकत्वमभ्युपगम्य रीतेरवयवाविशेषत्वोक्तिर्विश्वनाथस्य ध्वनिसिद्धान्ताभ्युपगममूलैवास्ति । रीतिलक्षणप्रसङ्गेन साहित्यदर्पणे प्रोक्तम्—

'पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् ।
उपकर्त्री रसादीनाम्[३]......................' ॥

रीतिसंख्याविषयकं वामनीयं मतमननुरुद्धय यथारुद्रटं चतस्रस्ता इत्युक्तम् । रीतिभेदकतत्त्वेषु वर्ण-पद-समासयोजनानामुल्लेखः कृतः । तदुक्तम्—

'माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ।
अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरुच्यते ॥
ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥
समासबहुला गौडी.... .... .... .... ।
लाटी तु रीति .... ... .... .... ........'[४] ॥ इत्यादि ।

विश्वनाथमतानुसारं वृत्तेः स्वतन्त्रा सत्ता नास्ति । रीतेरङ्गरूपैव सा। वामनोक्तानां गुणानां गुणत्रयेऽन्तर्भावो मम्मटादिवदनेनाप्युक्तः । एतद्रीत्या माधुर्यगुणो वैदर्भीरीतेः, ओजोगुणो गौडीरीतेः, प्रसादश्च सर्वगुणसाधारणः, सर्वरचनासाधारणश्च ।

---

१. का० प्र०, अष्टमोल्लासः ;
२. सा० द०, १ परि० ।
३. तत्रैव—९।१;
४. तत्रैव—९ परि० ।

रीतितत्त्वस्यैवंविधालोचनया मुखरीभवति यत् संस्कृतकाव्यशास्त्रिभो रीतेर्वस्तुनिष्ठ एव पक्षो विमृष्टः। रोतेरात्मनिष्ठस्य पक्षस्य वैज्ञानिकं विश्लेषणं नैव सञ्जातम्। वर्णानां पदानां योजनया, समासानां प्रयोगैः, अर्थयोजनया रीति-विश्लेषणेन गम्भीरा विचारसामग्री विकसिता। अर्थयोजनायामर्थालङ्कार-वक्रोक्ति-रसभावाभिधाव्यापार-रूपकयोजनौचित्यग्रहणैर्बहुभिराचार्यैस्तेषां व्यापकं विश्लेषणं कृतम्।

नाट्यशास्त्रोक्तानां दशानां वामनेन तन्नामकानामेव द्विगुणीकृतानां गुणानां ध्वनिवादिभिर्मम्महोक्तेषु माधुर्यौजःप्रसादेष्वन्तर्भावः क्रियते।

श्रीमम्मटाचार्यरीत्या 'बहूनां पदानामेकपदवद्भासनात्मा यः श्लेषः, यश्चा-रोहावरोहक्रमरूपः समाधिः, या च विकटत्वलक्षणा उदारता, यश्चौजोमिश्रित-शैथिल्यात्मा प्रसादः, तेषामोजस्यन्तर्भावः। पृथक्पदत्वं माधुर्यं भङ्ग्या साक्षादुपात्तम्। प्रसादेनार्थव्यक्तिर्गृहीता। मार्गाभेदरूपा समता क्वचिद्दोषः। कष्टत्वग्राम्यत्वयोर्दुष्ट-त्वाभिधानात्, तन्निराकरणेनापारुष्यं सौकुमार्यम्, औज्ज्वल्यरूपा कान्तिः स्वीकृता। एवं न दशशब्दगुणाः।

अर्थगतमोजः प्रौढिः। तद्वैचित्र्यमात्रं न गुणः, तदभावेऽपि काव्यव्यवहार-प्रवृत्तेः। अपुष्टार्थत्वानवीकृतत्वाधिकपदत्वामङ्गलरूपाश्लीलग्राम्याणां निराकरणेन च साभिप्रायत्वरूपमोजः, अर्थवैमल्यात्मा प्रसादः, उक्तिवैचित्र्यरूपं माधुर्यम्, अपारुष्यम्, सौकुमार्यम्, अग्राम्यत्वरूपा उदारता च स्वीकृतानि। अभिधास्यमानस्वभावोक्त्य-लङ्कारेण रसध्वनिगुणीभूतव्यङ्ग्याभ्यां च वस्तुस्वभावस्फुटत्वरूपा कान्तिश्च स्वीकृता। क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा श्लेषोऽपि वैचित्र्यमात्रम्। अवैषम्यस्वरूपा समता दोषाभावमात्रं न गुणः। अर्थस्यायोनेरन्यच्छायायोनेर्वा यदि न भवति दर्शनं तत्कथं काव्यमित्यर्थदृष्टिरूपः समाधिर्न गुणः। तेन नार्थगुणा दश। एवं माधुर्यौजःप्रसादास्त्रय एव गुणाः।

## रीतेः काव्यात्मत्वम्

रीतेरात्मनिष्ठपक्षनिरूपणे दण्डिमतमतिशेते। तद्रीत्या प्रत्येकस्य कवेः स्वतन्त्रा अभिव्यक्तिरीतिर्भवति। तेषां सूक्ष्मभेदनिरूपणमशक्यप्रायम्। रीतिसङ्कल्पनायां कविस्वभावस्य महत्त्वाभ्युपगमेन तन्माध्यमेन च रीतेरात्मनिष्ठस्य पक्षस्य प्रबलतमा

स्थापना श्रीकुन्तकाचार्येण कृता। तद्रीत्या काव्यरीतीनां विश्लेषणं वर्गीकरणं वा पदयोजनादिबाह्यतत्त्वावलम्बेन न, अपि तु कविस्वभावमूलकमेव भवितुमर्हति। पदादियोजनादौ कविस्वभाव एव प्रवर्तकः। अत एव दण्डिवत् कुन्तकोऽपि कवि-स्वभावानन्त्यमूलकमेव काव्यरीतीनाम् ( मार्गाणाम् ) आनन्त्यं स्वीचकार। पुनस्तासां मध्ये सूक्ष्मभेदस्थितिं स्वीकरोतीति मनोवैज्ञानिकदृष्ट्या रीतीनामानन्त्यं परमं वैज्ञानिकं सिद्ध्यति। एवं कुन्तकीयरीतिविश्लेषणेन तस्या आत्मनिष्ठपक्षः स्पष्टायते।

गुणानां रीतिभेदकत्वाभ्युपगमेऽपि कविस्वभावस्यैव प्रामुख्यं वक्तव्यम्। उद्भटाचार्येणालङ्काराणां शाब्दत्वमार्थत्वञ्च निरूप्य रीतीनामपि गुणतत्त्वरूपेण शब्दार्थरूपेण सम्बन्धः स्वीकृतः। अभिनवगुप्तेन उद्भटमतं 'गुणाः सङ्घटनाया ( रीतेः ) धर्माः' इत्यनूदितम्। गुणानामलङ्काराणां च भेदो रसेन समवायवृत्त्या, शब्दार्थयोः संयोगवृत्त्या च स्थापितः। आनन्दवर्धन-मम्मट-विश्वनाथाद्यैर्गुणानां रसधर्मत्वमभ्युपगम्य पक्षस्यास्य पुष्टिः कृता। एवं गुणानां रसधर्मत्वं स्थापयित्वा अलङ्काराणां शब्दार्थसौन्दर्याधायकत्वप्रतिपादनेन प्रकारान्तरेण रीतेरात्मनिष्ठस्य पक्षस्य दिगुन्मीलिता।

उद्भटाचार्येण गुणानां रीतिधर्मता स्थापिता। रीतिश्च कविस्वभावानन्त्यो-रनन्ततामासादयति। 'रीतिरात्मा काव्यस्य' इति मतम् उद्भटाचार्येण कविप्रकृति-कानन्त्यस्वीकृत्या कुन्तकाचार्यमतेन सामञ्जस्यमासादयति, रीतेर्गुणधर्मत्वेन गुणानाञ्च रसधर्मत्वात्। शब्दार्थयोर्व्यङ्ग्यव्यञ्जकसम्बन्धवादिनयेऽपि 'मधुरा रचना', 'रुचिरा रीतिः', 'शैलीयं सरसा' इत्यादिव्यवहारा भवन्त्येव। पाणिनिसूत्र-व्याख्याने 'एषा ह्याचार्यस्य शैली परिलक्ष्यते' इति महाभाष्यकाराः कथयन्ति। तेन शैलीपदमपि प्राचीनमेव। कविसहृदयभेदेन भिन्ना रीतयः परं वैशिष्ट्यमाव-हन्त्येव।

साम्प्रतिकसंस्कृतेतरभाषीयकाव्यालोचनजगति दृश्यते यद् आधुनिककवयो रीतीनां पार्थक्येनैव विश्लेषणं कुर्वन्ति। तेन कुन्तकादिप्रतिपादितं कविस्वभावानन्त्य-मेव दृढीभवति। कविस्वभाव एव काव्यरीतिमपि भेदयति। अयं भेदः क्वचिल्लक्ष्यते क्वचिन्न लक्ष्यते। गुणानां सङ्घटनाधर्मता पूर्वपक्षे ध्वनिकृताऽपि सङ्केतिता। गुणाभि-

व्यञ्जकवर्णधर्मता रीतीनामुच्यते। रीतेर्वर्णविन्यासनिष्ठत्वेऽपि रसाभिव्यञ्जकत्वं न दुष्यति। शब्दस्यापि रसाभिव्यञ्जकत्वाभिधानाद् ध्वनिदर्शनमप्यविरुद्धमेव। रसेन गुणानां समवायवृत्तित्वमतेऽपि रीतेरपि गुणसमवायितया रसधर्मत्वाभ्युपगमेन काव्यात्मत्वं सिद्धयति। रीतेर्वर्णधर्मत्वनयेऽपि गुणाभिव्यञ्जकत्वाद् गुणस्य च रस-धर्मत्वात्तस्य च रीतिजीवातुभावत्वमव्याहतमेव। काव्यगुणा रीतिनिरपेक्षतया रीतिसापेक्षतया च विश्वनाथाद्यैरपि व्याख्याताः; परन्तु गुणात्मिकाया रीतेरपि रसाभिव्यञ्जकत्वे रसधर्मत्वं स्वीकरणीयमेव। रीतेरात्मनिष्ठपक्षाङ्गीकारे शारदा-तनय( ११७५–१२५० )मतमवश्यमुद्धरणीयतामर्हति—

'त एवाक्षरविन्यासास्ता एव पदपङ्क्तयः।
पुंसि पुंसि विशेषेण क्वापि क्वापि सरस्वती ॥ इति।

अर्थात् स्वनिष्ठविशेषतयैव कवीनां वाचो नवनवायमाना भवन्ति। वाग्वि-कल्पानामानन्त्येन रीतेरनन्तत्वात् सर्वात्मकत्वेन रसात्मकत्वमपि नैव दुष्यतीति 'रीतिरात्मा काव्यस्य' इति रीतितत्त्वमीमांसासंक्षेपः।

# रत्नावल्यामलङ्कारसौन्दर्यं तत्समीक्षा च

डॉ० लज्जापन्त
द्वारा—श्रीमहेशभट्टः
शीतलामन्दिरम्, हनुमानगढ़ः
नैनीताल (उ० प्र०)

❀❀❀

**अलङ्कार-पदार्थस्तत्स्वरूपं च —**

"काव्यं ग्राह्यमलङ्कारात्", "सौन्दर्यमलङ्कारः", "स दोषगुणालङ्कार-हानादानाभ्याम्"[1] इति सूत्रयन् वामनाचार्यः काव्यस्योपादेयतामलङ्कारादेवाङ्गीकरोति। अलङ्कारपदार्थश्च तन्मते सौन्दर्यम्। "अलङ्कृतिरलङ्कारः" इति भावे घञ् विधानात्। परं तृतीये सूत्रे—"अलङ्क्रियतेऽनेनेति करणे घञि कृते निष्पन्नोऽलङ्कारशब्दोऽनुप्रासादीन् शब्दालङ्कारानुपमादींश्चार्थालङ्कारानाह'।

प्राचीनाचार्या भामह-दण्डिप्रभृतयोऽलङ्कारशब्देन काव्यस्य शोभाधायकान् सर्वानपि धर्मान् गृह्णन्ति स्म। अतस्ते रसानपि रसवदाद्यलङ्काररूपेणैव निरूपितवन्तः। भट्टोद्भटश्च गुणाऽलङ्कारयोः काव्ये भेदोपपादनं गड्डलिकाप्रवाह इति व्याजहार[2]।

परं वामनः सर्वप्रथमं गुणालङ्कारयोर्भेदं निरूपितवान्। तथा हि—"काव्यशोभायाः कर्त्तारो धर्मा गुणाः", "तदतिशयहेतवस्त्वलङ्काराः"[3] इति सूत्राभ्यां गुणाऽलङ्कारयोः स्वरूपं पृथक् पृथक् प्रतिपाद्य "पूर्वे नित्याः"[4] इति सूत्रेण गुणानां नित्यत्वकथनेनालङ्काराणामनित्यधर्मत्वं सूचितवान्। स रसमपि "दीप्तरसत्वं कान्तिः"[5] इति व्याहृत्यालङ्कारात् पृथक् कृतवान्। एतावतेदमपि सिद्धम्—काव्यस्य शरीरभूतयोः शब्दार्थयोर्धर्मा अलङ्कारा बाह्याः सन्ति। काव्ये ये शोभां जनयन्ति ते धर्मा गुणा आन्तराश्च सन्ति। एतन्मते दण्डिनोऽलङ्कारलक्षणम्—"काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते[6]" इति वस्तुतो गुणलक्षणमेवास्ति।

१. काव्यालङ्कारसूत्रवृत्तिः —१।१।१-३;
२. काव्यप्रकाशेऽष्टमोल्लासे उद्धृतम्।
३. का० लं० सू० वृ० ३।१।१-२;
४. तत्रैव तृतीयं सूत्रम्।
५. तत्रैव—३।२।१५;
६. काव्यादर्शः—२।१।

अलङ्काराश्च गुणजनिताः शोभां बर्धयन्ति। अत्र भामहस्यापि तात्पर्यं लक्ष्यते। तथा हि काव्येऽलङ्काराणां महत्त्वं प्रतिपादयता तेनोक्तम्—

"न कान्तमपि निर्भूषं विभाति वनिताननम्"[1]। इति।

अस्यायमभिप्रायो यत् कान्तमपि वनिताननं निर्भूषं न विभाति। एतावता ज्ञायते यद् मुखे कान्तता वर्तते परं भूषणं विना सा न संवर्धत इति सिद्धमलङ्काराणां शोभावर्धकत्वं न तु जनकत्वमिति। आनन्दवर्धनाचार्यस्तु गुणाऽलङ्कारयोराश्रय-भेदमपि प्राह। तथा हि—

"तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।
अङ्गाश्रितास्त्वलङ्कारा मन्तव्याः कटकादिवत्"[2]॥ इति।

अर्थात् काव्यात्मभूतस्य रसस्य धर्मा गुणा रसाश्रिताः सन्ति। अलङ्काराश्च शब्दार्थाश्रिताः सन्ति। मम्मटेनापि गुणाऽलङ्कारयोर्भेदः स्फुटमुपपादितः—

"ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।
उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥
उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।
हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः"[3] ॥ इति।

इत्थम्—"रसवृत्तित्वे सति नियमेन रसोत्कर्षकत्वं गुणत्वम्। शब्दार्थवृत्तित्वे सति परम्परयाऽनियमेन रसोत्कर्षकत्वमलङ्कारत्वम्" ॥ इति सिद्धं द्वयोर्भेदो भिन्नं च स्वरूपम्।

काव्येऽलङ्काराणां महत्त्वम्—

काव्येऽलङ्काराणां निरतिशयं महत्त्वं वर्तते। यतो हि स एव शब्दः स एवार्थो लोके प्रयुक्तश्चमत्कारं न जनयति। काव्ये प्रयुक्तः सहृदयहृदयं चमत्कृत्याकर्षति, तत्र हेतुर्गुणाऽलङ्कारवैशिष्ट्यमेव। अतोऽग्निपुराणकारः प्राह—

"अर्थालङ्काररहिता विधवेव सरस्वती"[4]। इति।

यद्यपि मम्मटः "अनलङ्कृती पुनः क्वापि" इति काव्यलक्षणे निवेश्य क्वचित् स्फुटालङ्कारविरहेऽपि काव्यत्वं स्वीकरोति, तथाप्यस्फुटालङ्कारमपेक्षत एव। समालोचितवांश्च तं जयदेवः —

"अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलङ्कृती"[5] ॥ इति।

---

१. काव्यालङ्कारः—१।१३; २. ध्वन्यालोकः—२।६; ३. काव्यप्रकाशः—८।६६-६७।
४. अग्निपुराणम्—काव्यनिरूपणे; ५. चन्द्रालोकः—१।८।

कुन्तकश्च—

"सालङ्कारस्य काव्यता" इति निरूपयन् प्राह—न हि काव्येनालङ्कारयोगः क्रियते। अपि तु सालङ्कारस्य काव्यताऽस्तीति[1]।

प्रायः सर्वैरप्याचार्यैः काव्येऽलङ्काराणां विशिष्टं स्थानं निर्धारितम्। अपि च रससमाहितचेतसां प्रतिभाजुषां कवीनां वाक्ष्वलङ्कारा अहमहमिकया परापतन्ति। प्रतिपादितं चैतद् ध्वनिकृता[2]।

अत्रायमभिसन्धिः—काव्ये द्वयं चमत्कारजनकं रसोऽलङ्कारश्च। यत्र रसस्तत्र रसेनैव चमत्कारजननात् स्फुटालङ्कारापेक्षा नास्ति। परं यत्र रसो नास्ति (अर्थाद् यत्र रसभावादिविवक्षाशून्यः कविः काव्यं निबध्नाति) तत्र यद्यलङ्कारोऽपि न भवेत्तदा किंनिमित्तश्चमत्कारः स्यात्। अतस्तत्रालङ्कारापेक्षा वर्तत एव। अत एव सर्वैरप्याचार्यैः स्व-स्वप्रबन्धेष्वलङ्कारा महता संरम्भेण निरूपिताः सन्ति।

भामहोऽपि काव्येऽलङ्काराणां महत्त्वं प्रतिपादयन्नाह—

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः ।
न कान्तमपि निर्भूषं विभाति वनिताननम् ॥
रूपकादिमलङ्कारं बाह्यमाचक्षते परे ।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम् ॥
तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः"[3] ॥ इति ।

पण्डितराजजगन्नाथोऽपि ब्रूते—"काव्यात्मनो व्यङ्ग्यस्य रमणीयताप्रयोजका अलङ्काराः"[4] इति।

## अलङ्काराणां बाह्यत्वनिराकरणम्

इत्थं दृश्ये श्रव्ये च काव्येऽलङ्काराणां वर्तते महत्त्वपूर्णं स्थानम्। यत्तु लौकिकाऽलङ्कारसाम्यात् केचनालङ्कारान् बाह्यान् मत्वोपेक्षन्ते, त एवं न जानन्ति यत् लौकिका अलङ्काराः संयोगसम्बन्धेन शरीरमाश्रयन्ते, ते शरीरात्पृथग्भूता अन्यत्राप्युपलभन्ते। परं काव्यालङ्कारा अयुतसिद्धा भवन्ति, ते पृथक्कर्तुं न पार्यन्ते। अतो न बाह्यालङ्कारसदृशः काव्यालङ्कारोऽपि तु काव्यस्य धर्मरूपः।

---

१. वक्रोक्तिजीवितम् - १।६;  २. ध्वन्यालोकः—२।१६ कारिकावृत्तौ।
३. काव्यालङ्कारः—१।१३-१५;  ४. रसगङ्गाधरे द्वितीयाननेऽलङ्कारनिरूपणप्रस्तावे।

अपि च—काव्यात्मा रसो वाच्यविशेषैरेवाक्षेप्तव्यो भवति। वाच्यविशेषाश्चालङ्काराः सन्ति[1]। तस्मादर्थाऽलङ्काराणां बहिरङ्गत्वं नास्ति।

परं रसाक्षिप्ततया यस्यालङ्कारस्य बन्धः शक्यो भवेत्तस्यैव निबन्धो युक्तः, यस्य निबन्धे पृथग्यत्नो न भवेत्। अतः काचन समीक्षा प्रस्तूयते—

**अलङ्कारविन्याससमीक्षा—**

अलङ्काराः शोभावर्धकाः सन्ति। परं तेषां विनिवेशो रसानुरूपेणैव कर्तव्यो न तु प्राधान्येन। प्राधान्येन निबद्धोऽलङ्कारो रसादीनां प्रतीतिं स्थगयति।

आनन्दवर्धनाचार्योऽलङ्कारविनिवेशने समीक्षां निर्दिष्टवान्—

"विवक्षा तत्परत्वेन नाङ्गित्वेन कदाचन।
काले च ग्रहणत्यागौ नातिनिर्वहणैषिता॥
निर्व्यूढावपि चाङ्गत्वे यत्नेन प्रत्यवेक्षणम्।
रूपकादिरलङ्कारवर्गस्याङ्गत्वसाधनम्"[2] ॥ इति।

रससिद्धस्य प्रतिभानवतः कवेर्वाणो स्वयमलङ्कृता स्फुरति। श्रीहर्षोऽप्येतादृश एव कविर्वर्तते। अत एतस्य कृतौ रत्नावलीनाटिकायामलङ्काराणां स्वाभाविकी स्थितिर्वर्तते। तत्र कतिपयपद्येषु समुचितोऽलङ्काराणां विन्यासो वर्ण्यवस्तुनः शोभां संवर्धयन् सहृदयाननुरञ्जयति। तथा हि मङ्गलाचरणस्य प्रथमे पद्ये—

"पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने।
ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन् कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः"[3] ॥

अत्र शिवस्याराधनकर्मणि गिरिजयोन्नते शिवशिरसि समर्पयितुमीहितः कुसुमाञ्जलिः क्षिप्तो मध्ये विकीर्णो वः पातु। अत्र कुसुमक्षेपे लज्जा हेतुः विकीर्णे च कम्प इत्यनेकपदार्थहेतुकं काव्यलिङ्गमलङ्कारः। तल्लक्षणं च—"काव्यलिङ्गं हेतोर्वाक्यपदार्थता"[4], इति।

---

१. ध्वन्यालोकः—२।१६ कारिकावृत्तौ; २. तदेव—२।१८-१९।
३. रत्नावली—१।१; ४. काव्यप्रकाशः—१०।११४।

काव्याभिमतं लिङ्गं काव्यलिङ्गम्। अत्र लिङ्गं हेतुः। यत्र कविः स्वप्रतिपाद्यार्थस्य सिद्धये वाक्यार्थरूपस्यैकपदार्थरूपस्यानेकपदार्थरूपस्य वा हेतोरभिधानं करोति तत् काव्यलिङ्गम्। तच्च हेतोस्त्रिरूपत्वात् त्रिविधम्।

"प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः।
न मे दोषोऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन् वक्तुं क्षममिति न वेद्मि प्रियतमे"[1] ॥ इति।

अत्र प्रकरणे किं वक्तुमुचितमिति न जाने। तत्र हेतुरुपात्तः—असति कोपे प्रसीदेति वक्तुं न घटते। एवं पुनर्न करिष्यामीति कथने दोषस्य स्वीकृतिः स्यात्। मम दोषो नास्तीति कथनमपि त्वं मिथ्या ज्ञास्यसीति। इत्थमत्रोचितकथनस्याज्ञाने वाक्यार्थरूपो हेतुरुपात्तः। अतोऽत्र वाक्यार्थहेतुकं काव्यलिङ्गमस्ति। तद्यथा—

"औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः"[2] ॥

अत्र प्रथमसमागमे—औत्सुक्येन त्वरां कुर्वाणा, सहजया लज्जया च व्यावर्तमानाऽऽत्तसाध्वसरसा च गौरी हसता हरेणाश्लिष्टा। अत्र नववध्वाः क्रियाया वर्णनात् स्वभावोक्तिरलङ्कारः। तल्लक्षणं च—

"स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम्"[3]। इति।

अत्र स्वभावस्य=प्रकृतिसिद्धार्थस्य वर्णनं भवति।

"सम्प्राप्तं मकरध्वजेन मथनं त्वत्तो मदर्थे पुरा
तद्युक्तं बहुमार्गगां मम पुरो निर्लज्ज! वोढुं तव।
तामेवानुनय स्वभावकुटिलां हे कृष्ण कण्ठग्रहं
मुञ्चेत्याह रुषा यमद्रितनया लक्ष्मीश्च पायात् स वः"[4] ॥

अत्र गिरिजा शिवं प्रति लक्ष्मीश्च विष्णुं प्रत्याह। तत्र गिरिजाया उक्तौ, मकरध्वजः=कामः, बहुमार्गगा=त्रिपथगा गङ्गा। लक्ष्म्या उक्तौ, मकरध्वजः=समुद्रः, बहुमार्गगा=बहुभिर्मार्गैः सुकुमार-विचित्र-मध्यमाभिधैर्मार्गैर्वैदर्भी-गौडी-पाञ्चाल्यादिभिर्वा रीतिभिर्गमनकर्त्री भारती (सरस्वती) गृहीता। अत्र

१. रत्नावली—२।२०; २. तदेव—१।३।
३. काव्यप्रकाश—१०।११०; ४. रत्नावली—१।४।

श्लेषालङ्कार उभयार्थघटनां तनुते । पर्यायपरिवृत्त्यसहत्वात् शब्दाऽलङ्कारोऽयं श्लेषः । तल्लक्षणम्--

"अर्थभेदेन भिन्ना यद् युगपद्भाषणस्पृशः ।
श्लिष्यन्ति वर्णाः श्लेषोऽसावक्षरादिभिरष्टधा"[1] ॥ इति ।

यत्रार्थभेदेन भिन्ना अपि शब्दा एकेन प्रयत्नेन युगपदुच्चार्यतयैकरूपतया भासन्ते तत्र श्लेषः । स च द्विविधः—सभङ्गोऽभङ्गश्च । तत्र सभङ्गोऽष्टविधः—वर्ण-पद-लिङ्ग-भाषा-प्रकृति-विभक्ति-प्रत्यय-वचनानां भेदात् । इत्थं नवविधः । तद्यथा—

"जितमुडुपतिना नमः सुरेभ्यो द्विजवृषभा निरुपद्रवा भवन्तु ।
भवतु च पृथिवी समृद्धशस्या प्रपततु चन्द्रवपुर्नरेन्द्रचन्द्रः"[2] ॥

पद्येऽस्मिन् "चन्द्रवपुः" इत्यत्र चन्द्र इव वपुर्यस्येति विग्रहे समासगा श्रौती चोपमा । सा च वाचकलोपात् लुप्तोपमा । तल्लक्षणं च--

"साधर्म्यमुपमाभेदे"[3] इति । उपमानोपमेययोर्भेदे सति साधर्म्यमुपमा । सा च श्रौती-आर्थीभेदाद् द्विविधा । पुनस्त्रिविधा—वाक्यगा, समासगा, तद्धितगा च । इत्थमुपमानोपमेयवाचकशब्दसाधारणधर्माणां चतुर्णां प्रयोगे पूर्णोपमा पूर्वोक्तभेदात् षड्विधा भवति । यथेवादिशब्दानामिवार्थवतेश्च प्रयोगे श्रौती भवति । तुल्य-सदृश-समोपमादीनां तुल्यार्थकवतेश्च प्रयोगे आर्थी भवति । उपमानोपमेयादिचतुर्णा-मुपमाङ्गानां मध्ये कस्यचिदेकस्य द्वयोस्त्रयाणां वाऽनुपादाने लुप्तोपमा भवति । सा चैकोनविंशतिविधा[4] भवति ।

"श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः"[5] ॥

पद्योक्तमेकैकमपि वस्तु वाञ्छितफलप्राप्तये पर्याप्तमत्र तु सर्वे वाञ्छितार्थदा गुणाः समुदिताः सन्तीति साधकगुणानां समुच्चयात् समुच्चयाऽलङ्कारः । तल्लक्षणम् -

"तत्सिद्धिहेतावेकस्मिन् यत्रान्यत्तत्करं भवेत् ।
समुच्चयोऽसौ···· .... .... .... .... .... .... ...."[6] ॥ इति ।

---

१. काव्यप्रकाशः—८।८४;   २. रत्नावली—१।५।६;   ३. काव्यप्रकाशः—१०।८७ ।
४. तदेव, दशमोल्लासः;   ५. रत्नावली—१।६;   ६. का० प्र० १०।११६ ।

यत्र कार्यस्यैकं साधकं पर्याप्तं तत्र यदि साधकान्तरमपि भवेत्, तत्र समुच्चयालङ्कारो भवति। स च त्रिविध —सद्योगे, असद्योगे, सदसद्योगे च सम्भवात्। पूर्वपद्ये सद्यागे समुच्चयः।

"द्वोपादन्यस्मादपि मध्यादपि जलनिधेर्दिशाऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः"[1]॥

'अत्रानुकूलो विधिरन्यस्मादपि द्वीपादानीयाभिमतं घटयति' इति सामान्येन वर्णितोऽर्थः सिंहलनरेशकन्याया रत्नावल्याः प्राप्तिरूपं विशेषमर्थं समर्थयतोत्यत्राप्रस्तुतप्रशंसाऽलङ्कारः। तल्लक्षणं च —

"सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।
यत्तु सोऽर्थान्तरन्यासः साधर्म्यणेतरेण वा"[2]॥ इति।

साधर्म्येण वैधर्म्येण वा यत्र सामान्यं विशेषेण विशेषो वा सामान्येन समर्थ्यते, तत्रार्थान्तरन्यासो भवति। स चतुर्विधः।

"विश्रान्तविग्रहकथो रतिमान् जनस्य
चित्ते वसन् प्रियवसन्तक एव साक्षात्।
पर्युत्सुको निजमहोत्सवदर्शनाय
वत्सेश्वरः कुसुमचाप इवाभ्युपैति"[3]॥

अत्र "कुसुमचाप इव वत्सेश्वरः" इत्यत्रोपमा। 'विश्रान्तविग्रहकथः' इत्यत्र श्लेषः। राजपक्षे विग्रहो युद्धम्। कामपक्षे च शरीरमिति श्लेषानुप्राणित उपमालङ्कारः। अनयोर्लक्षणं पूर्वं वर्णितम्।

"कीर्णैः पिष्टातकोघैः कृतदिवसमुखैः कुङ्कुमक्षोदगौरै-
र्हेमाऽलङ्कारभाभिर्भरनमितशिखैः शेखरैः कैङ्किरातैः।
एषा वेषाभिलक्ष्य स्वविभवविजिताशेषवित्तेशकोशा
कौशाम्बी शातकुम्भद्रवखचितजनेवैकपीता विभाति"॥

अत्र कोशाम्ब्या उत्कृष्टसम्पत्तिवर्णनादुदात्ताऽलङ्कारः। तथा "काञ्चनद्रवखचिता इव जना यत्र सा नगरी केवलपीता विभाति" इत्यत्रोत्प्रेक्षाऽलङ्कारः। कोशा कौशाम्बीत्यत्रानुप्रासश्चेति त्रयाणां संसृष्टिः। एतेषां लक्षणानि क्रमशो निर्दिश्यन्ते —

---

१. रत्नावली १।७।५; २. का० प्र० १०।१०९; ३. रत्ना० १.९।

"उदात्तं वस्तुनः सम्पत्[१]" इति ।

कस्यचिद् वस्तुनोऽसम्भाव्यमानायाः सम्पत्तेर्वर्णनमुदात्ताऽलङ्कारः ।

"सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्[२]" इति ।

उपमेयस्योपमानेन सह तादात्म्येन सम्भावनमुत्प्रेक्षा । सा द्विविधा—वाच्या प्रतीयमाना च । तत्र "मन्ये, शङ्के, ध्रुवं, प्रायः, नूनम्, इव, ऊहे, अवैमि" इत्यादि-शब्दानां प्रयोगे वाच्या । अप्रयोगे प्रतीयमाना । पुनः सा त्रिविधा—हेतु-फल-स्वरूपो-त्प्रेक्षाभेदात् । तत्र पुनः स्वरूपोत्प्रेक्षा जाति-गुण-क्रिया-द्रव्याणामभावस्य च सम्भा-वितत्वात् पञ्चविधा । एवं हेतुफलयोरपि जात्यादिरूपत्वेन सम्भावितत्वात् प्रत्येकं पञ्चविधम् । तथोत्प्रेक्षानिमित्तस्य धर्मस्योपादानानुपादानाभ्यामनेकविधेयमुत्प्रेक्षा कुवलयानन्दादौ वर्णिता ।

वर्णसाम्यमनुप्रासः छेकवृत्तिगतो द्विधा ।
सोऽनेकस्य सकृत्पूर्वं एकस्याप्यसकृत्परः[३] ॥

"कोशा कौशा" इत्यत्रानेकस्य वर्णस्य सकृदावृत्तेश्छेकानुप्रासः । "स्वविभव-विजिता" इत्यत्रैकस्य वकारस्यासकृदावृत्त्या वृत्त्यनुप्रासः ।

संसृष्टिः—सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः[४]" । इति ।

यत्रानेकालङ्काराणामेकत्र समावेशेऽपि तिलतण्डुलवद् भेदेन स्थितिस्तत्र संसृष्टिः ।

"अस्मिन् प्रकीर्णपटवासकृतान्धकारे दृष्टो मनाङ्मणिविभूषणरश्मिजालैः ।
पातालमुद्यतफणाकृतिशृङ्गकोऽयं मामद्य संस्मरयतीह भुजङ्गलोकः"[५] ॥

अत्र भुजङ्गशब्दस्य सर्पो विटश्चेत्यर्थद्वयकरणात् श्लेषः । तेनोत्थापितं सदृश-दर्शनात् पातालस्मरणं स्मरणालङ्कारः । तल्लक्षणम्—

"यथानुभवमर्थस्य दृष्टे तत्सदृशे स्मृतिः । स्मरणम्[६] ....."। इति ।

सदृशवस्तुदर्शनात् सदृशस्मरणे स्मरणाऽलङ्कारः ।

"अस्तः स्रग्दामशोभां त्यजति विरचितामाकुलः केशपाशः
क्षोबायां नूपुरौ च द्विगुणतरमिमौ क्रन्दतः पादलग्नौ ।
व्यस्तः कम्पानुबन्धादनवरतमुरो हन्ति हारोऽयमस्याः
क्रीडन्त्याः पीडयेव स्तनभरविनमन्मध्यभङ्गानपेक्षम्[७]" ॥

१. का० प्र० १०।११५; २. तदेव—१०।९२; ३. तदेव—९।७९ ।
४. तदेव—१०।१३९; ५. रत्ना० १।१३; ६. का० प्र० १०।१३२ ।
७. रत्ना०—१।१७ ।

अत्र नूपुरक्रन्दने, हारकृतोरस्ताडने, केशपाशकृतस्रग्दामशोभापरित्यागे च 'पीडयेव' इति हेतुरुत्प्रेक्षितः। अतो हेतूत्प्रेक्षा। लक्षणमस्य प्रागुक्तम्।

"अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन्।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्द्योतते[1]"॥

अत्र पादानित्यस्य "सरोरुहद्युतिमुषः" इति विशेषणमस्ति तन्न सङ्घटते। सरोरुहद्युतीनां मोषणं न सम्भवति, द्युतीनाममूर्त्तत्वात्। अतः पादकृतं सरोरुहद्युति-मोषणमसम्भवत् तत्सदृशशोभायां पर्यवस्यति। अतोऽत्र निदर्शनाऽलङ्कारः। इन्दोरि-वोदयनस्येत्यादावुपमाऽलङ्कारः। पादशब्दस्य चरण-किरणोभयार्थकत्वात् श्लेषः। तस्य चोपमाया उत्थापकत्वात् श्लेषानुप्राणितोपमा। अनयोरुपमानिदर्शनयोरत्र सङ्करः।

"अभवन् वस्तुसम्बन्ध उपमापरिकल्पकः[2]"। इति।

निदर्शनालक्षणम्—

यत्र वाक्यार्थयोः पदार्थयोर्वा सम्बन्धोऽसम्भवन् उपमायां पर्यवस्यति, तत्र निदर्शना। सा द्विविधा—वाक्यार्थनिदर्शना, पदार्थनिदर्शना च। एषाऽन्यविधाऽपि भवति।

विधायापूर्वपूर्णेन्दुमस्या मुखमभूद् ध्रुवम्।
धाता निजासनाम्भोजविनिमीलनदुःस्थितः[3]॥

अत्र नायिकामुखमपूर्वपूर्णेन्दुरित्यत्र रूपकम्, तादात्म्यारोपात्। ब्रह्मणः स्वासनकमलस्य निमीलनाद् दुःस्थितत्वोत्प्रेक्षणादुत्प्रेक्षा। वस्तुत आसनाम्भोजस्या-निमीलनेऽपि निमीलनस्य वर्णनादसम्बन्धे सम्बन्धरूपातिशयोक्तिः। "स्वापूर्वनिर्माण-कौशलप्रदर्शनार्थं विधिना कृतमस्या अपूर्वपूर्णेन्दुमुखनिर्माणं ब्रह्मासनाम्भोजं विनि-मील्य तं दुःस्थितमकार्षीत्" इति प्रतीतेर्विषयः। "कर्तुः क्रियाफलावाप्तिर्नैवानर्थश्च यद् भवेत्[4]" इति लक्षणम्।

रूपकम्—"तद्रूपकमभेदो य उपमानोपमेययोः[5]" इति।

---

१. रत्ना० १।२४; २. का० प्र० १०।९७; ३. रत्ना० ३।१०।
४. का० प्र० १०।१२६; ५. तदेव—१०।९३।

तत्त्रिविधम्—साङ्गं निरङ्गं परम्परितं च। तत्रापि साङ्गं द्विविधम्—समस्त-वस्तुविषयम्, एकदेशविवर्ति च। निरङ्गमपि द्विविधम्—शुद्धं मालारूपं च। परम्परित-मपि द्विविधम्—श्लिष्टशब्दनिबन्धनमश्लिष्टशब्दनिबन्धनम्। प्रत्येकं मालारूपं केवल-रूपं चेति चतुर्विधम्।

"दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां
स्निग्धेयमेष्यति तथापि न रुक्षभावम्।
त्यक्त्वा त्वरां व्रज पदस्खलितैरयं ते
खेदं करिष्यति गुरुर्नितरां नितम्बः"[1]॥

अत्र रुषा दृष्टिं क्षिपसि, तथापि रुक्षभावं नैतीति विरोधः। स्निग्धत्वादिति परिहारः। तल्लक्षणम्—

"विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः"[2]। इति।

वस्तुतो विरोधाभावेऽपि विरुद्धत्वेन कथनं विरोधः। विरोध इव प्रतीते-र्विरोधाभासः। स च दशविधः। पदार्थो जाति-गुण-क्रिया-द्रव्यभेदात् चतुर्विधः। तत्र जातिविरोधश्चतुर्विधः, जातेः जाति-गुण-क्रिया-द्रव्यैः सह विरोधात्। गुणविरोधस्त्रि-विधः, गुणस्य गुण-क्रिया-द्रव्यैः सह विरोधात्। क्रियाविरोधो द्विविधः, क्रियायाः क्रिया-द्रव्याभ्यां सह विरोधात्। द्रव्यविरोध एकविधः, द्रव्यस्य द्रव्येण सह विरोधात्। इत्थं सङ्कलनेन दशविधो विरोधः।

"श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः"[3]॥

अत्र पूर्वार्धे रूपकम्। "स्वेदच्छद्मामृतद्रवः" इत्यत्र प्रकृतं स्वेदं निषिध्या-प्रस्तुतामृतस्य स्थापनाद् अपह्नुतिरलङ्कारः।

"प्रकृतं यन्निषिध्यान्यत् स्थाप्यते सा त्वपह्नुतिः"[4]। इति।

"मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे।
कामेनैतत् कथं विद्धं समं सर्वैः शिलीमुखैः"[5]॥

लक्ष्यभेदे लक्ष्यस्य स्थिरता दृष्टिगोचरता च हेतुः। सा नास्ति मनसि तथापि कामेन विद्धमिति कारणाभावेऽपि कार्योत्पत्तिवर्णनाद् विभावना। तल्लक्षणम्—

"क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना"[6]। इति।

---

१. रत्ना० २।१७;    २. का० प्र० १०।११०;    ३. रत्ना० २।१८।
४. का० प्र० १०।९६;    ५. रत्ना० ३।२;    ६. का० प्र० १०।१०७।

"यातोऽस्मि पद्मनयने समयो ममैष
सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्योऽस्तमस्तकनिविष्टकरः करोति"[१] ॥

अत्र सूर्योऽस्तमस्तकनिविष्टकरः सरोरुहिण्याः प्रत्यायनामिव करोतीत्युत्प्रेक्षा । सूर्यकमलिन्योर्नायिक-नायिकाव्यवहारसमारोपात् ( विशेषणस्य श्लिष्टत्वात् ) समासोक्तिः । "पद्मनयने" इत्यत्र रूपकम् । एतेषामङ्गाङ्गिभावेन स्थितत्वात् सङ्करः ।

समासोक्तिलक्षणं च—

"परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः"[२] । इति ।

श्लिष्टविशेषणबलादप्रस्तुतस्यार्थस्योक्तिः समासोक्तिः ।

सङ्करः — "अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः"[३] । इति ।

स्व-स्वरूपेऽपर्यवसितानामलङ्काराणामङ्गाङ्गित्वेन नीरक्षीरन्यायात् स्थितिः सङ्करः । स चाङ्गाङ्गित्वेन सन्देहास्पदत्वेनैकवाचकानुप्रवेशेन च स्थित्या त्रिविधः ।

"अलमलमतिमात्रं साहसेनामुना ते
त्वरितमयि विमुञ्च त्वं लतापाशमेतत् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे
क्षणमिह मम कण्ठे बाहुपाशं निधेहि"[४] ॥

अत्र "जीवितं निरोद्धुं कण्ठे बाहुपाशं कुरु" इति प्रतिपादनात् त्वं मम जीवितेशोऽसि अतो जीवितरक्षणार्थं कण्ठे बाहुपाशं निधेहीति प्रतिपादनेन त्वं ममालिङ्गनं विधेहीति निवेदनात् पर्यायोक्ताऽलङ्कारः । तल्लक्षणम्—

"पर्यायोक्तं विना वाच्य-वाचकत्वेन यद्वचः"[५] । इति ।

"प्रणमत चरणाविन्द्रस्येन्द्रजालकपिनद्धनाम्नः ।
तथैव शम्बरस्य मायासुप्रतिष्ठितयशसः"[६] ॥

अत्रैका क्रिया 'प्रणमत' इत्येकत्र प्रयुक्तेन्द्रस्य शम्बरस्य च चरणावित्यनेनान्वेत्यतो दीपकालङ्कारः । तल्लक्षणम्—

१. रत्ना० ३।६ ; २. का० प्र० १०।९७; ३. तदेव—१०।१४० ।
४. रत्ना० ३।१७; ५ का० प्र० १०।११५; ६. रत्ना० ४।७ ।

"सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम्।
सैव क्रियासु बह्वीषु कारकस्येति दीपकम्"[1] ॥ इति।

परं द्वयोरत्र प्राकरणिकत्वात् तुल्ययोगितेति विमर्शः।

एतेषु पद्येषु निर्दिष्टा एवालङ्काराः सन्ति नान्य इति नास्माकमभिप्रायो दिग्दर्शनमात्रमेतत्। वाग्लवविदां प्रतिभावशादन्येऽपि स्फुरन्त्येव।

एतेषामलङ्काराणामन्येष्वपि पद्येषु प्रयोगो रसानुगुणतया सुतरां विदग्धान् प्रीणाति। वाग्विन्यासचतुरोऽयं कविर्यमेवालङ्कारं विन्यस्यति स एवार्थमलङ्कुर्वन् रसं पुष्णाति। सचेतसां हृदयमावर्जयति। समीक्षकाणां मनस्तोषयति।

इत्थमत्र काव्यलिङ्ग-स्वभावोक्ति-श्लेषोपमा-समुच्चयाप्रस्तुतप्रशंसोदात्तोत्प्रेक्षाऽनुप्रास-संसृष्टि-स्मरण-निदर्शना-रूपकातिशयोक्ति-विरोधाभासापह्नुति-समासोक्ति-सङ्कर-पर्यायोक्त-दीपक-तुल्ययोगितादीनामन्येषां च समुचितः काव्ये विन्यासो मणिकाञ्चनसंयोग इव नितरां काव्यसौन्दर्यं प्रकर्षयति।

**समीक्षा**—कश्चन टीकाकारो यत्र तत्रान्यथाप्यलङ्कारनिरूपणं करोति। तथा हि—प्रथमाङ्कस्य द्वादशतमे पद्येऽतिशयोक्ति निर्दिदेश; परं तत्रातिशयोक्तिलक्षणं कथमपि न सङ्घटते। वस्तुतस्तत्र कुट्टिमस्य सिन्दूरागारुणैश्चरणन्यासैः सिन्दूरीकरणात् तद्गुणाऽलङ्कारः। इत्थं षड्विंशतितमे पद्ये प्रतीपं निर्दिदेश। तच्चोपमानस्योपमेयत्वकल्पनायां भवति। तत्रेदं न घटते, अपि तूपमानापेक्षयोपमेयेऽतिरेकवर्णनाद् व्यतिरेकोऽस्ति। तथा तृतीयाङ्कस्याष्टमे पद्ये व्याजहारोन्मीलितम्, तथा त्रयोदशे प्रतीपं लिलेख, परं तयोर्लक्षणं तत्र न घटते तादूरूप्यरूपकं च घटते। इत्थं दशमे पद्ये दृष्टान्तं निर्दिदेश, तदपि न रोचते विदग्धेभ्य इत्यलमन्येषां दोषगवेषणया सहृदयैः स्वयं विवेचनीयमिति शिवम्।

●

---

1. का० प्र० १०।१०३।

लघु-ग्रन्थमाला

[ ५५ ]

आचार्यमहादेवपुण्यस्तम्भकरविरचितः

# नव्यमतीयपरामर्शकारणतावादः

सम्पादकः

डॉ० राजारामशुक्लः

प्राध्यापकः

न्याय-वैशेषिकदर्शनविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये

वाराणस्याम्



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वि० सं० २०५४

# नैवेद्यम्

अथेयं प्रथिमानमानीयते प्रथितयशसः पुण्यस्तम्भकरोपाह्वमहादेवकृतेः कृतिः — "नव्यमतीयपरामर्शकारणतावादः" इत्याख्या। व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वेन परामर्शस्यानुमितिहेतुत्वं तु सिद्धमेव। नास्ति तत्र विप्रतिपत्तिः। किन्तु तादृशपरामर्शघटकीभूतं कीदृशं व्याप्तिज्ञानमनुमितिहेतुः ? साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानं व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानं वेत्यत्र विवदन्ते विपश्चितः। ग्रन्थेऽस्मिन् श्रीमता महादेवपण्डितेन नैकविधविलक्षणयुक्तिभिर्व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानहेतुतामते गौरवमुद्भाव्य साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानस्यैवानुमितिहेतुत्वं समर्थितम्। अयमेव हि मुख्यः प्रतिपाद्यो विषयो ग्रन्थस्यास्य। न तु परामर्शनिष्ठामनुमितिकारणतामाश्रित्य कश्चन विचारोऽत्र प्रावर्तत।

यद्यपि मूलमातृकायां ग्रन्थस्यास्याभिधानम्—"अनुमितिपरामर्शकार्यकारणभावविचारः ( नव्यमतीयः )" इत्येवास्ति तथाप्युक्तयुक्त्या तथाविधस्य विषयस्याविद्यमानत्वेन सम्पादितेऽस्मिन् ग्रन्थे शीर्षकं परिवर्तितम्, अनुमितिं प्रति कीदृशव्याप्तिघटितस्य परामर्शस्य कारणतेत्येतावन्मात्रस्यात्र विवक्षितत्वात्।

"अनुमितिपरामर्शकार्यकारणभावविचारः" इति नाम्ना कश्चनान्यो ग्रन्थो महादेवपण्डितेनैव लिखितोऽस्माभिरेव सम्पादितश्च [ लघु-ग्रन्थमाला (५२) सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वि० सं० २०५१ ] पूर्वत एव विद्यते। तत्र च शीर्षकानुरूपं विषया अपि चर्चिताः। एतस्यैव ग्रन्थस्योत्तरांशोऽपि सम्भाव्यते प्रस्तुतो ग्रन्थः। मातृकालेखनावसरे ग्रन्थस्य यावानंशो लब्धः स पूर्वम् अनुमितिपरामर्शकार्यकारणभावविचार इति नाम्ना सङ्कलितः। ततः प्राप्तोऽवशिष्टांशो लेखकान्तरेण तेनैव नाम्ना सङ्कलितः। ततो गच्छता कालेन ग्रन्थस्यांशद्वयं ग्रन्थद्वयरूपेण परिणतमित्येषाऽपि सम्भावनाऽत्र वर्तते। यत उभयोर्मातृकयोर्लेखकौ भिन्नावेवेति तु निश्चितम्। तत्रापि पूर्वग्रन्थलेखको विद्वान् न्यायशास्त्रे कृतपरिश्रमश्चासीत इति तत्र तत्र तद्दत्ताभिष्टिप्पणीभिस्तदीयलेखनशैल्या चानायासमेवावगन्तुं शक्यते। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयसरस्वतीभवनस्थपाण्डुलिपिसङ्ग्रहतोऽस्माभिः प्राप्ता मातृकाऽपि प्रायशः शुद्धा स्पष्टाक्षरैरेव च लिखिताऽस्ति। एतद्विपरीतं तत एव समासादिता प्रस्तुतग्रन्थस्यैकैव मातृका ( पाण्डुलिपि—सं० ३२२२९ ) अत्यन्तमशुद्धाऽस्पष्टाक्षरैर्लिखितेति सम्पादनप्रसङ्गेऽप्यस्मानतितरामखेदयत्। लेखकोऽपि

नातिविद्वान् इति तत्कृताशुद्धिभिरवगन्तुं शक्यते। लेखने प्रायशस्तस्यानवधानतैव दृष्टिपथमायाति। यथा=क्वचित् 'परामर्शः' क्वचित् 'परामर्षः', क्वचित् 'ष्ट'स्थाने 'ष्ठ', 'ष्ठ' स्थाने 'ष्ट' इति, क्वचित् 'ज्ञ'='द्न' इत्येवमादि। तथा च ग्रन्थस्य तात्पर्यमजानता द्वितीयलेखकेन ग्रन्थस्यावशिष्टांशो ग्रन्थान्तररूपेणोपस्थापित इति।

यद्यपि ग्रन्थादौ ग्रन्थान्ते च कृतैः श्लोकैस्तयोर्ग्रन्थयोः स्वतन्त्रत्वं साधयितुं शक्यम्, यतो यदि प्रस्तुतो ग्रन्थः कस्यचिद् ग्रन्थविशेषस्यावशिष्टांशः स्यात् तर्ह्यत्र पृथक्तया मङ्गलाचरणादिकं पूर्वग्रन्थे सम्प्राप्तिसूचकश्लोकादिकञ्च कृतं न स्यात्, तथापि प्रकरणसमाप्तौ तादृशश्लोकानां प्रकरणान्तरारम्भे च मङ्गलादिश्लोकानामपि क्वचित् क्वचिद् दृष्टत्वेन नेयं युक्तिरत्यन्तं गरीयसीति।

किन्तु सम्भावनेयं नाधिकं बलवत्तरा। यतः 'अनुमितिपरामर्शकार्यकारणभाव-विचारः' इत्याख्ये ग्रन्थे प्रस्तुतग्रन्थस्य विपरीतं व्यापकसामानाधिकरण्यरूपव्याप्ति-ज्ञानस्यैवानुमितिहेतुत्वं समर्थितम्[1]। प्रस्तुतग्रन्थे साध्यसामानाधिकरण्यरूपव्याप्ति-ज्ञानकारणतासमर्थने या युक्तयः प्रस्तुतास्ताः प्रायशोऽत्राप्युद्भाविताः खण्डिताश्च। परस्परविरुद्धपक्षद्वयं सिद्धान्तरूपेण न ह्येकस्मिन्नेव ग्रन्थे केनापि प्रतिपाद्यते। नापि ता एव युक्तयः पौनःपुन्येन चर्च्यन्ते। अतो हेतोः प्रस्तुतग्रन्थस्यातिरिक्तग्रन्थत्वस्वी-कारपक्ष एव साधीयान्। यद्यपि साध्याभाववदवृत्तित्वरूपव्याप्तिः पूर्वपक्षव्याप्तित्वे-नोद्भाव्य केवलान्वयिनि वाच्यं ज्ञेयत्वादित्यादौ साध्याभावाप्रसिद्धिनिबन्धनाव्याप्ति-भिया खण्डिताऽस्ति तथापि नव्यैस्तस्या एव ज्ञानमनुमित्युपयोगितया स्वीकृतमिति तत्प्रदर्शनपरस्यास्य ग्रन्थस्य नव्यमतीयपरामर्शकारणतावाद इत्यभिधानं युक्तम्।

पूर्वग्रन्थे व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्य प्रस्तुतग्रन्थे च साध्या-भाववदवृत्तित्वज्ञानस्यानुमितिहेतुत्वं श्रीमता महादेवपण्डितेन समर्थितमिति वैचित्र्य-मालक्ष्य ग्रन्थद्वयमपि विदुषामनुसन्धित्सूनाञ्च पुरस्तात् स्थाप्यते। एतयोर्विस्तृतं तुलनात्मकमध्ययनमपेक्ष्यते येन कश्चन विशिष्टो विषयः समेषां पुरस्तादागमिष्यति।

ग्रन्थस्यास्य रचयिता महादेवपुण्यस्तम्भकरो नैकेषां ग्रन्थानां रचयिता विशिष्टां वैपश्चितीं धारयन् न्यायशास्त्रे कृतप्रवेशस्य सर्वस्यापि परिचित एव। तस्य विशिष्टः कुलगोत्रादिपरिचयस्तत्कृतान्यग्रन्थानां विवरणञ्च महता परि-श्रमेणान्विष्टम् 'अनुमितिपरामर्शकार्यकारणभावविचारः' इति ग्रन्थस्य भूमिकायां सविवरणं सविस्तरञ्चास्माभिर्लिखितं तज्जिज्ञासुभिस्तत एव समासादितव्यम्[2]।

---

१. अ० प० का० का० भा० विचारः, पृ० सं० ६६।

२. द्र० उक्तग्रन्थे 'नैवेद्यम्', पृ० सं० १-५।

ग्रन्थस्यास्य संशोधनं सरस्वतीभवनतः प्राप्ताया एकस्या एव मातृकायाः कृतमिति शुद्धपाठनिर्णयेऽत्यन्तं परिश्रमोऽन्वभावि। तथापि यथामति संशोध्यायं प्रस्तूयते। मूलग्रन्थोऽपि क्वचिद्दुरूहः, क्वचिल्लेखकप्रमादात् क्वचिदस्मदज्ञानवशाच्चास्पष्टो यथावत्स्थापितो विद्वद्भिः संशोध्य ग्राह्यः। किन्तु प्रायशो दुरूहस्थले टिप्पणीभिः, प्रमादजन्यदोषस्थले च पाठभेदप्रदानादिनाऽस्माभिर्ग्रन्थोऽयं समीकर्तुमेव प्रायतत। तथापि विदुषां परितोष एवास्य साधुत्वे प्रमाणम्।

अत्र लेखकप्रमादोऽपि द्विविधः प्राप्यते। एकः स्पष्टः, अपरोऽस्पष्टः। यत्र च स्पष्टः स मूलग्रन्थ एव चिह्नविशेषैः समीकृतः। अस्पष्टस्तावद् भ्रान्ति जनयति। अतो मूलग्रन्थे संशोध्यापि कदाचित् स एव शुद्धः स्यादिति भीत्या टिप्पण्यां यथावदुपस्थापितः। अत्रास्मत्पक्षतः प्रयुक्तानि कानिचिच्चिह्नानीत्थं वेदितव्यानि। यथा—र्शे ( शं ), पृ० सं० १ अर्थात् 'र्शे' इति पाठो मातृकायां किन्तु 'शं' इति पाठः शुद्धः। र [ ण्य ] नि, पृ० सं० १ अर्थात् 'रनि' इत्यस्य स्थाने 'रण्यनि' इति पठनीयम्। स्य ( चेत् ? ) का, पृ० सं० १४, अर्थात् 'चेत्' इति पाठो मातृकायां किन्तु नावश्यक इत्यादिः।

ग्रन्थस्यास्य सम्पादने सस्नेहमस्मानुपकृतवती भगवती शारदा ग्रन्थस्यास्य यशस्वितायै समभ्यर्थ्यते।

ये खलु विदितनिखिलस्वारस्या अपि प्रयासेनानेन सदुत्साहं विवर्धयिषयैव किञ्चिद्विवित्सन्ति तद्व्याजेनैव चाकिञ्चनामपि कृतिमालोचयन्ति ते विरला अप्यविरलयशस्का नमस्यन्ते। ये तु परेषां पाण्डित्यमकिञ्चिदिव मन्यमानाः पण्डितम्मन्याः सप्रश्रयं समर्पितमपि ग्रन्थरत्नं मनागपि न पिस्पृक्षन्ति ते कस्य नमस्याः स्युरिति न जानीमहे।

सादरभरम्

राजारामशुक्लः

# अनुक्रमणिका

### आचार्यमहादेवपुण्यस्तम्भकरविरचितः

## नव्यमतीयपरामर्शकारणतावादः

नत्वा शिवं नव्यरीत्या महादेवेन धीमता ।
निरूप्यते परामर्शोऽनुमाहेतुत्वमद्भुतम् ॥

सत्यपि पक्षतादिरूपसकलानुमितिसामग्रीसमवधाने परामर्शे (र्शं) विनाऽनुमित्यनुदयेनानुमितिं प्रति परामर्शो हेतुः । स च व्याप्तिविशिष्टपक्षधर्मतानिश्चयः । व्याप्तिश्च स्वव्यापकसाध्यसामानाधिकरण्यरूपा । तथा च पर्वतो वह्निमानित्याद्यनुमितौ धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्याद्याकारकपरामर्शो हेतुरिति फलितर्मात सिद्धान्तः ।

**अत्र केचित्**—पर्वतो वह्निमानित्याद्यनुमितौ पर्वतीयधूमव्यापको वह्निरित्याद्याकारकपरामर्शो हेतुर्न तूक्तः, तद्धेतुत्वे कारणतावच्छेदककोटौ सामानाधिकर[ण्य]-निवेशाधिक्येन गौरवापत्तेः ।

भवन्मते पर्वतीयधूमसमानाधिकरणाभा[व]प्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावादिघटितव्यापकतावगाहिज्ञानस्यैव हेतुत्वं फलितम् । एवञ्च शुद्धधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावघटितव्यापकत्वावगाहिधूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्याकारकोपदर्शितपरामर्शकालेऽनुमित्यपलापो भवन्मते दुरुद्धर एवेति चेन्मैवम्, न हि वयं पर्वतीयधूमसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नाभावादिघटितव्यापकतावगाहिज्ञानहेतुत्वमङ्गीकुर्मो येनोक्तानुपपत्तिः स्यात् । अपि तु धूमाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्ना या पर्वतीयधूमाधिकरणवृत्त्यभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रकारता तन्निरूपिताभावनिष्ठविषयतानिरूपितवह्नित्वनिष्ठविषयतानिरूपितावच्छिन्नत्वनिष्ठविषयतानिरूपितवह्निनिष्ठविषयताशालिज्ञानत्वेन हेतुत्वं वदामस्तत्र च न काचिदनुपपत्तिः । उपदर्शितपरामर्शे तथाविधाभावप्रतियोगितावच्छेदकतादृशावच्छेदकत्वत्वघटकतया पर्वतीयत्वस्याभानेऽपि तथाविधप्रतियोगिविशेषणतावच्छेदकघटकतयोपलक्षणविधया धूमांशे पर्वतीयत्वभानाङ्गीकारेणोपदर्शितपरामर्ष-(र्श)स्यानुमितिजनकतावच्छेदकाक्रान्ततया तस्मादनुमित्युत्पत्तिसम्भवेनानुमित्यपलापाभावात् । भवन्मतेऽप्यव्याप्यवृत्तिकपिसंयोगादीनां व्यापकत्वोपपत्तये हेत्वधिकरण-

वृत्यभावे स्वप्रतियोग्यनधिकरणवृत्तित्वरूपप्रतियोगिवैयधिकरण्यस्यावश्यं निवेशनीयतया पर्वताद्युद्देश्यकगगनादिसाध्यकानुमित्यापत्तिस्तत्र गगनाभावस्य प्रतियोग्यधिकरण्या(णा)प्रसिद्धया स्वप्रतियोग्यनधिकरणत्वरूपप्रतियोगिवैयधिकरण्यासम्भवेन तादृशघटाभावप्रतियोगितानवच्छेदकत्वस्य गगनत्वे सत्त्वात् तत्रापि तथाविधव्यापकत्वज्ञानसम्भवादिति सामानाधिकरण्यविषयताऽवश्यमनुमितिजनकतावच्छेदककोटौ निवेशनीयेति चेत्,न, गगनादाववृत्तित्वज्ञानकालेऽनुमितिरापाद्यते तच्छून्यकाले वा ? नाद्यः, तदानीमवृत्तित्वग्रहरूपप्रतिबन्धकसत्त्वेनानुमित्यापादनासम्भवात् । नान्त्यः, इष्टापत्तेः । यद्वा तद्वारणाय कारणतावच्छेदककोटौ व्यापकांशे वृत्तिमत्त्वमेव निवेशनीयं[1] न तु सामानाधिकरण्यमपि गौरवात् ।

वस्तुतस्त्वव्याप्यवृत्तिकपिसंयोगादीनां व्यापकत्वोपपत्तये हेत्वधिकरणवृत्त्यभावे निरुक्तप्रतियोगिवैयधिकरण्यं न निवेश्यते किन्तु व्याप्यवृत्तित्वं वृत्तित्वे स्वप्रतियोगिमत्ताग्रहविरोधितानियामकसम्बन्धावच्छिन्नत्वं वा निवेश्यते[2] । एवञ्च न गगनाद्यवृत्तिसाध्यकानुमित्यापत्तिसम्भावनाऽपीति ध्येयम् ।

न च तथापि व्यापकतावगाहिज्ञानहेतुतामते हेतौ साध्यसामानाधिकरण्यसन्देहदशायां तद्व्यतिरेकनिर्णयदशायां वाऽनुमित्यापत्तिरिति वाच्यम्, तादृशसंशयदशायामनुमित्युत्पादे इष्टापत्तेः । तादृशव्यतिरेकनिर्णयदशायां हेतौ पक्षधर्मताज्ञानविरहे हेतौ पक्षीयत्वावगाहिव्यापकतानिर्णयरूपपरामर्शाभावादेवानुमित्यापत्तेरभावात् । हेतौ पक्षधर्मताज्ञानसत्त्वे च साध्यासमानाधिकरणधर्मान्तरग्रहवत्तादृशव्यतिरेकनिर्णयस्याप्यनुमितौ विरोधित्वस्य तवाप्यावश्यकतया विरोधिसत्त्वेनानुमित्यापादनासम्भवात् । त्वया तादृशव्यतिरेकनिर्णयस्यानुमितौ विरोधित्वानभ्युपगमे तु ममापि तदानीमनुमिताविष्टापत्तेः । ननु भवन्मते वह्निसामानाधिकरण्याभावप्रकारकधूमविशेष्यकमानसशाब्दबोधादौ पर्वतपक्षकवह्न्याद्यनुमितिसामग्र्याः प्रतिबन्धकत्वस्याधिकस्य कल्पनीयतया गौरवम् । मन्मते त्वनुमितिसामग्रीकाले व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्तापरामर्शस्यावश्यकतया तस्य बाधनिर्णयमुद्रया तत्र प्रतिबन्धकतायाः क्लृप्तत्वात्तेनैव तदानीमुपदर्शितोपनीतभानाद्यनुत्पादोपपत्तौ तादृशसामग्रीप्रतिबन्धकतायास्तत्राकल्पनाल्लाघवम् । न च व्यापकताज्ञानहेतुतावादिमीमांसकमते[3] ज्ञानद्वययौगपद्याभ्युपगमेन कुत्रापि ज्ञानसामग्र्याः प्रतिबन्धकत्व-

---

१. तु० निविशतां वा तत्र साध्यसामानाधिकरण्यं वृत्तिमत्त्वं वा—केवलान्वयिप्रकरणम्, दी., पृ० २१९ ।

२. संयोगो सत्त्वादित्यादौ हेतुसमानाधिकरणाभावपदेन संयोगाभावस्य सङ्ग्रहो न स्यात्तस्य व्याप्यवृत्तित्वाभावादतो वृत्तित्व इत्यादि कल्पान्तरानुसरणम् ।

३. 'एकदा ज्ञानद्वय' इति पाठो मातृकायाम् ।

कल्पनमेव नास्तीति वाच्यम्, प्रत्यक्षादौ भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वस्य प्राभाकराणामपि सम्मतत्वेनान्येषां तदङ्गीकारस्य सुतरां सिद्धत्वात्। अन्यथा वह्निव्याप्यो धूमो धूमवांश्च पर्वत इत्यादिज्ञानसत्त्वेऽनुमितिसामग्र्या वृत्तत्वेन तदुत्तरं प्रत्यक्षात्मकविशिष्टपरामर्शस्यासम्भवेन नैयायिकमतेऽनुमितिविशिष्टपरामर्शयोः कार्यकारणाभावे व्यभिचारप्रदर्शकस्य प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्या बलवत्त्वादनुमितिरेवोत्पद्यते न तु व्याप्याभेदप्रत्यक्षमिति परामर्शग्रन्थीयज्ञानद्वयहेतुतावादिमीमांसकमतोपन्यासस्य मणिकारलिखितस्यानुपपत्तेः।

तस्माद् मीमांसकमतेऽपि प्रत्यक्षादौ भिन्नविषयकानुमितिसामग्र्या प्रतिबन्धकत्वस्यावश्यकत्वेनोपदर्शितमानसादावनुमितिसामग्र्याः प्रतिबध्यप्रतिबन्धकभावकल्पनप्रयुक्तगौरवं दुष्परिहरमेवेति चेत्, न, मन्मते तथाविधकियत्प्रतिबध्यप्रतिबन्धकभावाधिक्येऽपि पर्वतः पर्वतीयधूमव्यापकवह्निसमानाधिकरणाप्रामाण्यविशिष्टवृत्त्यभाववत्पर्वतज्ञानकालीनघटादिमानित्यन्तानुमितिसामग्र्या अनन्तघटपटादिविषयकप्रत्यक्षं [ प्रति ] प्रतिबन्धकत्वाकल्पनेन लाघवस्यानपायात्। तदानीं मन्मते पर्वतो वह्निमानित्यनुमितिसामग्र्या अन्यत्र क्लृप्तघटपटादिप्रत्यक्षप्रतिबन्धकताया अवश्यं सत्त्वेनैव घटपटादिप्रत्यक्षापत्तिवारणसम्भवेन तत्रातिरिक्तप्रतिबध्यप्रतिबन्धकभावाकल्पनात्। भवन्मते तत्रातिरिक्तप्रतिबध्यप्रतिबन्धकभावकल्पनमावश्यकमेव। तदानीं भवन्मते पर्वतो वह्निमानित्यनुमितिसामग्र्या अनावश्यकत्वेन क्लृप्तेन निर्वाहासम्भवादिति भवन्मतेऽप्युपदर्शितप्रतिबन्धकताकल्पनप्रयुक्तगौरवं दुष्परिहरमेव।

किञ्च भवन्मत एव हेतुतावच्छेदकभेदेन परामर्शहेतुताया अनुमितिसामग्रीप्रतिबन्धकतायाश्च बाहुल्याद्गौरवम्। तथा हि भवन्मते धूमत्वावच्छिन्नविषयतानिरूपितव्यापकत्वत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयतानिरूपितसामानाधिकरण्यत्वावच्छिन्नविषयतानिरूपितधूमत्वावच्छिन्नविषयतानिरूपितपर्वतत्वाद्यवच्छिन्नविषयताशालिनिर्णयत्वेनालोकत्वावच्छिन्नविषयतानिरूपितव्यापकत्वत्वावच्छिन्नविषयतानिरूपितवह्नित्वावच्छिन्नविषयतानिरूपितसामानाधिकरण्यत्वावच्छिन्नविषयतानिरूपितालोकत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिनिर्णयत्वादिना च धूमालोकादिलिङ्गकपरामर्शाणां विशिष्य तत्तल्लिङ्गकानुमितिहेतुत्वं सिद्ध्यभावादिविशिष्टतादृशनिर्णयत्वादिनाऽनुमितिसामग्र्याः घटपटादिप्रत्यक्षप्रतिबन्धकत्वञ्च वाच्यम्।

न च मन्मते किञ्चिद्धर्मावच्छिन्नविषयतात्वेनैव हेतुविषयतानां निवेश इति वाच्यम्, तथा सत्यालोकव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिनिर्णयकाले

वह्न्यादिविधेयकानुमित्यापत्तेस्तादृशनिर्णयसत्त्वे भिन्नविषयकप्रत्यक्षानुत्पत्त्यापत्तेश्च । एवञ्च विशिष्य धूमत्वालोकत्वावच्छिन्नविषयतानिवेशाद् भवन्मते हेतुतावच्छेदकभेदेनानन्तकार्यकारणभावकल्पनेनानन्तानुमितिसामग्रीप्रतिबन्धकताकल्पनेन च महद्गौरवम् । अस्मन्मते च व्यापकताज्ञानमात्रस्यानुमितिहेतुत्वादनुमितिजनकतावच्छेदककोटौ हेतुविषयतानां सकृदेव निवेशेन तत्र किञ्चिद्धर्मावच्छिन्नविषयतात्वेन तासां निवेशे बाधकाभावान्न हेतुतावच्छेदकभेदेन कार्यकारणभावादिबाहुल्यमिति । न च व्यापकसामानाधिकरण्यज्ञानहेतुतामतेऽपि स्वावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्ननिरूपितसामानाधिकरण्यावच्छिन्नत्व-स्वावच्छिन्नत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टप्रकारतात्वेन निखिलहेतुप्रकारता अनुगमय्य तादृशप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताशालिनिर्णयत्वेनैव हेतुत्वमुच्यत इति नैतन्मतेऽपि हेतुतावच्छेदकभेदेन कार्यकारणादिबाहुल्यमिति वाच्यम्, नीलधूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानादप्यनुमितिप्रसङ्गात् । तत्र नीलधूमत्वस्य धूमत्वानतिरिक्तत्वेन पर्वतत्वावच्छिन्नविशेष्यतानिरूपितधूमनिष्ट( ष्ठ )प्रकारतायां धूमत्वस्य प्रथमसम्बन्धसत्त्वाद् धूमत्वस्य तादृशप्रकारतावच्छेदकत्वेन द्वितीयसम्बन्धसत्त्वाच्च । यदि च साध्यतावच्छेदके वास्तवस्वावच्छिन्नव्यापकतावच्छेदकत्वनिवेश इन्धनव्यापकवह्निसमानाधिकरणेन्धनवान् पर्वत इत्यादिज्ञानादनुमित्यनुपपत्तिस्तत्र वह्नित्व इन्धनत्वव्यापकतावच्छेदकत्वाभावादतस्तद्वारणाय स्वावच्छिन्नव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्ननिरूपितसामानाधिकरण्यावच्छिन्नत्वेत्यनेन[1] स्वनिष्ठावच्छेदकतानिरूपितहेतुनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपिताधेयत्वनिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकता[2]निरूपित–प्रतियोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकत्वनिष्ठावच्छेदकताभावनिष्ठावच्छेदकतानिरूपितत्वं विवक्षणीयम् । तत्र च स्वनिष्ठावच्छेदकतायां स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धेन किञ्चिन्निष्ठावच्छेदकताविशिष्टान्यत्वं निवेशनीयमिति न नीलधूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानादनुमित्यापत्तिस्तत्र धूमत्वनिष्ठावच्छेदकताया निरुक्तसम्बन्धेन नीलत्वनिष्ठावच्छेदकताविशिष्टत्वेन तदन्यत्वाभावादिति विभाव्यते तदा नीलधूमव्यापकवह्निसमानाधिकरणनीलधूमवान् पर्वत इत्यादिज्ञानासङ्ग्रहप्रसङ्गः । तस्य रूपान्तरेण स्वातन्त्र्येण कारणत्वाङ्गीकारे तु किञ्चिद्विशेषणविशिष्टाविशिष्टहेतुभेदेन भवन्मते कार्यकारणभावभेदो दुरुद्धर एव ।

न च निश्चयत्वनिर्वचनाद्यनुरोधेनोभयमतेऽपि कार्यकारणभावभेदस्यावश्यकत्वमिति वाच्यम्, तथाप्यनन्तानुमितिसामग्रीप्रतिबन्धकतावच्छेदककोटौ सामानाधिकरण्या-

१. 'त्यनेन न स्व' इति पाठो मातृकायाम् ; २. 'दकत्वानिरू' इति पाठो मातृकायाम् ।

वंगाहित्वस्य तादृशीयाप्रामाण्यज्ञानाभावस्य वा निवेशेन व्यापकताज्ञानहेतुतावादिमत एव लाघवसम्भवादिति वदन्ति ।

तदसत्, अभावप्रत्यये प्रतियोग्यंशे यादृशो धर्मः प्रकारविधया भासते तद्धर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव प्रतियोगिनोऽभावांशे भानमिति नियमेन धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञान उपदर्शितरीत्या धूमाद्यंशे पर्वतीयत्वादेरुपलक्षणविधया भानासम्भवेन व्यापकताज्ञानहेतुतावादिमते तादृशज्ञानादनुमित्यपलापस्य दुरुद्धरत्वात् । न च तादृशनियमे मानाभाव इति वाच्यम्, प्रतियोगिनोऽभावांशे निरुक्तसम्बन्धेन भानस्यानुभवसिद्धतया तादृशनियमाङ्गीकारस्यावश्यकत्वात् । अन्यथा व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्याप्यतिरिक्तस्य सिद्ध्यापत्तेः । न हि तत्र तथाविधनियमादन्यद्दृढतरं किञ्चिद्बाधकमस्ति । न चेष्टापत्तिः तादृशातिरिक्तानन्ताभावकल्पने गौरवप्रसङ्गेन तथा वक्तुमशक्यत्वात् ।

ननु प्रतियोग्यंशेऽप्रकारीभूतो यो धर्मस्तद्धर्मस्य न प्रतियोगितावच्छेदक(त्व ?)-विधया भानमित्येव नियमः स्वीक्रियते । तावतैव व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभाववारणसम्भवान्न तु पूर्वोपदर्शितनियमोऽपि, मानाभावात् । अत एव लघुसमनियतगुरुधर्मावच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्तिवारणाय स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वमिति [पारिभाषिकावच्छेदकत्वमिति][1] पारिभाषिकावच्छेदकत्वघटितव्याप्तिलक्षणे स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकं यद्यत् तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्यानवच्छेदकत्वान्तेन वैलक्षण्यप्रदर्शकः "प्रतियोगिताश्च विशिष्योपादेया" इति सिद्धान्तलक्षणीयदीधितिग्रन्थोऽपि सङ्गच्छते । अन्यथा तत्रापि स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वघटकानां पदार्थानामुपलक्षणविधया निवेशासम्भवेन तादृशग्रन्थस्यासङ्गतत्वापत्तेः ।

वस्तुतस्तु प्रतियोग्यंशेऽप्रकारीभूत इत्यादिनियमे मानाभावः प्रामाणिकगौरवस्यादोषतयाऽनुभवबलादति[2]रिक्तव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावाङ्गीकारे बाधकाभावात् । अत एव पुनरानुभविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादिरनुभवो न तदा तादृशाभावनिवारणं गीर्वाणगुरुणाऽपि शक्यमित्युक्तं दीधितिकारेणापि[3] । एवञ्च धूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञाने धूमाद्यंश उपलक्षणविधया पर्वतीयत्वभाने बाधकाभावेन तादृश-

१. कोष्ठकान्तर्गतः पाठः अधिकः मातृकायाम् ।

२. 'बलापातादति' इति पाठो मातृकायाम् ।

३. व्यधिकरणदीधितिः, पृ० सं० २७९ ।

ज्ञानादनुमित्यपलापवारणसम्भवेन व्यापकताज्ञानहेतुतावादिमते न कोऽपि दोष इति चेदत्र **नव्याः —**

यदि व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्तावगाहिपरामर्ष(र्श)स्य (चेत् ?) कारणत्वमङ्गीक्रियते तदैवोपदर्शितरीत्या गौरवस्य प्रसङ्गेन लाघवाद् व्यापकतावगाहिपर्वतीयधूमव्यापको वह्निरित्याद्याकारकपरामर्शस्य हेतुत्वं सम्भवेत् । तदेव तु न, किन्तु साध्याभाववदवृत्तित्वरूपव्याप्तिविशिष्टहेतुमत्तावगाहिपरामर्शस्यैव हेतुता स्वीक्रियते तत्र न किमपि गौरवं सम्भवति, प्रकृतव्यापकत्वापेक्षया साध्याभाववदवृत्तित्वस्य लघुशरीरतया लाघवेन तदवगाहिपरामर्शस्यैव हेतुत्वौचित्यादिति वदन्ति ।

नन्वेतन्मते केवलान्वयिवाचकत्वादिसाध्यकानुमित्यनुपपत्तिस्तत्र वाच्यत्वादिरूपसाध्याभावाप्रसिद्धया साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शासम्भवात् । न च वस्तुगत्या साध्याभावाप्रसिद्धावप्यभावांशे प्रतियोगितासम्बन्धेन वाच्यत्वादिरूपसाध्यावगाहिनो भ्रमात्मकपरामर्शस्य सम्भवेन नानुपपत्तिरिति वाच्यम्, तथाप्यभावो न वाच्यत्वीय इत्याद्याकारकप्रतियागितासम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावप्रकारकाभावविशेष्यकबाधनिर्णयरूपविशेषदर्शनकाले भ्रमात्मकपरामर्शस्याप्यसम्भवेनानुपपत्तितादवस्थ्यात् ।

अथैकधर्मं धर्मितावच्छेदकीकृत्य विरुद्धभावाभावोभयप्रकारकनिर्णयानभ्युपगमेनाभावत्वं धर्मितावच्छेदकीकृत्य वाच्यत्ववाच्यत्वाभावोभयप्रकारकस्याभावो न वाच्यत्वीय इत्याकारकनिर्णयस्यासम्भवेनोपदर्शितानुपपत्त्यसम्भवः । तथा हि— अभावत्वं धर्मितावच्छेदकीकृत्य प्रतियोगितासम्बन्धेन वाच्यत्वादिज्ञानप्रतिबन्धिकाऽभावत्वावच्छेदेन प्रतियोगितासम्बन्धावच्छिन्नप्रतियागिताकवाच्यत्वाद्यभावप्रकारिका निश्चयात्मिका वुद्धिरेव । तस्याश्चासम्भवः । यतस्तस्यामभावत्वावच्छिन्ने प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावप्रकारिका निरुक्तसम्बन्धेन वाच्यत्वादिविशिष्टेऽभावे भासमानेऽभावत्वविशिष्टे विशेषणतया प्रतियागितासम्बन्धावच्छिन्नप्रतियोगितासम्बन्धेन वाच्यत्वादिभानमावश्यकम् । तस्य च भानं न सम्भवति तद्भानविरोधिनाऽभावत्वावच्छेदेन स्वात्मकस्य प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावनिश्चयस्य कार्यकाले सत्त्वात् समानप्रकारकत्वेनेव ज्ञानस्य प्रतिबन्धकतया तस्य भिन्नधर्मिकत्वेऽपि प्रतिबन्धकत्वात् ।

न च भूतलादौ शुद्धसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावनिश्चयसत्त्वेऽपि संयुक्तसंयोगादिरूपपरम्परासम्बन्धेन घटादिप्रकारकज्ञानोत्पत्त्याशु द्धतत्संसर्गक-

तद्विशिष्टबुद्धावेव तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावनिश्चयस्य प्रतिबन्धकत्वं स्वीकरणीयम् । एवञ्चाभावत्वावच्छेदेन प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाभावनिश्चयकालेऽप्यभावत्वविशिष्टे प्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताक[त्व]सम्बन्धेन वाच्यत्वादिभाने बाधकाभावादिति वाच्यम्, तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावनिश्चयप्रतिबध्यतावच्छेदककोटौ शुद्धतत्संसर्गकत्वनिवेशे भूतलादौ संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकघटाद्यभावनिश्चयदशायां भूतलत्वव्यापकत्वादिविशिष्टसंयोगादिसम्बन्धेन घटादिविशिष्टबुद्ध्यापत्तेः । न चोक्तदोषस्तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धीयसांसर्गिकविषय[संयोगादिसम्बन्धेन घटादिविशिष्टबुद्ध्यापत्तेः । न चोक्तदोषस्तद्धर्मावच्छिन्नविशेष्यतानिरूपिततत्सम्बन्धीयसांसर्गिकविषय][1]तानिरूपिततद्धर्मावच्छिन्नप्रकारताया एव तद्धर्मावच्छिन्नविशेष्यकतत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावनिश्चयप्रतिबध्यतावच्छेदकत्वोपगमात् संयुक्तसंयोगादिपरम्परासम्बन्धस्थले च भूतलत्वाद्यवच्छिन्न(ा ?)विशेष्यतानिरूपितसंयोगादिसांसर्गिकविषयतानिरूपितत्वस्य संयुक्तत्वादिनिष्ठसांसर्गिकविषयतायामेव सत्त्वेन घटत्वाद्यवच्छिन्नप्रकारतायामसत्त्वेनानुपपत्त्यभावादिति चेत्, न, अभावांशे प्रतियोगितासम्बन्धेन वाच्यत्वादिरूपप्रतियोगिज्ञानप्रतिबन्धकस्याभावो न वाच्यत्वीय इत्याद्याकारकनिश्चयस्योक्तयुक्त्याऽसम्भवेऽप्यभावः प्रतियोगितासम्बन्धेन वाच्यत्ववता भिन्न इत्याद्याकारकस्य तत्प्रतिबन्धकनिश्चयस्य सम्भवात् तस्याभावत्वविशिष्टे प्रतियोगितासम्बन्धेन वाच्यत्वाद्यप्रकारकत्वादिति चेत्, मैवम्, उक्तविशेषदर्शनकाले केवलान्वयिवाच्यत्वादिसाध्यकानुमितेरनभ्युपगमात् । अभावत्वावच्छेदेन हेतुसामानाधिकरण्याभावग्रहदशायामनुमित्यनभ्युपगमस्य व्यापकत्वावगाहिपरामर्ष(र्श)हेतुतावादिनामप्यावश्यकतया क्वचित्फलापलापस्य साम्यात् ।

यत्तु प्रतियोगितासम्बन्धेन साध्यीयो यस्तद्वदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्श एवानुमितिहेतुर्न तु तत्राभावत्वांशस्यापि निवेशो गौरवात्, मानाभावाच्च । एवञ्चोक्तविशेषदर्शनकालेऽपि वाच्यत्वांशे निर्धर्मितावच्छेदकस्य निरुक्तव्याप्त्यवगाहिपरामर्शस्या[2]सम्भवेन केवलान्वयिवाच्यत्वादिसाध्यकानुमित्युत्पत्तौ न किञ्चिद्बाधकमिति, तदसत्, तद्धर्मावच्छिन्नविशेष्यकस्य तत्सम्बन्धावच्छिन्नावृत्तित्वप्रकारकस्य तत्सम्बन्धाभावप्रकारकस्य च निर्णयस्य तेन सम्बन्धेन ( तद्धर्मावच्छिन्नविशेष्यकस्य तत्सम्बन्धावच्छिन्नावृत्तित्वप्रकारकस्य तत्सम्बन्धाभावप्रकारकस्य च निर्णयस्य तेन सम्बन्धेन )[3] तद्धर्मावच्छिन्नप्रकारकनिर्धर्मितावच्छेदकज्ञानं प्रत्यप्रतिबन्धकतया प्रति-

---

१. कोष्ठकान्तर्गतः पाठः अधिकः मातृकायम् ; २. 'मर्शासम्भ' इति पाठो मातृकायाम् ।
३. कोष्ठकान्तर्गतः पाठ आवृत्तो मातृकायामत्रावश्यकः ।

योगितया वाच्यत्वमवृत्ति वाच्यत्वमप्रतियोगीत्यादिनिर्णयकाले प्रतियोगितया वाच्यत्वादिप्रकारकनिर्धर्मितावच्छेदकज्ञानस्याप्यसम्भवेन मदुक्तरीतेरेवानुसरणीयत्वात् ।

ननूक्तविशेषदर्शनकालेऽपि केवलान्वयिसाध्यकानुमित्यनुपपत्तिः । न च तदानीमभावांशे प्रतियोगितया वाच्यत्वादिप्रकारकभ्रमात्मकपरामर्शादनुमितिः सम्भवतीत्युक्तमेवेति वाच्यम्, साध्यतावच्छेदकातिरिक्तधर्मावच्छिन्नप्रतियोगिताकं साध्यतावच्छेदकसम्बन्धातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकञ्च साध्याभावमादायासम्भववारणाय साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्यैव साध्याभाववदवृत्तित्वरूपव्याप्तिघटकतया[1] वाच्यत्वत्वाद्यवच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धया[2] तादृशभ्रमानुपपत्तेः । न च प्रतियोगितांशे वाच्यत्वत्वाद्यवच्छिन्नत्व-स्वरूपसम्बन्धावच्छिन्नत्व( स्वरूपसम्बन्धावच्छिन्नत्व)[3]योरेव प्रसिद्धयो[4]र्भ्रमसम्भव इति वाच्यम्, तेषां सम्बन्धघटकतया तदभावत्र्द्विशेष्यकत्व-तत्प्रकारकत्वघटिततद्भ्रमत्वानुपपत्तेः । न च तेन रूपेण प्रतियोगिताप्रकारक एवात्र भ्रमोऽपेक्षितो न तु तदवच्छिन्नप्रतियोगितासंसर्गक इति वाच्यम्, लाघवात्प्रतियोगितासंसर्गकज्ञानस्यैवानुमितिहेतुतया तत्प्रकारकज्ञानस्यानपेक्षितत्वादिति चेत्, न, लाघवेन स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशिष्टाभावस्यैव साध्याभाववदवृत्तित्वरूपव्याप्तिघटकतया घटत्वप्रकारकप्रमाविशेष्यत्वत्वादेः प्रसिद्धेन स्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वरूपव्यधिकरणसम्बन्धेन वाच्यत्वत्वादेरभावांशे भ्रमात्मकपरामर्शस्य सम्भवेनानुपपत्त्यभावात् ।

अत एव साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शस्यानुमितिहेतुत्वे विशिष्टस्यानतिरिक्ततया द्रव्यत्वाभाववदवृत्तित्वस्य विशिष्टसत्त्वेऽसत्त्वेन तादृशव्याप्त्यवगाहिपरामर्ष(र्शा)सम्भवेन द्रव्यत्वसाध्यकविशिष्टसत्तालिङ्गकानुमित्यनुपपत्तिः[5] । एवं जातिमान् सत्त्वादित्यादावपि जात्यभाववति सामान्यादौ हेतुतावच्छेदकसमवायादिसम्बन्धेन वृत्तित्वस्याप्रसिद्धत्वेन तादृशव्याप्त्यवगाहिपरामर्शस्यासम्भवेन जात्यादिसाध्यकसत्तादिलिङ्गकानुमित्यनुपपत्ति[6]रित्यपि प्रत्युक्तम्, तत्रापि तादृश-

---

१. तु०—साध्यभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताको बोध्यः — व्या० पं० माथुरी, पृ० सं० २३ ।

२. अभावीयप्रतियोगित्वाप्रसिद्ध्येत्याशयः ।

३. कोष्ठकान्तर्गतः पाठ आवृत्तो मातृकायामत्रावश्यकः; ४. आधेयत्वादौ प्रसिद्धयोः ।

५. तु० मा० पञ्च०, पृ० सं० ४९ ।

६. तु० मा० पञ्च०, पृ० सं० ४९ [ तत्र सत्तावान् द्रव्यत्वादिति स्थलम् ] ।

व्याप्त्यवगाहिप्रमात्मकपरामर्शासम्भवेऽपि भ्रमात्मकपरामर्शादेवानुमित्युपगमेन तत्तद्वि-शेषदर्शनकाले चानुमितेरनुपगमेनानुपपत्त्यभावात् । अत एव केवलान्वयिग्रन्थ उपदर्श-येनामपि केवलान्वयिनः सरणिमिति[1]दीधितिकारेणाप्युक्तम् ।

एतेन साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शो नानुमितिहेतुः । तथा सति परार्थानुमानस्थले यो यो धूमवान् स [स] वह्निमानित्याद्युदाहरणवाक्यानुपपत्तेः । तथा हि–तादृशवाक्याद् धूमादिसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकतावच्छेदकत्वमेव वह्नित्वादौ प्रतीयते, न तु धूमादौ वह्नित्वाद्यवच्छिन्नाभाववदवृत्ति-त्वम् । यद्यदभिधेयं तत्तत्प्रमेयमित्युदाहरणवाक्ये प्रमेयत्वत्वाद्यवच्छिन्नाभावाप्रसिद्ध्या तादृशप्रतीत्यसम्भवात् । एवञ्चोदाहरणवाक्यस्यानुमितिकारणानुपयोगित्वेन तत्प्रयो-गस्य नैरर्थ्यापत्तिरिति व्यापकत्वावगाहिपरामर्शहेतुत्वमेव समीचीनम् ।

अथ तादृशवाक्यात् कथं निरुक्तव्यापकतावच्छेदकत्वप्रतीतिस्तस्यापदार्थत्वेन प्रकारतया भानासम्भवात् । न च यत्पदोत्तरयत्पदरूपवीप्सार्थस्य निरुक्तव्यापकता-वच्छेदकत्वस्य वह्नित्वादावन्वयात्तथा प्रतीतिरुपपद्यत इति वाच्यम्, नामार्थयोर्भेदेना-न्वयस्य व्युत्पत्तिविरुद्धतया तथान्वयासम्भवात् । न च वह्न्यादिपदेन शक्त्योपस्थापिते वह्नित्वादौ लक्षणयोपस्थापितस्य निरुक्तव्यापकतावच्छेदकत्वस्यान्वयात्तथा प्रतीति-र्नामिद्वयार्थयोरेव भेदेनान्वयस्य व्युत्पत्तिविरुद्धतयैकनामार्थयोर्भेदेनान्वयेऽपि क्षत्यभावाद् युगपद्द्वयविरोधस्य चानभ्युपगमादिति वाच्यम्, गङ्गाऽस्तीति वाक्यात् संयोगेन प्रवाह-वत्तीरमस्तीत्याद्यनुभवस्य सर्वानुभवविरुद्धतयैकपदवृत्तिद्वयोपस्थाप्यार्थयोः परस्पर-मन्वयस्य व्युत्पत्तिविरुद्धतया तथाऽन्वयसम्भवेन वीप्सार्थस्य व्यापकतावच्छेदकस्यैव भेदेन वह्नित्वादावन्वयसम्भवेन वा तथा प्रतीत्युपपत्तेः ।

वस्तुतस्तु व्यापकतावच्छेदकत्वं न वीप्सार्थः, गौरवात् । किन्तु यो यो धूमवान् स [स] वह्निमान् इत्याद्युदाहरणवाक्यस्य वीप्सादिसमभिव्याहारेणोद्देश्यता-वच्छेदकधूमादिव्यापकतावच्छेदकवह्नित्वाद्यवच्छिन्नवत्प्रतियोगिकत्वविशिष्टाभेदसम्ब-न्धेन वह्निमदादिप्रकारकधूमवदादिविशेष्यकबोधजनकत्वाभ्युपगमेन तथा प्रतीत्युप-पत्तिः । यदि च यो यो वह्निमान् स [स] धूमवानित्यादिवाक्यस्याप्रामाण्यानुरोधेन वह्न्यादिव्यापकतावच्छेदकधूमत्वाद्यवच्छिन्नवत्प्रतियोगिकत्वविशिष्टाभेदसम्बन्धे धूम-वदादिप्रकारकबोधजनकत्वमवश्यं स्वीकरणीयम् । एवञ्च यो यो वह्निमान् स [स] न धूमवान् इत्यादिनञ्पदघटितवाक्यस्याप्यप्रामाण्यापत्तिः । तस्य वह्न्यादिव्यापकता-वच्छेदकधूमत्वादेरप्रसिद्ध्या द्घतटितनिरुक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावबोध-कत्वासम्भवादिति विभाव्यते, तथापि न क्षतिः, यो यो धूमवान् स [स] वह्निमानित्यादि-

---

१. केवलान्वयिप्रकरणम्, दी० पृ० सं० २९४।

वाक्यस्य स्वसमानाधिकरणाभावाप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठ-प्रतियोगितावच्छेदकताकभेदवत्त्वपर्यवसितस्वव्यापकतावच्छेदकत्वसम्बन्धेन धूमादि-विशिष्टो यो धर्मस्तदवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन मतुबर्थघटकसंयोगादि-सम्बन्धेन तुप्प्रकृत्यर्थस्य वह्नित्वविशिष्टादेरन्वयोपगमेन मे तादृशप्रतीतिनिर्वाहात्। यो यो वह्निमान् स [स] धूमवान् इत्यादौ च धूमत्वादौ वह्न्यादेर्निरुक्तव्यापकतावच्छेदकत्व-सम्बन्धेनासत्त्वेन निरुक्तव्यापकतावच्छेदकत्वसम्बन्धेन वह्न्यादिविशिष्टवह्नित्वाद्य-वच्छिन्नप्रतियोगिताकत्वे वह्नित्वादिविशिष्टस्यैव सम्बन्धत्वेन धूमत्वादिविशिष्टस्या-सम्बन्धतया तादृशव्याधिकरणसम्बन्धेन मतुबर्थघटकसम्बन्धे धूमत्वादिविशिष्टस्य भानादप्रामाण्यम्। नञ्पदघटिततादृशवाक्यस्य च मतुबर्थघटकसंयोगादिसम्बन्धे तादृशव्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकधूमत्वादिविशिष्टादेरभावबोधकत्वात् प्रामाण्यमिति न किञ्चिदसमञ्जसमित्यपि परास्तम्, यद्यदभिधेयं तत्प्रमेयमित्याद्यु-दाहरणवाक्यादप्युक्तरीत्या भ्रमात्मकसाध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिबोध-सम्भवात्। विशेषदर्शनदशायाञ्चानुमितेरनभ्युपगमेन तादृशबोधाभावेऽपि क्षति-विरहात्।

न च तथाप्यवृत्तिगगनादौ वह्न्याद्यभाववदवृत्तित्वरूपव्याप्तिसत्त्वेन गगनादि-लिङ्गकवह्न्यादिविधेयकानुमित्यापत्तिरिति वाच्यम्, गगनमवृत्तीत्याकारकविशेषदर्शन-काले तत्र पक्षधर्मताज्ञानासम्भवादेवानुमित्यसम्भवात्। न चावृत्तित्वग्रहस्य वृत्तित्व-प्रकारकग्रहं प्रत्येव ग्राह्याभावावगाहितया विरोधित्वेन गगनमवृत्तीत्याकारकविशेष-दर्शनकाले वह्न्यभाववदवृत्तिगगनवान् पर्वत इत्याद्याकारकपक्षविशेष्यकगगनप्रकारक-परामर्शोत्पत्तौ बाधकाभावेन तादृशानुमित्यापादनं दुर्वारमिति वाच्यम्, तदा तादृशा-नुमित्यभावस्य प्रामाणिकत्वे साध्याभाववदवृत्तित्वविशिष्टवृत्तिमत्त्वस्यैव व्याप्तित्वा-ङ्गीकारात्, तादृशव्याप्तिग्रहस्य चावृत्तित्वग्रहकाले कथमप्यसम्भवात्।

वस्तुतस्तु तत्प्रकारकग्रहं प्रति तद्धर्मिकावृत्तित्वग्रहस्याप्रतिबन्धकत्वमवश्य-मङ्गीकार्यम्। तथा सति वह्निरवृत्तिरित्याद्याकारकविशेषणतावच्छेदकप्रकारकनिर्णय-घटिताया इच्छाविशिष्टाया अवृत्तिवह्निमान् पर्वत इत्याद्याकारकविशिष्टवैशिष्ट्याव-गाहिप्रत्यक्षसामग्र्याः पर्वतो वह्निमानित्याद्यनुमितिं प्रति प्रतिबन्धकत्वाकल्पनेन लाघवात् तादृशसामग्रीकाले वह्निरवृत्तिरित्याद्याकारकविशेषणतावच्छेदकप्रकारक-निर्णयस्यावश्यकतया तस्य च तादृशानुमितौ प्रतिबन्धकत्वस्य क्लृप्तत्वादेव तदानीं तादृशानुमितिवारणसम्भवात्। तथा च गगनमवृत्तीत्याकारकविशेषदर्शनकाले पक्ष-धर्मताज्ञानाभावादेव नानुमितिः। उक्तविशेषदर्शनशून्यकाले च निरुक्तव्याप्तिज्ञान-सत्त्वेऽनुमिताविष्टापत्तेरेवेति व्याप्तिलक्षणे वृत्तिमत्त्वं न निवेशनीयमिति दिक्।

ननु व्यापकसामानाधिकरण्यरूपव्याप्त्यवगाहिपरामर्शहेतुतामतेऽभावो न हेतु-समानाधिकरणः, प्रतियोगिता नाभावीया इत्याद्याकारकोपनीतभानशाब्दबोधादौ

पर्वतपक्षकवह्न्याद्यनुमितिसामग्र्या अतिरिक्तप्रतिबन्धकत्वाकल्पनेन लाघवम्, तादृशसामग्रीकाले व्यापकसामानाधिकरण्यरूपव्याप्तिविशिष्टहेतुमत्तावगाहिपरामर्शस्यावश्यकतया तस्य च बाधमुद्रया तत्र प्रतिबन्धकत्वस्य क्लृप्तत्वात् तत एव तदा तादृशोपनीतभानाद्यनुत्पत्तेः। साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शकारणतामते तु तदानीं वह्न्यभाववदवृत्तिमान् पर्वत इत्याद्याकारकनिर्णयस्य सत्त्वेन तस्य तादृशोपनीतभानादौ प्रतिबन्धकत्वस्यावक्लृप्ततयाऽनुमितिसामग्रीकाले तथाविधोपनीतभानादिवारणाय तत्र तादृशसामग्र्याः प्रतिबन्धकत्वकल्पनेन महद्गौरवम्। न च साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शहेतुतामतेऽप्यभावो न साधीय इत्याकारकोपनीतभानशाब्दबोधादावनुमितिसामग्र्याः प्रतिबन्धकत्वाकल्पनेन लाघवमस्त्येवेति वाच्यम्, यतो गुरुशरीरव्याप्त्यवगाहिज्ञानप्रतिबध्यज्ञानानां बहुतया व्यापकसामानाधिकरण्यरूपव्याप्त्यवगाहिपरामर्शहेतुतामते बहुषु स्थलेषु सामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवम्। लघुशरीरव्याप्त्यवगाहिज्ञानप्रतिबध्यज्ञानानामल्पतया साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शहेतुतामतेऽल्पस्थले तथेति व्यापकसामानाधिकरण्यरूपव्याप्तेः शरीरगौरवमेव लाघवसम्पादकमिति चेत्, न, व्यापकसामानाधिकरण्यरूपव्याप्त्यवगाहिपरामर्शहेतुतामतेऽपि घटाद्युपनीतभानादावुक्तानुमितिसामग्र्याः प्रतिबन्धकत्वेऽवश्यकल्पनीये तत्रैव घटादिविषयमनिवेश्य लौकिकान्यप्रत्यक्षत्वादेरेव प्रतिबध्यतावच्छेदकत्वोपगमेनाभावो न हेतुसमानाधिकरण इत्याद्युपनीतभानादेरपि तादृशप्रतिबध्यतावच्छेदकाक्रान्ततया साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शहेतुतामतेऽपि क्लृप्तप्रतिबन्धकतयैव निर्वाहेणोक्तसामग्रीप्रतिबन्धकताधिक्याभावात्। न च घटाद्युपनीतभानं जायतामित्यादिविषयमिश्रितेच्छानामुत्तेजकत्वानुरोधेन विशिष्य घटाद्युपनीतभानत्वादिकमेवोक्तसामग्रीप्रतिबध्यतावच्छेदकं वाच्यम्। तथा च कथमेकप्रतिबन्धकतयैवोपपत्तिरिति वाच्यम्, स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेनोक्तसामग्रीविशिष्टं यत् तदन्यत्वस्योक्तसामग्रीप्रतिबध्यतावच्छेदककोटौ निवेशेनैवेच्छाकालीनज्ञाने व्यभिचाराभावेनोक्तसामग्रीप्रतिबन्धकतायामिच्छाया उत्तेजकत्वानभ्युपगमात्।

न चेच्छाकाल इव तच्छून्यकालेऽप्युक्तसामग्रीकालीनज्ञानापत्तिरिति वाच्यम्, उक्तसामग्रीकालीनज्ञान इच्छाया हेतुत्वाभ्युपगमात्। न चैवमप्युक्तसामग्रीकालीनज्ञाने तथाविधेच्छाया हेतुत्वकल्पनमेवाधिकमिति वाच्यम्, तुल्ययुक्त्या घटाद्युपनीतभानादौ विरोधिसामग्र्यन्तरप्रतिबन्धकतायामपीच्छाया उत्तेजकत्वानभ्युपगमेनेच्छाधीनप्रत्यक्षे व्यभिचारवारणाय स्वाव्यहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन विरोधिसामग्र्यन्तरविशिष्टं यत्तदन्यत्वस्य प्रतिबध्यतावच्छेदकत्वेनेच्छाशून्यकाले विरोधिसामग्र्यन्तरकालीनज्ञानवारणाय विरोधिसामग्र्यन्तरकालीनतादृशोपनीतभानादौ तथाविधेच्छाया

हेतुत्वे कल्पनीये तादृशसामग्रीवैशिष्ट्यमनिवेश्य तथाविधेच्छाविशिष्टत्वस्यैव जन्यतावच्छेदकत्वोपगमेन तादृशकारणतयैवोपपत्तौ तादृशानुमितिसामग्रीकालीन-तथाविधोपनीतभानादाविच्छाया हेतुत्वान्तरस्याकल्पनात् ।

किञ्च, व्यापकसामानाधिकरण्यज्ञानहेतुतामते विशिष्य धूमत्वालोकत्वाद्य-वच्छिन्नविशेष्यतात्वेन हेतुविषयतानामनुमितिजनकतावच्छेदककोटौ निवेशाद् हेतु-तावच्छेदकभेदेन कार्यकारणभावाद्यानन्त्यम् । न च किञ्चिद्धर्मावच्छिन्नविषयता-त्वेन निखिलहेतुविषयतानां निवेशान्नानुपपत्तिरिति वाच्यम्, तथा सत्यालोकव्यापक-वह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तेः । साध्याभाववदवृत्ति-त्वज्ञानहेतुतामते तु वह्न्यभाववदवृत्तित्वावच्छिन्नप्रकारताशालिनिर्णयत्वावच्छेदेन धूमालोकादि[ लिङ्गक ]निखिलपरामर्शाणामनुगतरूपेणैव हेतुतया तत्र च विशिष्य धूमत्वालोकत्वाद्यवच्छिन्नविषयतानामनिवेशान्न हेतुतावच्छेदकभेदेन कार्यकारण-बाहुल्यमिति ।

स्यादेतत् । अस्तु तावद् व्याप्तेः शरीरलाघवप्रयुक्तलाघवम् । तथापि व्यापक-सामानाधिकरण्यज्ञानकारणतामत इव साध्याभाववदवृत्तित्वज्ञानहेतुतामतेऽपि निश्चयत्वनिर्वचनाद्यनुरोधेन हेतुतावच्छेदकानां विशिष्य निवेशस्यावश्यकतया हेतुतावच्छेदकभेदेन परामर्शकारणतादिबाहुल्यं दुष्परिहरमेव । तथा हि—वह्न्यभाव-वदवृत्तित्वादिविशिष्टप्रतियोगिताकाभावाप्रकारकत्वे सति वह्न्यभाववदवृत्तित्वाद्य-वच्छिन्नप्रकारताशालिज्ञानत्वं न निर्णयत्वं वह्निव्याप्यालोकवान् न वा पर्वतः पर्वतो वह्निव्याप्यधूमवानित्याद्यांशिकनिर्णयासङ्ग्रहप्रसङ्गात्, तत्र वह्न्यभाववदवृत्तित्व-विशिष्टालोकप्रतियोगिकाभावस्य प्रकारत्वात् । नापि वह्न्यभाववदवृत्तित्वाद्य-वच्छिन्नसामान्याभावाप्रकारकत्वे सति तदवच्छिन्नप्रकारताशालिज्ञानत्वादिकं तत्, वह्निव्याप्यधूमवान् न वा पर्वत इत्यादिसंशयादप्यनुमित्यापत्तेस्तत्र वह्न्यभाववदवृत्ति-त्वाद्यवच्छिन्नधूमत्वावच्छिन्नाभावस्यैव प्रकारत्वेन वह्न्यभाववदवृत्तित्वाद्यवच्छिन्न-सामान्याभावाप्रकारकत्वात् । वह्न्यभाववदवृत्तित्वाद्यवच्छिन्नसामान्याभावाप्रकारकत्वे सति शुद्धवह्न्यभाववदवृत्तित्वाद्यवच्छिन्नप्रकारताशालिज्ञानत्वं निर्णयत्वमित्युक्तौ च वह्निव्याप्यधूमवान् पर्वत इत्यादिनिश्चयस्याप्यसङ्ग्रहस्तत्र पक्षविशेष्यतानिरू-पितधूमप्रकारताया वह्न्यभाववदवृत्तित्वातिरिक्तधूमत्वावच्छिन्नत्वेन वह्न्यभाववद-वृत्तित्वातिरिक्तधूमत्वानवच्छिन्नत्वरूपशुद्धत्वस्याभावात् । न च वह्न्यभाववदवृत्ति-मान् पर्वत इत्यादिनिर्णयीयशुद्धवह्न्यभाववदवृत्तित्वाद्यवच्छिन्नप्रकारताऽपि फलबलात्तादृशनिर्णये स्वीक्रियते । अतो न तदसङ्ग्रहः । वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशये च तथाविधप्रकारतायाः कल्पकाभावान्न ततोऽनुमितिप्रसङ्गः ।

यादृशे च संशये तथाविधप्रकारताऽपि प्रामाणिकी तस्य च वह्निव्याप्यधूमवान्न वा पर्वतः पर्वतो वह्निव्याप्यवानित्याकारकतया तस्मादनुमित्युत्पत्तौ न कस्याप्यसम्मतिरिति वाच्यम्, उक्तधूमादिगोचरसकलनिर्णयेष्वनुभवविरुद्धतादृशप्रकारतायाः स्वीकारो( रे ) तथाविधनिखिलनिर्णयानामेव वह्निव्याप्यधूमवान् वह्निव्याप्यवांश्च पर्वत इत्याकारकताप्रसङ्गात्।

किञ्च, वह्निव्याप्यधूमवान् पर्वत इत्यादिनिखिल(निल ?)निर्णयानां शुद्धवह्न्यभाववदवृत्तित्वावच्छिन्नप्रकारताशालित्वं न सम्भवति विरोधिसामग्रीकालीनवह्निव्याप्यधूमत्वावच्छिन्नप्रकारताशालिप्रत्यक्षं जायतामितीच्छाधीनतादृशप्रत्यक्षे तथाविधप्रकारत्वासम्भवात्, शुद्धवह्न्यभाववदवृत्तित्वा(शुद्धवह्न्यभाववदवृत्तिता ?)[1]-वच्छिन्नप्रकारताशालिप्रत्यक्षप्रतिबन्धकतायां वह्निव्याप्यधूमत्वावच्छिन्नप्रकारताशालिप्रत्यक्षेच्छाया अप्युत्तेजकत्वे तादृशेच्छासत्त्वे धूमत्वादिभासकसामग्र्यसत्त्वे शुद्धवह्न्यभाववदवृत्तित्वावच्छिन्नप्रकारताशालिप्रत्यक्षापत्तेः । तस्मादेतादृशबाधकबलाद् वह्निव्याप्यधूमवान् पर्वत इत्यादिनिर्णयानां न शुद्धवह्न्यभाववदवृत्तित्वावच्छिन्नप्रकारताशालित्वमिति ।

ननु पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतान्या या पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्न्यादिव्याप्यत्वावच्छिन्नप्रकारता, तच्छालिज्ञानत्वमेव पर्वतत्वाद्यवच्छिन्नधर्मिकवह्न्यादिव्याप्यवत्तानिर्णयत्वम् । प्रकारता च प्रकारभेदात् प्रकारतावच्छेदकभेदाच्च भिद्यते, न तु विशेष्यतादिभेदादपि, मानाभावात् । एवञ्च वह्निव्याप्यधूमवान् पर्वत इत्यादिसंशयीयपर्वतादिविशेष्यतानिरूपितधूमादिप्रकारता[ या ]स्तादृशविशेष्यतानिरूपिताभावप्रकारतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारत्वाभिन्नतया न तच्छं-(त्सं)शयादनुमितिः । वह्निव्याप्यालोकवान्न वा पर्वतो वह्निव्याप्यधूमवान् पर्वत इत्याद्यांशिकनिर्णये च न तथाविधधूमादिप्रकारताया अभावविशेष्यतानिरूपितालोकादिप्रकारताभिन्नत्वान्न तदसङ्ग्रहः ।

अथ वह्निव्याप्यधूमवान् न वा पर्वत इत्यादिसंशयेऽपि पर्वतादिविशेष्यतानिरूपितसंयोगादिसम्बन्धावच्छिन्नप्रकारताया अभावविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारतातो भेद आवश्यकः । अन्यथा तादृशज्ञानस्य पर्वतादिविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नधूमादिप्रकारताशालित्वेन तस्य प्रतियोगितासंसर्गावच्छिन्नप्रतियोगिताकधूमाभावादिप्रकारकपर्वतादिविशेष्यक—पर्वतो न धूमीय

१. कोष्ठकान्तर्गतः पाठ आवृत्तो मातृकायामत्रानावश्यकः ।

इत्याद्याकारकबाधबुद्ध्यादिप्रतिबध्यत्वप्रसङ्गस्तादृशधूमादिप्रकारताया एव तथाविधबाधबुद्ध्यादिप्रतिबध्यतावच्छेदकत्वादिति चेत्, सम्भवत्येवं यदि पर्वतादिविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नधूमादिप्रकारताशालिबुद्धित्वं तथाविधबाधबुद्ध्यादिप्रतिबध्यतावच्छेदकं भवेत्। तदेव न, किन्तु पर्वतादिविशेष्यतानिरूपितप्रतियोगितानिष्ठसांसर्गिकविषयतानिरूपितधूमादिप्रकारताशालिबुद्धित्वमेव तत्प्रतिबध्यतावच्छेदकम्। एवञ्चोपदर्शितसंशयस्य नोक्तबाधबुद्ध्यादिप्रतिबध्यतावच्छेदकाक्रान्तत्वापत्तिः, उपदर्शितसंशयस्य पर्वतादिनिष्ठविशेष्यतानिरूपितप्रतियोगितासंसर्गावच्छिन्नप्रकारताशालित्वेऽपि संयोगादिसांसर्गिकविषयतायामेव पर्वतादिविशेष्यतानिरूपितत्वसत्त्वेन पर्वतादिविशेष्यतानिरूपितत्वस्य प्रतियोगितानिष्ठसांसर्गिकविषयतायामसत्त्वात्। तथा च प्रकारत्वाभेदे न कोऽपि दोष इति चेन्मैवम्, वह्निव्याप्यधूमवान् वह्निव्याप्यधूमाभाववान् वा पर्वत इत्याद्याकारकसंशयां(यी)यपर्वतादिविशेष्यतानिरूपितधूमादिप्रकारतायाः स्वावच्छेदकतासमनियतावच्छेदकताकाभावविशेष्यतानिरूपितधूमादिप्रकारत्वाभेदस्य सभ(म्भ)वेऽपि वह्निव्याप्यधूमवान् धूमाभाववान् वा पर्वत इत्यादिसंशयीयपर्वतादिविशेष्यतानिरूपितवह्निव्याप्यधूमत्वाद्यवच्छिन्नप्रकारताया अभावविशेष्यतानिरूपितशुद्धधूमत्वाद्यवच्छिन्नप्रकारतायाश्चाभेदासम्भवेन तादृशसंशयादनुमित्यापत्तेः। न च तत्रापि प्रकारताभेदे बाधकाभाव इति वाच्यम्, तथा सति वह्निव्याप्यधूमवान् वह्निव्याप्यधूमाभाववान् वेत्यादिसंशयात्तादृशसंशयस्य वैलक्षण्यानुपपत्तेः।

ननु स्वावच्छेदकावच्छिन्नत्वस्वनिरूपकज्ञाननिरूपितत्वोभयसम्बन्धेन पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपिताभावविषयतानिरूपितप्रतियोगितासंसर्गावच्छिन्न - प्रकारताविशिष्टा या प्रकारता, तदन्या या पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितवह्न्यादिव्याप्यत्वावच्छिन्नप्रकारता, तच्छालिज्ञानत्वमेव प्रकृते निर्णयत्वम्। वह्निव्याप्यधूमवान् न वा पर्वत इत्यादिसंशयस्थले च पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितधूमादिप्रकारतायास्तथाविधोभयसम्बन्धेन तादृशप्रतियोगितासंसर्गावच्छिन्नधूमादिनिष्ठप्रकारताविशिष्टत्वमेवास्ति। तत्र स्वपदार्थो धूमादिनिष्ठतादृशप्रतियोगितासंसर्गावच्छिन्नप्रकारतैव। तदवच्छेदकीभूतधूमत्वाद्यवच्छिन्नत्वस्य तथाविधप्रकारतानिरूपकतादृशसंशयात्मकज्ञाननिरूपितत्वस्य च तदीयपर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितधूमादिप्रकारतायां सत्त्वादिति तादृशसंशयान्नानुमित्यापत्तिः। वह्निव्याप्यधूमवान् पर्वत इत्यादिनिर्णये प्रतियोगितासंसर्गावच्छिन्नतथाविधधूमादिप्रकारताया असत्त्वेन स्वनिरूपकसंशयात्मकज्ञाननिरूपितत्वस्य निर्णयीयपर्वतत्वाद्यवच्छिन्नविशेष्यता - निरूपितधूमादिप्रकारतायामसत्त्वान्न तद्घटितोभयसम्बन्धेन तादृशप्रतियोगितासंसर्गावच्छिन्नप्रकारताविशिष्टत्वस्य तथाविधव्याप्यप्रकारतायां सत्त्वमिति न तादृशनिर्णयादनुमित्यनुपपत्तिः। ज्ञानव्यक्तिभेदेन विषयताभेदमङ्गीकृत्य चेदम्। तेन न

निश्चयीयव्याप्यप्रकारतायास्तथाविधोभयसम्बन्धेन तादृशप्रतियोगितासंसर्गावच्छिन्नप्रकारताविशिष्टसंस(श)यीयव्याप्यप्रकारत्वाभिन्नतयाऽनुपपत्तिः । वह्निव्याप्यालोकवान् न वा पर्वतो वह्निव्याप्यधूमवांश्चेत्याद्यांशिकनिर्णयसंग्रहाय स्वावच्छेदकावच्छिन्नत्वेत्यस्य निवेशः । वह्निव्याप्यधूमवान् पर्वत इत्यादिनिर्णयसङ्ग्रहाय स्वनिरूपकज्ञाननिरूपितत्वेत्यस्य निवेशः ।

अत्र स्वावच्छेदकावच्छिन्नत्वमित्यनेन स्वावच्छेदकताव्यापकावच्छेदकताकत्वं विवक्षणीयम् । अन्यथा वह्निव्याप्यालोकवान्न वा पर्वतो वह्निव्याप्यधूमवांश्चेत्याद्यांशिकनिर्णयादनुमित्यनुपपत्तेः, तत्रापि तादृशप्रतियोगितासंसर्गावच्छिन्नालोकादिविशिष्टप्रकारतायाः स्वावच्छेदकवह्न्यादिव्याप्यत्वावच्छिन्नत्वस्य पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितव्याप्यत्वावच्छिन्नधूमादिप्रकारताया(यां) सत्त्वेन तद्घटितोभयसम्बन्धेन तादृशप्रतियोगितासंसर्गावच्छिन्नप्रकारताविशिष्टत्वस्य तज्ज्ञानीयतादृशप्रकारतायां सम्भवात् । विवक्षिते तु नैवम् । तथा सति प्रतियोगितासंसर्गावच्छिन्नालोकादिप्रकारतावच्छेदकत्वस्यालोकत्वादौ सत्त्वात् तत्र च पर्वतत्वाद्यवच्छिन्नविशेष्यतानिरूपितधूमादिनिष्ठव्याप्यत्वावच्छिन्नप्रकारतावच्छेदकत्वस्याभावेन स्वावच्छेदकताव्यापकतावच्छेदकताकत्वघटितोक्तोभयसम्बन्धेन प्रतियोगितासंसर्गावच्छिन्नतादृशालोकादिप्रकारताविशिष्टत्वस्य तथाविधनिर्णयीयपर्वतादिविशेष्यतानिरूपितव्याप्यप्रकारतायामभावादिति चेत्, न, तथा सति जातिविशेषत्वादिना धूमत्वस्य[1] यत्राभावप्रतियोग्यंशे विशेष[णत]या भानं तत्र जातिविशेषवदभाववान् वह्निव्याप्यधूमवांश्च पर्वत इत्याकारकनिर्णयादनुमित्यनुत्पादापत्तेः, तत्र निरुक्तोभयसम्बन्धेन तादृशप्रतियोगितासंसर्गावच्छिन्नप्रकारताविशिष्टत्वस्य तथाविधव्याप्यप्रकारतायां सत्त्वात् । न च निरवच्छिन्नस्वावच्छेदकताव्यापकावच्छेदकताकत्वस्य सम्बन्धघटकतया नोक्तदोष इति वाच्यम्, तथा सति वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशयादप्यनुमित्यापत्तेः । एवं ज्ञानव्यक्तिभेदेन विषयताभेदे मानाभावेन निर्णयीयपर्वतादिविशेष्यतानिरूपितव्याप्यप्रकारताया अपि सं[श]यीया(य)तादृशप्रकारताविशिष्टप्रकारत्वाभिन्नतया वह्निव्याप्यधूमवान् पर्वत इत्यादिनिखिलनिर्णयानामप्यसङ्ग्रहप्रसङ्गाच्च[2] ।

यत्तु विरोधानवच्छिन्नसंयोगादिनिष्ठसांसर्गिकविषयतानिरूपिता या वह्न्यादिव्याप्यत्वावच्छिन्नप्रकारता तच्छालिज्ञानत्वमेव प्रकृते निर्णयत्वम् । संशये च धूमादिनिष्ठप्रकारतावच्छेदकसंयोगाद्यात्मसम्बन्धांशे धूमाद्यभावकोठि( टि )विरोधस्य

---

१. 'मत्वं यत्राभा' इति पाठो मातृकायाम् ।

२. अत्र चकारो नावश्यकः, एवमित्यनेनैव तादृशार्थलाभात् ।

भासमानतया तदीयसंयोगादिनिष्ठसांसर्गिकविषयताया विरोधावच्छिन्नत्वान्न ततोऽनुमित्यापत्तिः, निश्चये च विरोधस्य संसर्गघटकतया भानाभ्युपगमान्न दोषः ।

अथ विरोधस्य धूमाभाववदवृत्तित्वादिरूपतया तन्निवेशे हेतुतावच्छेदकभेदेन परामर्शकारणतादिभेदो भवन्मतेऽपि दुर्वारः । वह्निव्याप्यत्वावच्छिन्नाभाववदवृत्तित्वादिरूपविरोधानवच्छिन्नत्वस्य निवेशे च वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिसंशयादप्यनुमित्यापत्तेः, यत्र वह्निव्याप्यत्वावच्छि[न्ना]भावस्याकोटितया तदधिकरणावृत्तित्वरूपविरोधस्य भानासम्भवात् संशय एककोटिसम्बन्धांशेऽपरकोटिविरोधस्यैव भानाभ्युपगमादिति चेत्, स्यादेवम्, यदि धूमाभाववदवृत्तित्वादिरूपविरोधानवच्छिन्नत्वं संयोगादिसांसर्गिकविषयतायां निवेश्यते, तदेव न, किन्तु निखिलविरोधनिष्ठावच्छेदकता वह्निव्याप्यप्रतियोगिकाभावाधिकरणनिष्ठावच्छेदकत(ता)निरूपका(धेयका)[1]धेयत्वनिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतात्वेनानुगमा(म)य्य तदनिरूपकत्वमेव संयोगनिष्ठसांसर्गिकविषयतायां निवेश्यते, तत्र च न काऽप्यनुपपत्तिः, हेतुतावच्छेदकीभूतधूमत्वालोकत्वादीनां विशिष्य निवेशाभावात् । न च तथा सत्यालोकाभाववदवृत्तित्वविशिष्टा(ष्ट)संयोगसंसर्गकधूमप्रकारकज्ञानादनुमित्यनुदयप्रसङ्ग इति वाच्यम्, धूमवत्ताबुद्धावालोकाभाववदवृत्तित्वादिः(देः) संसर्गघटकतया भाने मा[ना]भावादिति । तत्र[2] । तथा सत्यभावकोठि(टि)मात्रसंसर्गघटकतया विरोधावगाहिनस्तादृशसंशयस्य सङ्ग्रहप्रसङ्गात् । न हि निखिलसंशये कोटिद्वयसंसर्गांश एव विरोधो भासत इति वक्तुं युज्यते विरोधविशिष्टसंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकधूमाभावावगाहिबाधकालीनतादृशसंशये विरोधविशिष्टसंयोगादिसम्बन्धेन पर्वते धूमभानासम्भवात् । न च तदानीं संशय एव नोत्पद्यत इति वाच्यम्, शुद्धसंयोगविरोधावच्छिन्नविशेषणताभ्यां तथाविधधूमतदभावकोठि(टि)कसंशयोत्पत्तौ बाधकाभावात् ।

एवं शुद्धसंयोगपर्याप्तसांसर्गिकविषयतानियामकबाधाभावादिघटितसामग्र्या अपि विरोधविशिष्टसंयोगसंसर्गकज्ञानाव्यवहितप्राक्क्षणे सत्त्वेन तस्यापि शुद्धसंयोगपर्याप्तविषयताशालितया तथाविधसंशयव्यावृत्त(वर्त)नमप्यशक्यमेव । न च शुद्धसंयोगपर्याप्तविषयताशालिबुद्धिं प्रति विरोधविशिष्टसंयोगसंसर्गकज्ञानसामग्र्याः प्रतिबन्धकत्वकल्पनात्तथाविधसंशयव्यावर्तनं सम्भवतीति वाच्यम्, तथाविधानन्तसामग्रीप्रतिबन्धकताकल्पने महागौरवप्रसङ्गात् ।

---

१. कोष्ठकान्तर्गतः पाठः अधिको मातृकायामत्रानावश्यकः ।

२. 'तत्र' इति सम्पातादायातम् ।

वस्तुतस्तु संशये विरोधस्य संसर्गतया भाने मानाभावेन वह्निव्याप्यधूमवान्न वा पर्वत इत्यादिनिखिलसंशयादनुमित्यापत्तिर्ब्रह्मणाऽपि दुर्वारा। न च संशयस्य समुच्चयवैलक्षण्यानुरोधात् संशये विरोधभानस्यावश्यं स्वीकरणीयतया विरोधानुपस्थितिकालीनसंशये विशेषणताज्ञानविरहेण विरोधस्य प्रकारतया भानासम्भवात्तस्य संसर्गतासिद्धिरिति वाच्यम्, विरोधानुपस्थितिकाले संशयस्याप्रामाणिकतया संशयसमुच्चययोर्वैलक्षण्यानुरोधेन संशये विरोधस्य प्रकारताया एव स्वीकरणीयत्वात्। न च तत्तल्लिङ्गकनिखिलपरामर्शसाधारणनिश्चयत्वनिर्वचनान्यथानुपपत्त्यैव विरोधस्य संसर्गता कल्प्यत इति वाच्यम्, तदसम्भवेऽपि हेतुतावच्छेदकभेदेन परामर्शहेतुतासम्भवात्। न चैवं सत्यनन्तकार्यकारणभावकल्पने गौरवमिति लाघवाद् विरोधस्य संसर्गतासिद्धिरिति वाच्यम्, कार्यकारणभावबलाद्विषयतासिद्धौ तुल्ययुक्त्या संशयव्यावृत्तां निखिलधूमालोकादिनिश्चयमात्रनिष्ठामतिरिक्तवह्न्यादिनिरूपितविलक्षणविषयतां स्वीकृत्य तादृशविषयतावत्त्वेन धूमालोकादिनिखिललिङ्गकानुमितिहेतुतापत्तेः। एवमपि वाह( बहु )पदार्थघटितव्याप्त्यादिविषयतानां तथाविधनिश्चयत्वस्य चानिवेशेन लाघवसम्भव( वा )त्। तस्मादेतादृशा( श )बाधकस्य जागरूकतया कार्यकारणभावलाघवबलाद् विषयतासिद्धिरप्रामाणिकीति न किञ्चिदेतदिति।

अत्रोच्यते—स्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्व-स्वावच्छिन्नवह्न्यादिव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन प्रकारविशिष्टज्ञानत्वमेव प्रकृते व्याप्यवत्तानिर्णयत्वम्। भेदप्रतियोगितावच्छेदकता च स्वनिष्ठावच्छेदकतानिरूपिता या आ( अ )नुयोगितासम्बन्धावच्छिन्नावच्छेदकता, तन्निरूपकाभावप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्ना ग्राह्या। वह्निव्याप्यालोकवान्न वा पर्वतः पर्वतो वह्निव्याप्यधूमवांश्चेत्याद्यांशिकनिर्णयोऽपि तथाविधोभयसम्बन्धेन धूमत्वरूपप्रकारविशिष्टः। ता(त)त्र हि धूमाभावस्याप्रकारता(त)या दर्शिततथाविधपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वसम्बन्धेन धूमत्ववतो भेदस्य सत्त्वाद् धूमत्वावच्छिन्नव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वस्यापि तत्र सत्त्वाच्च। अत्र तादृशभेदप्रतियोगितावच्छेदकताघटकसम्बन्धान्तःपातिस्वनिष्ठावच्छेदकतायां स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धेन व्याप्यत्वनिष्ठावच्छेदकताभिन्नावच्छेदकताविशिष्टं यत्तदन्यत्वं विशेषणं देयम्। अन्यथा नीलधूमाभाववान् पर्वतो वह्निव्याप्यधूमवांश्च पर्वत इत्याद्याकारकनिर्णयासङ्ग्रहप्रसङ्गात्। विशिष्टधूमत्वस्य धूमत्वानतिरिक्ततया नीलधूमत्वावच्छिन्नाभावस्यापि धूमत्वावच्छिन्नाभावत्वात्। तथाविधविशेषणे दत्ते तु नैष दोषः, तत्र हि धूमत्वनिष्ठाया अभावप्रकारतानिरूपितधूमादिनिष्ठानुयोगितासंसर्गावच्छेदकतायाः स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धो( न्धे )न नीलनिष्ठा-

वच्छेदकतानिरूपितान( नु )योगितासंसर्गावच्छिन्नधूमादिनिष्ठावच्छेदकतावच्छेदकतायाः स्वनिरूपकावच्छेदकतानिरूपितत्वं ( त्व ) सम्बन्धेन व्याप्यत्वनिष्ठावच्छेदकताविशिष्टत्वेऽपि न क्षतिः, तादृशधूमत्वनिष्ठावच्छेदकताता( ता ? )यां स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धेन व्याप्यत्वनिष्ठावच्छेदकताभिन्नावच्छेदकताविशिष्टान्यत्वसम्भवात् ।

एवं तथाविधस्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वमपि निवेशनीयम् । तेन जातिविशेषत्वादिना धूमत्वादिकमभावविशेषणतापन्नधूमाद्यंशेऽवगाहमानस्य जातिविशेषवदभाववान् पर्वतो वह्निव्याप्यधूमवांश्च पर्वत इत्यादिनिर्णयस्य नासङ्ग्रहः । तत्र तादृशधूमत्वनिष्ठावच्छेदकताया जातिविशेषत्वावच्छिन्नत्वात् । एवं सावच्छिन्नव्याप्यत्वावच्छिन्नप्रकारतेत्यत्र स्वावच्छिन्नत्वं स्वनिष्ठावच्छेदकतानिरूपकत्वम् । तत्रापि स्वनिष्ठावच्छेदकतायामुक्तविशेषणं[1] देयम् । तेन वह्निव्याप्यनीलधूमवान् न वा पर्वत इत्याद्याकारकसंशयीयाभावप्रकारतानिरूपितधूमादिप्रकारतानिरूपितधूमत्वादिनिष्ठावच्छेदकतायाः स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धेन नीलादिनिष्ठावच्छेदकताविशिष्टत्वेऽपि जातिविशेषवान्न वा इत्यादिसंशयीयाभावप्रकारतानिरूपितधूमादिप्रकारतानिरूपितधूमत्वादिनिष्ठावच्छेदकतायाः स्वावच्छिन्नत्वेऽपि च न क्षतिः । प्रथमे धूमत्वादिनिष्ठायाः पक्षविशेष्यतानिरूपितप्रकारतावच्छेदकतायाः स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धेन तादृशनीलादिनिष्ठावच्छेदकताविशिष्टत्वात्, द्वितीये तथाविधधूमत्वादिनिष्ठावच्छेदकताया जातिविशेषावच्छिन्नत्वात् । नीलधूमत्वाद्यवच्छिन्नलिङ्गकपरामर्शाणाञ्च भवन्मत इवैतन्मतेऽपि पृथगेव हेतुत्वम् । तथाप्येतन्मते शुद्धधूमत्वालोकत्वादिरूपलिङ्गतावच्छेदकभेदेन परामर्शकारणतादिभेदाभावेन लाघवस्याक्षतत्वात् ।

एतेन विशिष्यहेतुतावच्छेदकविषयतामनिवेश्य वह्न्याद्यभाववदवृत्तित्वावच्छिन्नप्रकारताशालिनिर्णयत्वेनानुमितिहेतुत्वे व्यभिचारस्य हेत्वाभासतानुपपत्तिः, व्यभिचारज्ञानसत्त्वेऽप्युपदर्शितकारणतावच्छेदकावच्छिन्नस्य व्याप्य( प्त्यं )शे निर्धर्मितावच्छेदकग्रहस्योत्पत्तौ [ बा ]धकाभावेन तदानीमनुमित्युत्पादेन तस्यानुमितिविरोधित्वाभावात् । न चानुमितिजनकीभूत–यत्वि ( त्कि ) चिज्ञा ( ञ्चिज्ज्ञा )-नविरोधिज्ञानविषयत्वेनेव हेत्वाभासत्वस्वीकारे ( र इति वाच्यम्, ) धूमलिङ्गकानुमितिजनकीभूतधूमद्रव्यत्वोभयलिङ्गकसमूहालम्बनपरामर्शविरोधिज्ञानविषयतया द्रव्यत्वनिष्ठवह्निव्यभिचारस्यापि धूमलिङ्गकानुमितौ हेत्वाभासतापत्तेः । तथा च यत्प्रयुक्तः क्वचिद् अनुमित्यनुत्पादः स एव हेत्वाभासः । न च व्यभिचारप्रयुक्तः

---

१. निरवच्छिन्नत्वविशेषणम् ।

कुत्राप्यनुमित्यनुत्पादस्तज्ज्ञानसत्त्वेऽपि निर्धर्मितावच्छेदकव्याप्तिग्रहोत्पत्त्याऽनुमित्युत्पादस्यावश्यकतया तज्ज्ञानस्यानुत्पादप्रयोजकत्वविरहादित्यपि निरस्तम्, निर्धर्मितावच्छेदकव्याप्तिग्रहस्योपदर्शितोभयसम्बन्धेन प्रकारविशिष्टत्वाभावादनुमित्यजनकतयाऽनुमितिजनकोभूतसधर्मितावच्छेदकव्याप्तिग्रहविरोधित्वेनैव[1] व्यभिचारस्य हेत्वाभासत्वोपपत्तेरिति ।

अथ भवन्मते वह्निव्याप्यधूमवान् पर्वतः पर्वतो वह्निव्याप्यधूमवांश्चेत्यादिसमुच्चयात्मकज्ञानादनुमित्यनुदयप्रसङ्गस्ता( स्त )स्य तादृशपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वसम्बन्धेन धूमत्वादिविशिष्टतया तद्भेदस्य तत्राभावादिति चेन्न, संशयसमुच्च[ य ]योर्वैलक्षण्योपपत्ते ए ( त्तये ) [2]अवच्छेदकावच्छेदेनान्यतरकोट्या( ट्य )वगाहिज्ञानं संशयाः( यः ), सामानाधिकरण्यमात्रेणोभयकोट्यवगाहिज्ञानं समुच्चय इत्यवश्यमुपगन्तव्यम् । एवञ्च पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिपरामर्शस्य पक्षतावच्छेदकावच्छिन्नत्वावगाहिपरामर्शस्य च हेतुताया भिन्नत्वेन पक्षतावच्छेदकसामानाधिकरण्यमात्रावगाहिपरामर्शहेतुतायां भेदप्रतियोगितावच्छेदकताघटकसम्बन्धान्तर्गताभावप्रकारतायां पर्वतत्वाद्यवच्छिन्नविशेषणतासंसर्गावच्छिन्नत्वस्य द्वितीयसम्बन्धघटकीभूतव्याप्यत्वावच्छिन्नप्रकारतायां शुद्धसंयोगसंसर्गावच्छिन्नत्वस्य च निवेशनेन तथाविधपरामर्शनिष्ठानुमितिजनकतावच्छेदकाक्रान्ततया तादृशसमुच्चयान्नानुमित्यनुपपत्तिः ।

केचित्तु सर्वत्र संशये समुच्चयवैलक्षण्याय कोट्यधिकरणयोः संसर्गतावच्छेदकतया परस्परं विरोधो भासत इति वह्निव्याप्यधूमवान्न वेति संशये धूमस्य धूमाभावाधिकरणावृत्तित्वरूपविरोधावच्छिन्नसंयोगो धूमाभावस्य [च] धूमाधिकरणावृत्तित्वरूपविरोधावच्छिन्नविशेषणताविशेषः संसर्गतया भासते । तथा च स्वावच्छिन्नप्रतियोगिताकाभावनिष्ठप्रकारतानिरूपितविरोधावच्छिन्नविशेषणताविशेषनि[ ष्ठ ]सांसर्गिकविषयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताकभेदकत्व - व्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टज्ञानत्वमेव हेतुतावच्छेदकाद्यघटितं समुच्चयसाधारणं निश्चयत्वम् ।

ननु धूमाधिकरणावृत्तित्वादिरूपविरोधस्य हेतुतावच्छेदकधूमत्वादिघटितत्वात् कथं धूमत्वादिकमनिवेश्यैता( त )न्निश्चयत्वं सुवचम् । न च किञ्चिद्धर्मावच्छिन्ना-

---

१. विरोधित्वेन-विरोधिज्ञानविषयत्वेन ।

२. 'अवच्छेदकावच्छेदकावच्छेदेन' इति पाठो मातृकायाम् ।

वच्छेदकतानिरूपिता याऽधिकरणनिष्ठावच्छेदकता, तन्निरूपिता याऽऽधेयत्वनिष्ठावच्छेदकता, तन्निरूपिता याऽभावनिष्ठावच्छेदकता तन्निरूपकत्वमेव विरोधावच्छिन्नत्वपदार्थः। तथा च न हेतुतावच्छेदकनिवेश इति वाच्यम्, यत्राव्याप्यवृत्तित्वज्ञानकालीने वह्निव्याप्यधूमवान् धूमाभाववांश्च पर्वत इति समुच्चय आलोकाधिकरणावृत्तित्वरूपविरोधावच्छिन्नविशेषणताविशेषस्य धूमाभावसम्बन्धत्वेन मा( भा )नं तादृशसमुच्चयासङ्ग्रहादिति चेन्न, तद्धर्मावच्छिन्नविरोधस्यैव तद्धर्मावच्छिन्नाभावसंसर्गतावच्छेदकतया भानाङ्गीकारेणालोकाधिकरणावृत्तित्वरूपविरोधावच्छिन्नविशेषणतासंसर्गकधूमाभावप्रकारकज्ञानस्यालीकतया स्वावच्छिन्नाभावप्रकारतानिरूपिता या किञ्चिद्धर्मावच्छिन्नाधिकरणावृत्तित्वरूपविरोधावच्छिन्नविशेषणताविशेषनिष्ठसांसर्गिकविषयता, तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वघटितोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टज्ञानत्वरूपनिर्णयत्वस्यानुमितिजनकतावच्छेदकत्वे दोषाभावात्।

वस्तुतस्तु स्वविशिष्टा या विशेषणताविशेषनिष्ठसांसर्गिकविषयता, तन्निरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वस्य भेदप्रतियोगितावच्छेदकतावच्छेदकसम्बन्धत्वाभ्युपगमान्न दोषः। सांसर्गिकविषयतायां स्ववैशिष्ट्यञ्च स्वनिष्ठावच्छेदकतानिरूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितत्व–स्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतानिरूपकाधिकरणनिष्ठावृत्तित्व( निष्ठ ? )रूपविरोधावच्छिन्न[ त्वैतदुभयसम्बन्धेन ][1]। विशेषणतासंसर्गकधूमाभावप्रकारकसमुच्चयीयविशेषणताविशेषनिष्ठसांसर्गिकविषयतायाञ्च नैतादृशोभयसम्बन्धेन कस्यापि धर्मस्य वैशिष्ट्यम्। धूमत्वस्य द्वितीयसम्बन्धविरहात्, आलोकत्वस्य च प्रथमसम्बन्धविरहादिति स्यादेतत्। यत्र संशये शुद्धविशेषणताविशेषसम्बन्धेन धूमाभावस्य, धूमाभावाधिकरणावृत्तित्वरूपविरोधावच्छिन्नसंयोगादिना [च] धूमस्यावगाहनं तादृशसंशयवारणासम्भवः, तस्य धूमाभावप्रकारतानिरूपितविरोधा[ वच्छिन्न ]विशेषणतासंसर्गकत्वाभावात्। न च सर्वत्र संशये कोटिद्वयाधिकरणयोरेव संसर्गतावच्छेदकतया कोटिद्वयस्य विरोधो भासत इति वाच्यम्, विरोधावच्छिन्नविशेषावच्छिन्नप्रतियोगिताकधूमाभावाभावस्य निर्णयकाले शुद्धविशेषणताविशेषेण धूमाभावप्रकारकस्य, विरोधावच्छिन्नसंयोगादिना च धूमप्रकारकस्य संशयस्योत्पत्तौ बाधकाभावात्, कोटिद्वयस्यैव भासकसामग्रीसत्त्वाद् विरोधविषयकस्य समुच्चयत्वासम्भवात्। एवं यत्र संशये कोट्यधिकरणयोः संसग( र्ग )तावच्छेदकत्वेन विरोधस्य न भानमपि तु स्वातन्त्र्येणैककोट्यंशेऽपरकोटेर्विरोधसम्बन्धेन भानं तादृशसंशयवारणासम्भवः। एवमेककोट्यंशेऽपरकोटिविरोधप्रकारकस्यापि संशयस्य न वारणं सम्भवति।

१. अत्र मातृकायां पाठो भ्रष्ट इति प्रतीयते।

एतेन स्वनिष्ठनिरुक्तसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदवत्त्व-व्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितशुद्धसंयोगनिष्ठसांसर्गिकविषयतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टज्ञानत्वं निर्णयत्वमिति परास्तम् ।

मैवम्, स्वावच्छिन्नाभावप्रकारतानिरूपितपक्षतावच्छिन्नविशेष्यताकत्व-स्वावच्छिन्नप्रकारतानिरूपितविरोधावच्छिन्नसंयोगानिष्ठसांसर्गिकविषयतानिरूपितपव-(र्व)तत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिता(क ?)वच्छेदकताकभेदवत्त्वस्यापि निवेशनीयत्वात् । स्वावच्छिन्नप्रकारतानिरूपितविरोधावच्छिन्नसंयोगादिनिष्ठसांसर्गिकविषयतेत्यस्य स्वावच्छिन्नप्रकारतानिरूपितत्व-स्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकाधेयत्वनिष्ठावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकत्वोभयसम्बन्धेन स्वविशिष्टसंयोगनिष्ठसांसर्गिकविषयतेत्यर्थः । तेन यत्र वह्निव्याप्यधूमवान् धूमाभाववांश्चेति समुच्चय आलोकाभावाधिकरणावृत्तित्वरूपविरोधावच्छिन्नसंयोगस्य धूमसम्बन्धत्वेन भानं तादृशसमुच्चयस्य नासङ्ग्रहः । यत्र संशये का(को)द्यधिकरणयोः संसर्गतावच्छेदकविधया न विरोधभानं किन्तु स्वातन्त्र्येणैककोट्यंशे विरोधसम्बन्धेनापरकोटेः प्रकारतया भान(नं) तादृशस्य धूमाभावांशे विरोधसम्बन्धेन धूमावगाहिनः संशयस्य वारणाय स्वावच्छिन्नप्रकारतानिरूपितत्व-स्वावच्छिन्नावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकाधेयत्वनिष्ठावच्छेदकतानिरूपकाभावनिष्ठसांसर्गिकविषयतानिरूपकत्वोभयसम्बन्धेन स्ववि(वि)शिष्टा या विशेष्यता तद्वत्त्व-स्वावच्छिन्नभावप्रकारतानिरूपितया(प)क्षतावच्छेदक(का)वच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन स्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वमपि सम्बन्धे निवेशनीयम् । एवं धूमांशे विरोधसम्बन्धेन धूमाभाव(वा)वगाहिसंशयवारणाय स्वावच्छिन्नाभावप्रकारतानिरूपितत्वस्वावच्छिन्नावा(व)च्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकाधेयत्वनिष्ठावच्छेदकतानिरूपकाभावनिष्ठसांसर्गिकविषयतानिरूपकत्वोभयसम्बन्धेन स्वविशिष्टविशेष्यतावत्त्व-स्वावच्छिन्नाभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वमपि सम्बन्धे निवेश्यम् । यत्र संशये धूमाभावांश(शे)धूमाधिकरणवृत्तित्वं प्रक(का)रस्तद्वारणाय च स्वावच्छिन्नावच्छेदकतानिरूपकाधिकरणनिष्ठप्रकारतानिरूपिताधेयत्वनिष्ठप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिताभावनिष्ठप्रकारतानिरूपितत्व-स्वावच्छिन्नाभावस्वावच्छिन्नत्वोभयसम्बन्धेन स्वविशिष्टविशेष्यतावत्त्व-स्वावच्छिन्नाभावप्रकारतानिरूपितावच्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदक[ ताक ]भेदवत्त्वं

निवेश्यम् । धूमांशे धूमाभावाधिकरणावृत्तित्वरूपविरोधप्रकारकस्य संशयस्य वारणाय स्वावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठप्रकारतानिरूप - काधिकरणनिष्ठप्रकारतानिरूपकाधेयत्वनिष्ठप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरू- पित्ताभ(भा)वनिष्ठप्रकारतानिरूपितत्व–स्वावच्छिन्नत्वोभयसम्बन्धेन स्वविशिष्टविशे- ष्यतावत्त्व–स्वावच्छिन्नाभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकत्वो- भयसम्बन्धेन स्वविशिष्टविशेष्यतावत्त्व-स्वावच्छिन्नाभावप्रकारतानिरूपितपक्षताव- च्छेदकावच्छिन्नविशेष्यताकत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताक– भेदकत्वमपि निवेश्यम् ।

वस्तुतस्तु सर्वत्र संशये समुच्चयवैलक्षण्यायैककोट्यंश कोट्यन्तरविरोधस्य प्रकारतयैव भानमुपेयते । न च विरोधानुपस्थितिकालीनसंशये विरोधस्य प्रकारतया भानासम्भवः, विरोधस्याभावरूपतया धूमाधिकरणादिरूपविशृंखलपदार्थविषयक- ज्ञानाद्विशेष्ये विशेषणमिति रीत्या तद्भानस्यासम्भवादिति वाच्यम्, विरोधानुपस्थिति- कालीनसंशयस्याप्रामाणिकत्वात् । यदा संशयोऽनुभवसिद्धः फलबलेन तत्पूर्वमन्ततः स्मरणादिरूपस्यैव विरोधज्ञानस्य कल्पनात् । यदा च प्रत्येकं कोटिद्वयोपस्थिति- रानुभविको विरोधज्ञानाभावश्च प्रामाणिकस्तदुत्तरं विरोधज्ञानानन्तरमेव क्षणैक- विलम्बेन संशयः । क्षणैकविलम्बस्य [ सं ]शयस्य निर्णयत्वात् । न च तदानीं कोटिद्वयोपस्थित्यनन्तरमेव प्रत्येककोटिविशिष्टबुद्धिसामग्रीबलात् प्रत्येककोटि- विशिष्टबुद्ध्यापत्तिः, इष्टापत्तौ च द्वितीयक्षणेऽपि संशयानुपपत्तिः, पूर्वज्ञानस्य विरोधाविषयकत्वेन निर्णयतयाऽव्याप्यवृत्तित्वज्ञानाभावसहितस्य विपरीतकोटिविशिष्ट- बुद्धिसामान्यप्रतिबन्धकत्वादिति वाच्यम्, विरो[ ध ]स्य संसर्गतया भानेऽपि विरोधसम्बन्धेनैककोट्यंशेऽपरकोटेर्बाधि( धे )विरोधावच्छिन्नसंयोगेन तादृश- विशेषणतया कोट्योरधिकरणांशे बाधे विरोधोपस्थितिशून्यकाले प्रत्येकसामग्री- वशात् कोटिद्वयविशिष्टबुद्ध्यापत्तेः । इष्टापत्तौ च क्षणद्वयविलम्बेनापि संशया- सम्भवात् । तद्वारणाय यदि विरोधसम्बन्धविषयकतद्धर्मिके( कै )ककोटिक- विशिष्टबुद्धिं प्रत्यपरकोटिविरोधभासकसामग्र्यभावविशिष्टाव्याप्यवृत्तित्वज्ञानाभाव- विशिष्टापरकोटिविशिष्टबुद्धिसामग्र्याः प्रतिबन्धकत्वं कल्प्यते तदापि विरोधा- प्रकारकैकको[ टिक ]विशिष्टबुद्धिं प्रत्यपरकोटिविरोधानुपस्थितिविशिष्टापरकोटि- विशिष्टबुद्धिसामग्र्याः प्रतिबन्धकत्वस्य कल्पनीयतया न तादृशापत्तिरिति । न च विरोधस्य संसर्गतयैव भानं कुतो नोपेयत इति वाच्यम्, बाह्यपदार्थघटितविरोध- सांसर्गिकविषयतायाः कुत्रापि ज्ञानेऽकल्पनात् क्लृप्तविषयतयैव संशयसमुच्चय- योर्वैलक्षण्यापत्तावतिरिक्तविषयतायां मानाभावात् । संशयातिरिक्तज्ञाने विरोधस्य सांसर्गिकविषयताया अनुभवसिद्धत्वेऽपि संशयसमुच्चयवैलक्षण्याय विरोधस्य

संसर्गता संशये स्वीक्रियते तदनुरोधेन घटादेर्वेत्यत्र विनिगमनाविरहाद् विरोधस्य संसर्गताया ज्ञानान्तरे क्लृप्तत्वे घटादेरपि सांसर्गिकविषयताया ज्ञानान्तरे क्लृप्त-त्वेनाक्लृप्तकल्पनाविरहात् ।

अथ कोट्योर्वि( वि )रोधित्वज्ञानदशायां संशयानुत्पादस्य( स्या )नुभव-सिद्धत्वेन विरोधस्यैव संसर्गताभ्युपगमो न घटादेः । तथा सति कोट्योरविरुद्धत्व-ज्ञानदशायामपि संशयापत्तेः । घटादिसंसर्गकज्ञानेऽविरुद्धत्वज्ञानस्याविरोधित्वा-दिति घटादिसंसर्गकज्ञानं प्रत्यप्यविरुद्धत्वज्ञानस्य प्रतिबन्धकत्वकल्पने च गौरव-( वं, ) विरोधस्य सांसर्गिकविषयतास्वीकारे तु विरोधज्ञानं प्रत्यविरुद्धत्वज्ञानस्य क्लृप्तप्रतिबन्धकतया निर्वाह इति चेन्न, विरोधसंसर्गकज्ञानं प्रत्यप्यविरुद्धत्वज्ञान-प्रतिबन्धकत्वाकल्पनात् । न हि संसर्गांशे बाधः प्रतिबन्धकः, अतिरिक्तप्रतिबन्धकता-कल्पने तु घटादिसंसर्गकज्ञानं प्रत्यपि प्रतिबन्धकत्वकल्पनसम्भवादित्याहुः ।

अन्ये तु स्वावच्छिन्नविषयतानिरूपिताधिकरणविषयतानिरूपिताधेयत्व-विषयतानिरूपिताभावविषयतावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताक-भेदवत्त्व-व्याप्तिप्रकारतानिरूपितस्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नवि - शेष्यकत्वोभयसम्बन्धेन प्रकारविशिष्टज्ञानत्वमेव निर्णयत्वम् । तादृशाभावविषय-तावत्त्वञ्च स्वनिरूपकत्व[स्व]निरूपिताभावविषयतावि(व)च्छेदकावच्छिन्नप्रकारता-निरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन बोध्यम् । संशयसमुच्चय-योर्वैलक्षण्यानुरोधेन संशये विरोधभानमवश्यमङ्गीकार्यम् । तत्र चोपस्थितविरोधस्य प्रकारतया भानमनुपस्थितस्य च संसर्गतयेति विशेषः । एवञ्च वह्निव्याप्यधूम-वानयं धूमविरुद्धधूमाभाववानित्याकारकविरोधप्रकारकसंशयस्य तथाविधाभाव-विषया(य)तावत्त्वसम्बन्धेन धूमत्ववत्ता( त्त )या तद्भेदस्य तत्रासत्त्वेन तद्घटितो-भयसम्बन्धेन प्रकारविशिष्टत्वाभावान्न ततोऽनुमितिः । एवं सांसर्गिकविषय-तादिसाधारणविषयतात्वेनाधिकरणविषयतादीनां निवेशाद् विरोधसंसर्गकस्य निवि(खि)लसंशयस्य व्यावृत्तिः । अत्रैककालीनत्वसम्बन्धेन विरोधप्रकारकसा(स)मुच्च-यसङ्ग्रहाय स्वरूपसम्बन्धानवच्छिन्नप्रकारतान्यत्वमभावविषयतायां निवेशनीयं न तु स्वरूपसम्बन्धावच्छिन्नत्वम् । तथा स[ति]विरोधसंसर्गकस्य सङ्ग्रहापत्तेः । न चैवं व्याप्तिप्रकारतया संसर्गतया वा धूमाभावादिप्रतियोगिकविरोधावगाहिनः संशयादनु-मित्यापत्तिरिति वाच्यम्, स्वावच्छिन्नविषयतानिरूपिताभावविषयतानिरूपिताधिक-रणविषयतानिरूपितवृत्ति[त्व]विषयतानिरूपिताभावविषयतावत्त्वसम्बन्धावच्छिन्नस्व-निष्ठप्रतियोगितावच्छेदकताकभेदान्तरस्यापि कारणतावच्छेदकतावच्छेदकसम्बन्धमध्ये

निवेशनीयत्वात् । तादृशाभावविषयतावत्त्वञ्च स्वनिरूपकत्व-स्वनिरूपितविषयतावच्छेदकावच्छिन्नप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन बोध्यम् । अत्र च सांसर्गिकविषयतादिसाधारणविषयतात्वेनैवाभावविषयतादीनां निवेशाद् धूमाभावप्रतियोगिकविरोधप्रकारकानां तथाविधविरोधसंसर्गकारणं(काणां)च निखिलसंशयानामेव वारणं सम्भवतीति न काप्य[ नुपपत्तिः ]वृत्तित्वञ्च तद्धर्मविशिष्टे तद्धर्मावच्छिन्नाभावाधिकरणवृत्तित्वमेव । एवञ्च सावच्छिन्नत्व-स्वावच्छिन्नप्रतियोगितासंसर्गावच्छिन्नप्रकारतानिरूपिताभावप्रकारतानिरूपिताधिकरणप्रकारतानिरूपितवृत्तित्वप्रकारतानिरूपितत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टा या स्वीयविशे(शे ?)ष्यता तदवच्छेदकावच्छिन्नत्वसम्बन्धावच्छिन्नाज्ञानत्वावच्छिन्नप्रतियोगिताकाभावविशिष्टा या स्वावच्छिन्नप्रकारता तन्निरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपिताभावप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टज्ञानत्वमेव हेतुतावच्छेदकाघटितं निर्णयत्वम् । ज्ञाने च तत्पुरुषीयत्वां(त्वं)निवेशनीयम् । तेनैकपुरुषीय-धूमो धूमाभावाधिकरणवृत्तिरित्यव्याप्यवृत्तित्वज्ञानान्तरोत्प[त्तौ त]त्र पुरुषान्तरीयसंशयान्नानुमित्यापत्तिः ।

वस्तुतस्तु स्वसमानाधिकरणज्ञानाभावविशिष्टस्वीयप्रकारत्वाभावविशिष्टत्व-स्वनिरूपितत्वोभयसम्बन्धेन ज्ञानविशिष्टव्याप्यप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताशालिज्ञानत्वमेव निर्णयत्वम् । अत्र विशिष्टत्वान्तस्य स्वनिष्ठावच्छेदकतानिरूपकाधिकरणनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकज्ञाना - (न) त्वावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठावच्छेदकतानिरूपकत्वस्वनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन स्वविशिष्टा या प्रकारतानिष्ठप्रतियोगिता, तन्निरूपकाभाववत्त्वमित्यर्थः । ज्ञानाभावश्च स्वीयपूर्वोक्तोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टा या विशेष्यता, तदवच्छेदकावच्छिन्नत्वसम्बन्धावच्छिन्नप्रतियोगिताको बोध्यः । प्रकारत्वाभावश्च स्वनिरूपितप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपिताभावप्रकारतानिरूपितविशेष्यतावच्छेदका - वच्छिन्नविशेष्यतानिरूपितत्व-स्वावच्छेदकावच्छिन्नत्वोभयसम्बन्धावच्छिन्नप्रति - योगिताको बोध्यः । धूमाभावाधिकरणावृत्तिर्धूम इत्याद्याकारकाव्याप्यवृत्तित्वज्ञानोत्तरोत्पन्ने वह्निव्याप्यधूमवान् तदभाववांश्च पर्वत इत्याद्याकारकसमुच्चये च प्रतियोगितासम्बन्धावच्छिन्नधूमादिप्रकारकज्ञानाभावविशिष्टा तदानीं (ा तदानीं ?) तादृशसमुच्चयात्मकज्ञानसमानाधिकरणस्योक्ताव्याप्यवृत्तित्वज्ञानस्य निरुक्तसम्बन्धेन समुच्चयात्मकज्ञानीयप्रतियोगितासम्बन्धावच्छिन्नधूमादिप्रकारतायां सत्त्वादतो ज्ञानाभावविशिष्टप्रकारतायास्तदानीं तादृशज्ञानीयव्याप्यप्रकारतायामभावसत्त्वात्तादृशसमुच्चयादनुमित्यनुपपत्तिः ।

एवं प्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपिताभावप्रकारतायां स्वावच्छिन्न-प्रतियोगिताकाभावत्वावच्छिन्नत्व-स्वावच्छिन्नप्रकारतानिरूपिताधिकरणप्रकारतानि-रूपितवृत्तित्वप्रकारतानिरूपितत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टा या स्वीय-विशेष्यता तदवच्छेदकावच्छिन्नत्वसम्बन्धावच्छिन्नस्वसमा[ना]धिकरणज्ञानत्वा-वच्छिन्नप्रतियोगिताभावविशिष्टत्वं निवेशनीयम्। तेन धूमाधिकरणावृत्तिर्धूमाभाव इत्याद्याकारकाव्याप्यवृत्तित्वज्ञानोत्तरोत्पन्नाद् वह्निव्याप्यधूमवान् तदभावांश्च पर्वत इत्याद्याकारकसमुच्चयादपि नानुमित्यनुपपत्तिरित्यूचुः।

नवीनास्तु सर्वत्र संशये विरोधादिभानस्याप्रामाणिकतया समुच्चयवैलक्षण्याय संशये भावाभावोभयप्रकारतानिरूपितैकैव विशेष्यताऽभ्युपेयते।

समुच्चये च भावाभावोभयप्रकारतानिरूपितविशेष्यता भिन्नैव। अत एव विरुद्धोभयप्रकारतानिरूपितैकविशेष्यताशालिज्ञानं संशय इति संशयलक्षणमुपायकारै-रुक्तम्। एवञ्च प्रकारताद्वयानिरूपितव्याप्यप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्न-विशेष्यताशालिज्ञानत्वमेव निर्णयत्वम्। प्रकारताद्वयानिरूपितत्वञ्च स्वनिष्ठप्रकारत-(ता)निरूपितत्व-स्वभिन्ननिष्ठप्रकारतानिरूपितत्वोभयसम्बन्धेन प्रकार[1]विशिष्टान्य-त्वम्। नातो द्वित्व(त्व)स्य दुर्वचत्वेऽपि क्षतिः। न चोक्ताऽपि विशेष्यता संशयसाधारण्य-तस्तन्नियामकसामग्र्याः संशयपूर्वं सत्त्वादिति वाच्यम्, तादृशविशेष्यताशालिबुद्धिं प्रति संशयसामग्र्याः प्रतिबन्धकत्वस्वीकारात्। न चेदमेव गौरवमिति वाच्यम्, परामर्शस्यानु-मितिकारणतायां व्याप्याभावादिविशिष्टबुद्धिप्रतिबन्धकतायां भिन्नविषयकानुमिति-सामग्रीनिष्ठविषयभेदभिन्नानन्तप्रतिबन्धकतायाञ्च लघुतरनिश्चयत्वस्यावच्छेदक-कोटिनिवेशादवच्छेदकलाघवेन बहुतरकार्यकारणभावाकल्पनेन च तथाविधसंशयसामग्री-प्रतिबन्धकत्वकल्पनायां गौरवाभावात्। न चैतादृशरूपेणानुमितिं प्रति हेतुत्वे व्याप्त्यंशे निर्धर्मितावच्छेदक[क]ग्रहस्याप्यनुमितिहेतुता व्यभिचारस्य हेत्वाभासत्वानुपपत्तिरिति वाच्यम्, कथायां परोपन्यस्तहेतौ व्यभिचारे समुद्भाविते‍ऽप्रामाण्यसंशयानास्कन्दितपरा-मर्षा(र्शा)नुपपत्त्या तस्य हेत्वाभासत्वसम्भवात्। सधर्मितावच्छेदक[क]ज्ञान-विरोधितामादाय तल्लक्षणासत्त्वाच्च।

वस्तुतस्तूक्तसंशयसमुच्चययोर्वैलक्षण्याय संशये भावाभावप्रकारतानिरूपिता-(त)विशेष्यतयोरवच्छेद्यावच्छेदकभावः स्वीक्रियते। एवञ्च वह्न्यादिव्याप्या-भावप्रकारतानिरूपितविशेष्यतानवच्छिन्ना या वह्न्यादिव्याप्यत्वावच्छिन्नप्रा(प्र)-कारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यता, तच्छालिज्ञानत्वमेव निर्णयत्वम्।

---

१. प्रकारताविशिष्टान्यत्वमिति पाठो मातृकायाम्।

एतेनैकत्र द्वयमिति रीत्या वह्निव्याप्यधूमवह्निव्याप्यालोकाभावादिकमवगाहमानस्य वह्निव्याप्यालोकाभाववान् पर्वतो वह्निव्याप्यधूमवान् इत्यादिनिर्णयस्यासङ्ग्रहप्रसङ्गस्तस्य वह्निव्याप्यधूमवान् पर्वतो वह्निव्याप्यालोकाभाववांश्च पर्वत इत्याद्याकारकसमूहालम्बनाद् वैलक्षण्योपपत्तये धूमालोकाभावादिप्रकारतानिरूपितैकविशेष्यताशालित्वस्यावश्यं स्वीकरणीयत्वात्। अवैलक्षण्य इष्टापत्तौ चानुभवविरोधात्। एवं पर्वतत्वावच्छेदेन वह्निव्याप्यधूमादिकं नीलपर्वतत्वविशिष्टे च तदभावमवगाहमाने संशये विशेष्यतयोरैक्यासम्भवेन तस्मादनुमित्यापत्तिसम्भवश्च। अवच्छेदकभेदाद् नीलपर्वतो वह्निव्याप्यधूमवान्न वेत्यादिसंशयादवैलक्षण्यापाताच्चेति परास्तम्, एकत्र द्वयमिति रीत्योक्तनिर्णये भावाभावप्रकारतानिरूपितविशेष्यतयोरैक्येऽपि तया( यो )रवच्छेद्यावच्छेदकभावस्यानङ्गीकारेणाद्यदोषाभावात्। उक्तसंशये च तादृशविशेष्यतयोरैक्यासम्भवेऽप्यवच्छेद्यावच्छेदकभावबाधकाभावेन द्वितीयदोषस्याप्यभावात्। यदि च संशये प्रकारतैव कोटिताख्या विलक्षणानुमन्यते तदा तु तत्कोटितान्यत्वं व्याप्यप्रकारतायां विशेषणं देयमिति न समुच्चयासङ्ग्रह इति प्राहुः।

ननु भवन्मते धूमाभाववद्विशेष्यतानिरूपितत्वावच्छिन्नधूमप्रकारित्वानिरूप[क]नानाविधाप्रामाण्यग्रहाणामेकत्रानुमितिजनकतावच्छेदककोटौ निवेशनीयतयैकविधपरामर्शकालेऽन्यविधाप्रामाण्यग्रहसते( त्वे )ऽनुमित्यनुपपत्तिरतस्तद्वारणाय तत्तदप्रामाण्यग्रहाभावान् पृथक्-पृथग् निवेश्य धूमत्वालोकत्वादिरूपहेतुतावच्छेदकभेदेन परामर्ष( र्श )हेतुताः कल्पनीयाः। एवञ्च साध्याभाववदवृत्तित्वज्ञानहेतुतामते हेतुतावच्छेदकभेदेन परामर्शहेतुतादिभेदो दुर्वार एव। न चाप्रामाण्यग्रहाभावस्यानुमितिं प्रति स्वातन्त्र्येण हेतुतयाऽनुमितिजनकतावच्छेदककोटौ निवेशनीयतयैकविधपरामर्ष( र्श )कालेऽन्यविधाप्रामाण्यग्रहसत्त्वेऽनुमित्यनुपपत्तिरतस्तद्वारणाय तत्तदप्रामाण्याभावनिवेश एव नास्तीति वाच्यं धूमपरामर्शसत्त्व इदं ज्ञानं धूमाभाववति धूमप्रकारकमित्यप्रामाण्यग्रहसत्त्वेऽनुमित्युदयप्रसङ्गात्। आलोकपरामर्शकाल एतादृशाप्रामाण्यग्रहसत्त्वेऽनुमित्युत्पत्तिप्रयोजिकाया अन्यादृशाप्रामाण्यग्रहाभाववह्निव्याप्यत्वावच्छिन्नप्रकारताशालिनिर्णयत्वावच्छिन्नाद्यात्मककारणस्तोमघटितसामग्र्याः प्रकृतेऽप्यक्षतत्वात्। आलोकपरामर्शत्वस्य जनकतानवच्छेदकतया तदवच्छिन्नाभावस्य कारणतावच्छेदकावच्छिन्नसमुदायात्मकसामग्र्यभावासम्पादकत्वात्।

न च धूमाभाववद्विशेष्यितानिरूपितत्वावच्छिन्नधूमप्रकारित्वादिरूपनिखिलाप्रामाण्यग्रहाणां स्वीयधूमाभाववद्विशेष्यितानिरूपितत्वप्रकारतानिरूपितविशेष्यतावच्छेदकधूमप्रकारितात्वादिसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावोऽनुमितिजनकतावच्छेदककोटिप्रविष्टव्याप्यप्रकारितायां निवेश्यते। तथा च तावदभावकूटविशिष्ट-

व्याप्यप्रकारिताशालिनिर्णयत्वेनानुमितिं प्रत्येकैव हेतुता कल्प्यते। धूमपरामर्शकाल आलोकाभाववत्यालोकप्रकारकमित्यप्रामाण्यग्रहसत्त्वेनानुमित्यनुपपत्तिः, आलोकाभाववद्विशेष्यितानिरूपितत्वप्रकारतानिरूपितविशेष्यतावच्छेदकालोकप्रकारितात्व–सम्बन्धेनाप्रामाण्यग्रहस्य तदीयव्याप्यप्रकारतायामभावेन तथाविधाप्रामाण्यग्रहाभावकूटस्य तत्र सत्त्वादिति वाच्यम्, तथा सति तादृशाभावकूटस्य परस्परं विशेष्यविशेषणभावे विनिगमनाविरहेण कारणतानन्त्यादवच्छेदकगौरवाच्च। न च तेष्वभावेषु व्यासज्यवृत्तिमकां ( वृत्यात्मिकां ) कारणातावच्छेदकतावच्छेदकतामुपगम्य कारणत्वतदवच्छेदकत्वयोरैक्यमुपपादनीयमिति वाच्यम्, अवच्छेदकताय( या ) व्यासज्यवृत्तित्वस्यान्यत्र दूषितत्वेन तथा वक्तुमशक्यत्वात्।

यत्तु निखिलाप्रामाण्यग्रहाणां किञ्चिद्धर्मावच्छिन्नाभाववद्विशेष्यितानिरूपितनिरूपितत्वप्रकारतानिरूपितप्रका[रित्व]निष्ठविशेष्यतानिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकधर्मावच्छिन्नत्वसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रतियोगिताक एक एवाभावो व्याप्यप्रकारितायां निवेश्यत इति न नानाविधाप्रामाण्यग्रहाभावनिवेशानुरोधेन हेतुतावच्छेदे(द)कभेदेन कार्यकारणभावभेद इति, तदप्यसत्, तथा सत्यालोकाभाववति धूमप्रकारक[1]मित्यप्रामाण्यग्रहदशायां धूमपरामर्षा(र्शा)दनुमित्यनुत्पादप्रसङ्गात्, तादृशविशेष्यतावच्छेदकतावच्छेदकधर्मे स्वीयप्रकारित्वनिष्ठविशेष्यतानिरूपितनिरूपितत्वप्रकारतानिरूपितविशेष्यित्वप्रकारतानिरूपिताधिकरणप्रकारतानिरूपिताभावप्रकारतानिरूपितप्रतियोगिप्रकारतावच्छेदकत्वस्याधिकस्य निवेशने च धूमाभाववत्यालोकप्रकारकमालोकाभाववत्यालोकप्रकारकञ्चेदमित्यप्रामाण्यग्रहकाले धूमपरामर्षा(र्शा)दनुमित्युपपादनासम्भवात्। धूमत्वस्य तज्ज्ञानीयतया तादृशप्रतियोगिप्रकारतावच्छेदकत्वात् तदीयतथाविधविशेष्यतावच्छेदकतावच्छेदकत्वाच्च।

किञ्च घटज्ञानेऽतीतधूमपरामर्शे वाऽप्रामाण्यग्रहसत्त्वे विद्यमानधूमपरामर्शादेस्तन्मतेऽनुमित्यनुपपत्तिरिति न किञ्चिदेतदिति चेत्,न, पक्षविशेष्यतानिरूपितप्रा(प्र)कारतावज्ज्ञानत्वेनैव परामर्शस्यानुमितिहेतुत्वम्। प्रकारतावत्त्वञ्च व्याप्यत्वधर्मितावच्छेदकतापन्नस्वावच्छेदकधर्मविशिष्टप्रकारित्वप्रकारतानिरूपितविशेष्यत्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववत्त्व-स्वनिरूपकत्वोभयसम्बन्धेन प्रकारतायां तथाविधधर्मविशेष्य[त्व]ञ्च स्वावच्छिन्नाभाववद्विशेष्यितानिरूपितत्वावच्छिन्नत्व-स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन बोध्यम्। धूमपरामर्शकाल इदं ज्ञानमालोकाभाववद्विशेष्यितानिरूपितालोकप्रकारिताशालीत्यप्रामाण्यग्रहसत्त्वेनानुमित्यनुपपत्तिस्तत्र व्याप्यत्वधर्मितावच्छेदकतापन्नस्वाव-

१. इदं ज्ञानमिति शेषः। एवमन्यत्रापि।

च्छेदकीभूतधूमत्वविशिष्टप्रकारतानिरूपितविशेष्यत्वस्य तादृशपरामर्शेऽसत्त्वेन तद्घटितोभयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववत्त्वस्य तदानीं तत्र सत्त्वात्। एवं घटज्ञानादावतीतधूमपरामर्शे चाप्रामाण्यग्रहसत्त्वे विद्यमानधूमपरामर्शादितोऽप्यनुमित्युत्पत्तौ न किञ्चिद् बाधकम्। तत्रापि व्याप्यत्वधर्मितावच्छेदकतापन्नस्वावच्छेदकतापन्नस्वावच्छेदकीभूतधूमत्वादिविशिष्टप्रकारतानिरूपितविशेष्यत्वस्य विद्यमानधूमपरामर्शेऽभावेन तद्घटितोभयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववत्त्वस्य तादृशपरामर्शेऽक्षतत्वात्। स्वावच्छिन्नाभाववद्विशेष्यितानिरूपितत्वावच्छिन्नत्वञ्च स्वनिष्ठावच्छेदकतानिरूपिता या प्रतियोगितासम्बन्धावच्छिन्नावच्छेदकता तन्निरूपिता याऽभावनिष्ठावच्छेदकता, तन्निरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितविशेष्यित्वनिष्ठावच्छेदका(क)तानिरूपितनिरूपितत्वनिष्ठावच्छेदकतानिरूपकत्वम्। वास्तवस्वावच्छिन्नाभावादिनिवेशे धूमाभावत्वादिनाऽभावान्तरावगाह्यप्रामाण्यज्ञानास्कन्दितपरामर्शादनुमित्यापत्तेः। स्वनिष्ठावच्छेदकता च स्वनिरूपकावच्छेदकतानिरूपितत्वसम्बन्धेन व्याप्यत्वनिष्ठावच्छेदकतान्यावच्छेदकताविशिष्टं यत्तदन्या ग्राह्या। तेन नीलधूमत्वस्य धूमत्वानतिरेकितया नीलधूमाभाववति धूमप्रकारकमित्येतादृशज्ञानीयप्रकारित्वप्रकारितायाा अपि धूमत्वावच्छिन्नाभाववद्विशेष्यितानिरूपितत्वावच्छिन्नत्ववत्त्वेऽपि न तादृशाज्ञानकालीनधूमपरामर्श(र्शा)दनुमित्यनुपपत्तिः। व्याप्यत्वनिष्ठावच्छेदकतान्यत्वस्यावच्छेदकतायां निवेशाच्च वह्निव्याप्यधूमाभाववति वह्निव्याप्यधूमप्रकारकमित्यप्रामाण्यग्रहकाले न धूमपरामर्शादनुमित्यापत्तिः।

न चैवं सति वह्निव्याप्यधूमा[भा]ववति धूमप्रकारकमित्याकारकज्ञानस्य नीलधूमाभाववति धूमप्रकारकमित्यादिज्ञानसमशीलतयाऽप्रामाण्यज्ञानानात्मकत्वात्तत्कालीनधूमपरामर्शादुत्पद्यमानायाः सर्वसम्मतानुमितेरनुपपत्तिः, तत्र धूमत्वनिष्ठावच्छेदकतायाः स्वनिरूपकावच्छेदकतानिरूपकत्वसम्बन्धेन व्याप्यत्वनिष्ठावच्छेदकतान्या या नीलादिनिष्ठावच्छो(च्छे)दकता, तद्विशिष्टान्यत्वादिति वाच्यम्, तादृशस्थलेऽनुमित्युत्पादस्य प्रामाणिकत्वे स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वेत्यत्रावच्छेदकतायां साध्यव्याप्यत्वावच्छिन्नत्वस्यापि निवेशनीयत्वात्। व्याप्यत्वादिप्रकारकाणां धूमाभाववति धूमप्रकारकमित्याद्यप्रामाण्यग्रहाणाञ्च [पृ]थगेवाभावा निवेशनीयाः, तत्र च सामान्यतोऽवच्छेदकताविशिष्टान्यत्वमेव स्वनिष्ठावच्छेदकतायां निवेशनीयं न स्ववच्छेदकतांशे व्याप्यत्वनिष्ठावच्छेदकतान्यत्वमपि, प्रयोजनविरहात्।

एवं स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वेत्यत्राप्यवच्छेदकतायां साध्यव्याप्यत्वावच्छिन्नत्वं न नि[वेश]नीयम्। जातिविशेषवदभाववति धूमप्रकारमित्यादिज्ञानकाले धूमपरामर्शादनुमित्युत्पत्त्या स्वनिष्ठावच्छेदकतायां निरव-

च्छिन्नत्वमपि निवेशनीयम्[1]। नीलधूमाभाववति धूमप्रकारकमित्यादिज्ञानकाले धूमादिपरामर्शादनुमित्युत्पत्त्या स्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वमपि निवेशनीयम्। नीलधूमाभाववति नीलधूमप्रकारकम्, जातिविशेषवदभाववति जातिविशेषवत्प्रकारकमित्याद्यप्रामाण्यग्रहाणामभावाश्च वह्निव्याप्यनीलधूमवान् पर्वतः, वह्निव्याप्यजातिविशेषवद्वान् पर्वत इत्यादिपरामर्शाणां स्वतन्त्रहेतुतायामेव विवेश्यन्त इति न तत्तदप्रामाण्यग्रहदशायां तत्तत्परामर्शादनुमित्यापत्तिः।

अथ वह्निव्याप्यालोकवान्न वा पर्वतः पर्वतो वह्निव्याप्यधूमवांश्चेति समूहालम्बनसत्त्वे तत्र चेदं ज्ञानं धूमाभाववति धूमप्रकारकमित्यप्रामाण्यग्रहे पर्वतो वह्निमानित्यनुमित्यापत्तिर्दुर्वारैव तादृशपरामर्शस्य व्याप्यत्वधर्मितावच्छेदकतापन्नस्वावच्छेदकीभूतालोकत्वविशिष्टप्रकारित्वप्रकारतानिरूपितविशेष्यत्वघटितोभयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववत्त्वस्वनिरूपकत्वैतदुभयसम्बन्धेन पक्षविशेष्यतानिरूपितालोकनिष्ठप्रकारतावत्त्वात् तस्य धूमत्वावच्छिन्नाभावाप्रकारकतया स्वनिष्ठावच्छेदकताकभेदवत्त्व-स्वावच्छिन्नव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन धूमत्वरूपप्रकारविशिष्टत्वेन तथाविधनिर्णयत्वस्यापि तत्र सत्त्वाच्चेति चेत्, न, स्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वे पै(त्व-प)र्वतत्वावच्छिन्नविशेष्यतानिरूपितस्वावच्छिन्नव्याप्यत्वावच्छिन्नप्रकारतावत्त्वैतदुभयसम्बन्धेन प्रकारविशिष्टज्ञानत्वेनैवानुमितिं प्रति हेतुत्वमुच्यते, तादृशप्रकारतावत्त्वञ्च तथाविधा(धो)भयसम्बन्धावच्छिन्नप्रतियोगिताकज्ञानाभाववत्त्व-स्वनिरूपकत्वोभयसम्बन्धेन बोध्यम्। एवञ्चोक्तस्थले नानुमित्यापत्तिः सम्भवति तादृशपरामर्श आलोकत्वनिरूपितत्वस्य स्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वरूपसम्बन्धस्यासत्त्वेन स्वपदेनालोकत्वस्य धर्तुमशक्यतया धूमत्वस्यैव धर्तव्यत्वेन तदवच्छिन्नप्रकारतायास्तथाविधाभयसम्बन्धस्य च तत्राभावादिति।

केचित्तूपदर्शितोभयसम्बन्धेन प्रकारविशिष्टज्ञानत्वरूपनिर्णयत्वशरीरस्य (रे) द्वितीयसम्बन्धविधया घटकीभूता या स्वावच्छिन्नप्रकारता, तत्र निखिलाप्रामाण्यप्रकारताः स्वावच्छिन्नाभाववद्विशेष्यत्वावच्छिन्नत्वप्रकारतानिरूपितत्व-स्वावच्छिन्ननिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकताकत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टप्रकारित्वप्रकारतात्वेनानुगमय्य ज्ञानीयतादृशप्रकारितानिष्ठप्रकारतायाः स्वनिरूपितनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितविशेष्यतानाश्रयज्ञाननिष्ठनिरूपितत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभाववत्त्वोभयसम्बन्धेनाभावो निवेश्यते। शेषं पूर्ववत्। एवञ्च न काप्यनुपपत्तिरित्याहुः।

---

१. तादृशावच्छेदकताया जातित्वावच्छिन्नत्वान्नोक्तापत्तिः।

ननु तथापि धूमालोकादिनिखिलपरामर्शाणामेकरूपेणानुमितिहेतुत्वे सिद्धिकाले धूमलिङ्गकेच्छासत्त्वे सति चालोकलिङ्गकपरामर्शे धूमलिङ्गकपरामर्शं विनैव धूमलिङ्गकेच्छाविरहविशिष्टसिद्धयभावरूपकारणबलाद् धूमलिङ्गकानुमित्यापत्तिः। भवन्मते धूमपरामर्शत्वादीनामनुमितिजनकतानवच्छेदकतया तादृशसिद्धयभावेन फलजनने तदवच्छिन्नत्वस्य सहकारित्वविरहेण वह्निव्याप्यवत्तानिर्णयत्वावच्छिन्नत्वस्यैव सहकारितया तदवच्छिन्नस्यालोकपरामर्शस्यैव तत्र सत्त्वादतस्तद्वारणाय धूमलिङ्गकानुमितित्वाद्यवच्छिन्नं प्रति धूमलिङ्गकपरामर्शत्वादिना हेतुत्वमवश्यं कल्पनीयम्। एवञ्च हेतुतावच्छेदकभेदेन परामर्शकारणतादिबाहुल्यं भवन्मतेऽपि दुर्वारमेवेति चेत्, न, धूमलिङ्गकानुमितित्वाद्यवच्छिन्नं प्रति धूमलिङ्गकेच्छाविरहविशिष्टसिद्धयभावत्वादिना न पक्षताया हेतुत्वम्, तथा सति लिङ्गभेदेनानन्तकार्यकारणभावकल्पने गौरवात्। किन्तु सामान्यतः पर्वतोद्देश्यकवह्निविधेयकानुमितित्वाद्यवच्छिन्नं प्रति वह्निव्याप्यवत्तानिर्णयविशिष्टपर्वतत्वावच्छिन्नोद्देश्यतानिरूपितत्वावच्छिन्नवह्निविधेयकत्वप्रकारताकानुमितिगोचरेच्छाविरहविशिष्टसिद्धयभावत्वा--दिनैकमेव हेतुत्वमुच्यते। वह्निव्याप्यवत्तानिर्णयविशिष्टत्वञ्च व्याप्तिधर्मितावच्छेदकतापन्नपक्षविशेष्यतानिरूपितस्वप्रकारतावच्छेदकधर्मावच्छिन्नलिङ्गकत्वप्रकारतानिरूपितानुमितिनिष्ठविशेष्यताकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन। धूमादिलिङ्गकत्वप्रकारेच्छा च नैतादृशोभयसम्बन्धेनालोकलिङ्गकपरामर्शविशिष्टेति न तथाविधेच्छाकाले सिद्धिसत्त्व आलोकपरामर्शादनुमित्यापत्तिरिति धूमपरामर्शत्वादिना कारणताकल्पनं विनैवोपपत्तिरिति। अत्र च स्वावच्छिन्नलिङ्गकत्वप्रकारतानिरूपितत्व-स्वभिन्नधर्मावच्छिन्नलिङ्गकत्वप्रकारतानिरूपितत्वोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टान्यत्वं तादृशानुमितिनिल( ष्ठ )विशेष्यतायां निवेशनीयम्। अन्यथैकत्र द्वयमिति रीत्यैकविशिष्टेऽपरवैशिष्ट्यमिति रीत्या वा धूमलिङ्गकत्वालोकलिङ्गकत्वोभयप्रकारकानुमित्साकाले सिद्धिसत्त्वे तथाविधैकमात्रलिङ्गकपरामर्शादप्यनुमित्यापत्तेः।

अथ वह्निव्याप्यालोकवान्न वा पर्वतः पर्वतो वह्निव्याप्यधूमवानित्याकारकनिर्णयदशायां सिद्धिसत्त्व आलोकमात्रलिङ्गकेच्छासत्त्वे पर्वतो वह्निमानित्यनुमित्यापत्तिः, तादृशेच्छायां तथाविधज्ञानस्य व्याप्यत्वधर्मितावच्छेदकतापन्नस्वप्रकारतावच्छेदकधर्मालोकत्वावच्छिन्ना( न्न )लिङ्गकत्वप्रकारतानिरूपितानुमितिनिष्ठविशेष्यताकत्वरूपसम्बन्धस्य सत्त्वेन तदघटितोभयसम्बन्धेन तादृशेच्छाया वह्निव्याप्यवत्ताज्ञानविशिष्टत्वात् स्वनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्व-स्वावच्छिन्नव्याप्यत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताकत्वोभयसम्बन्धेन प्रकारविशिष्टत्वेन तादृशज्ञानस्यानुमितिजनकत[ ा ]वच्छेदकीभूततथाविधनिश्चय-

त्वावच्छिन्नत्वाच्चेति चेत्, न, व्याप्यत्वधर्मितावच्छेदकतापन्नपक्षविशेष्यता-निरूपितस्वप्रकारतावच्छेदकत्व-स्वनिष्ठभेदप्रतियोगितानिरूपितस्वावच्छिन्नाभाव-प्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताकत्वसम्बन्धावच्छिन्नावच्छेदकत्वोभय-सम्बन्धेनस्वविशिष्टधर्मावच्छिन्नलिङ्गकत्वप्रकारतानिरूपितपर्वतत्वाद्यवच्छिन्नविशे-ष्यताकत्वसम्बन्धावच्छिन्नावच्छेदकत्वोभयसम्बन्धेन स्वविशिष्टधर्मावच्छिन्नलिङ्ग-कत्वप्रकारतानिरूपितपूर्वोपदर्शितोभयसम्बन्धेन किञ्चिद्धर्मविशिष्टान्यानुमितिनिष्ठ-विशेष्यताकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन वह्निव्याप्यवत्तानिर्णयादिविशिष्टत्व-स्येच्छायां निवेशनात् ।

अत्र प्रथमं स्वपदद्वयं वह्निव्याप्यवत्तानिर्णयपरम् । द्वितीयस्वपदञ्च संशयादा-वभावप्रतियोगितावच्छेदकत्वेन भासमानधूमत्वादिरूपधर्मपरम् । एवञ्चोक्तस्थले नानुमित्यापत्तिस्तत्र तादृशज्ञानस्य स्वावच्छिन्नाभावप्रकारतानिरूपितपर्वतत्वाव-च्छिन्नविशेष्यताकत्वसम्बन्धेनालोकत्ववत्त्वात्तद्भेदस्य तत्रासत्त्वेनालोकत्वस्यातथा-त्वात् । धूमत्वस्यैव तादृशतया तदवच्छिन्नलिङ्गकत्वप्रकारकत्वस्य तथाविधेच्छायामभावेन तादृशेच्छाया उपदर्शितोभयसम्बन्धेन व्याप्यवत्तानिर्णयविशिष्टत्वाभावात् ।

ननूक्तरूपेण सिद्ध्यभावस्यैक्येऽनुमितिर्जायतामित्याद्यननुगतेच्छानां तत्तद्व्यक्ति-त्वेनैवोत्तेजकतया निखिललिङ्गकपरामर्शकालीनतादृशेच्छाभावकूटस्यैकत्र निवेशेन तस्य विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तकार्यकारणभावानन्त्यप्रसङ्गः । लिङ्गभेदेन कारणताभेदे तु तत्तल्लिङ्गकपरामर्शकालीनतादृशेच्छानामभावसमुदायस्य तदन्यलिङ्गकपरामर्शकालीनतादृशेच्छानामभावसमुदायस्य चैकत्रानिवेशात्तस्य च पर-स्परं विशेष्यविशेषणभावप्रयुक्तकार्यकारणभावानन्त्यप्रसङ्गाभावाल्लाघवम् ।

न च तादृशाननुगतेच्छानामनुमितित्वप्रकारकेच्छात्वाद्यनुगतरूपेणैवोत्तेजकत्वान्न दोष इति वाच्यम्, तथा सति घटाद्यनुमितिसामग्रीसत्त्वे पर्वतो वह्निमानिति सिद्धिसत्त्वे वह्निव्याप्यधूमादिमत्तानिर्णयदशायामनुमितिर्जायतामिति( ती )च्छानन्तरं पर्वतो वह्निमानित्यनुमित्यापत्तेः । न चेष्टापत्तिः, तदानीं तादृशसिद्ध्यप्रतिबध्यीभूतघटाद्यनु-मित्युत्पत्त्यैव तथाविधेच्छाविषयसिद्ध्येष्टापत्तेरयोगात् । तासां तत्तद्व्यक्तित्वेनोत्तेज-कत्वे तु नोक्तदोषः, घटाद्यनुमितिसामग्रीकालीनानुमितिर्जायतामितीच्छाव्यक्तीनां तत्तद्व्यक्तित्वेन[1] पर्वतो वह्निमानिति सिद्धिप्रतिबन्धकतायामुत्तेजकत्वानभ्युपगमेन तदानीं तथाविधेच्छाभावकूटविशिष्टोपदर्शितसिद्धिरूपप्रतिबन्धकसत्त्वेन वह्न्यनुमित्यु-त्पादासम्भवादिति चेत्, न, तासामप्यनुमितित्वप्रकारकेच्छात्वाद्यनुगतरूपेणैवोत्तेजक-

१. 'त्वेन न पर्व' इति पाठो मातृकायाम् ।

त्वात् । न चोक्तदोषः, घटाद्यनुमितिसामग्रीसमवधानकालीनेच्छानां तत्तद्व्यक्तित्वेन प्रतिबन्धकत्वाभ्युपगमात् ।

युज्यते चैतत् । अन्यथा तादृशेच्छानां तत्तद्व्यक्तित्वेनोत्तेजकत्वे लिङ्गभेदेन कारणताभेदेऽपि तल्लिङ्गकपरामर्शकालीनतादृशेच्छानामभावसमुदायस्य तदन्यलिङ्गकपरामर्शकालीनतादृशेच्छानामभावसमुदायस्य चैकत्रानिवेशेन तस्य[1] च परस्परं विशेष्यविशेषणभावप्रयुक्तकार्यकारणभावानन्त्यप्रसङ्गाभावेऽपि तत्तल्लिङ्गकपरामर्शकालीनतादृशेच्छानामेव ता(त)त्तद्व्यक्तिवे(त्वे)नाभावसमुदायस्य तत्तल्लिङ्गकानुमितिकारणतायां निवेशेन तस्य परस्परं विशेष्यविशेषणभावे विनिगमनाविरहप्रयुक्तकार्यकारणभावानन्त्यप्रसङ्गस्य दुर्वारत्वादिति । एवञ्च साध्याभाववदवृत्तित्वरूपव्याप्त्यवगाहिपरामर्शहेतुतामते हेतुतावच्छेदकभेदेन परामर्शहेतुताया अनुमितिप्रतिबन्धकतायाश्च भेदाभावप्रयुक्तलाघवमखण्डितमेवेति ।

स्यादेतत् । यद्युक्तरीत्या धूमालोकादिनिखिलपरामर्शाणामेकरूपेण हेतुत्वसम्भवेन साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानहेतुतामतेन निर्णयत्वानिर्वचनाद्यनुरोधेन हेतुतावच्छेदकानां विशिष्टनिवेश आवश्यकस्तदा व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानहेतुतामतेऽपि तन्निवेशनं विनैव सर्वमुपपादयितुं शक्यते । तथा हि–स्वविशिष्टव्यापकसामानाधिकरण्यविशेष्यतावच्छेदकतापन्नस्वावच्छिन्नत्वसम्बन्धेन किञ्चिद्धर्मविशिष्टप्रकारतात्वेन पक्षविशेष्यतानिरूपितनिखिलहेतुप्रकारता अनुगमय्य तन्निरूपितपर्वतत्वाद्यवच्छिन्नविशेष्यताशालिनिर्णयत्वेनैव हेतुत्वमुच्यते । धूमव्यापकवह्निसमानाधिकरणालोकवान् पर्वत इत्यादिनिर्णयश्च न तादृशसम्बन्धेन केनापि धर्मेण विशिष्टः, तादृशज्ञानीयपर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतायामालोकत्वावच्छिन्नत्वस्य सत्त्वेऽप्यालोकत्वविशिष्टव्यापकसामानाधिकरण्यविशेष्यतावच्छेदकत्वस्यालोकत्वेऽसत्त्वेन स्वपदेनालोकत्वस्योपादातुमशक्यत्वात्, पर्वतत्वावच्छिन्नविशेष्यतानिरूपितप्रकारतायां धूमत्वावच्छिन्नत्वविरहेण स्वपदेन धूमत्वस्याप्युपादानासम्भवाच्च । स्वविशिष्टव्यापकसामानाधिकरण्यविशेष्यतावच्छेदकत्वञ्च स्वनिष्ठावच्छेदकतानिरूपिका या हेतुप्रकारता, तन्निरूपिताधिकरणप्रकारतानिरूपिताधेयत्वप्रकारतानिरूपिताभावप्रकारतानिरूपितप्रतियोगित्वप्रकारतानिरूपितावच्छेदकत्वप्रकारतानिरूपिताभावप्रकारतानिरूपितवह्नित्वप्रकारतानिरूपितावच्छिन्नत्वप्रकारतानिरूपितवह्निप्रकारता - निरूपिताधिकरणप्रकारतानिरूपिताधेयत्वप्रकारतानिरूपितविशेष्यतावच्छेदकत्वम् । तेन [इन्]धनव्यापकवह्निसमानाधिकरणेध(न्ध)नवान् पर्वत इत्यादिज्ञानस्य वास्तववह्निनिष्ठेध(न्ध)नव्यापकत्वस्याप्रसिद्ध्या तदनवगाहित्वेऽपि न क्षतिः । नीलधूमव्यापक-

1. 'तस्य तस्य' इति आवृत्तपाठो मातृकायाम् ।

वह्निसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानका( वा )रणाय च स्वनिष्ठावच्छेदकतायां स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेनावच्छेदकताविशिष्टान्यत्वमपि निवेशनीयम् ।

नीलधूमत्वावच्छिन्नलिङ्गकपरामर्शादीनाञ्च त्वन्मत इव मन्मतेऽपि पृथगेव हेतुता स्वोक्रियते । एवं जातिविशेषविशिष्टव्यापकवह्निसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानवारणाय स्वनिष्ठावच्छेदकतायां निरवच्छिन्नत्वमपि निवेश्यम् । जातिविशेषत्वादिना धूमत्वादिलिङ्गतावच्छेदक[ ता ]स्थले च पृथगेव हेतुत्वमुच्यते । भवन्मतेऽपि तत्र पृथगेव हेतुताया वक्तव्यत्वात् ।

एवं धूमसमानाधिकरणघटाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसमानाधिकरणधूमवान् पर्वत इति ज्ञानवारणायाधेयत्वनिष्ठप्रकारतायां स्वनिरूपकप्रकारतानिरूपितत्वसम्बन्धेनाभावत्वान्यनिष्ठप्रकारताविशिष्टान्यत्वमपि निवेशनीयमिति ।

अथ तथाप्येतन्मते स्वरूपतो वह्नित्वविधेयतावच्छेदककानुमितेरनुपपत्तिः, तथा हि—एतन्मते धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमवान् पर्वत इत्यादिज्ञानस्यानुमितिहेतुत्वमङ्गीकार्यम्, तत्र च वह्नित्वत्वादिना वह्नित्वे हेतुसमानाधिकरणभावप्रतियोगितानवच्छेदकत्वावगाहनात्तदुत्तरं वह्नित्वत्वादिरूपेण वह्नित्वविधेयतावच्छेदककानुमितिरेवोत्पत्तुमर्हति, परामर्शस्य यद्रूपावच्छिन्नसाध्यतावच्छेदके हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वावगाहित्वं तद्रूपपुरस्कारेणैव साध्यतावच्छेदकावगाह्यनुमितिजनकत्वमिति नियमस्यावश्यमङ्गीकर्तव्यत्वात् । अन्यथा धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकजातिमत्समानाधिकरणधूमवान् पर्वत इत्यादिज्ञानादपि पर्वतो वह्निमानित्यनुमित्यापत्तेः ।

न च जातित्वावच्छिन्ने तादृशप्रतियोगितानवच्छेदकत्वावगाहिज्ञानस्य जातित्वावच्छिन्नविधेयतावच्छेदकताकानुमितिं प्रत्येव हेतुत्वम् । वह्नितत्वा( ह्नित्वा )द्यवच्छिन्ने तादृशप्रतियोगितानवच्छेदकत्वावगाहिज्ञानस्य तु स्वरूपतो वह्नित्वविधेयतावच्छेदकानुमितित्वमेव जन्यतावच्छेदकमिति तथाविधपरामर्शा[ त् ] तादृशानुमित्युत्पत्तौ न किञ्चिद्बाधकमिति वाच्यम्, तथा सति वह्नित्ववद्वान् इत्यनुमितेर्विलयप्रसङ्गात् । न च तथाविधानुमितित्वमपि तज्जन्यतावच्छेदकमिति वाच्यम्, असति बाधके पर्वतो वह्निमान् वह्नित्ववद्वांश्चेति द्विविधविषयताशाल्यनुमित्यापत्तेः ।

साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानहेतुतामत( ते ) च परामर्शेऽभावप्रतियोगितावच्छेदकतया यथा वह्नित्वादेर्भानं तथैवानुमितावपि वह्नित्वादेर्भानमिति न काप्यनुपपत्तिरिति चेत्, सामानाधिकरण्यनिरूपकतावच्छेदकतया स्वरूपता( तो ) वह्नित्वावगाही धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नवह्निसमानाधिकरणधूमवान् पर्वत इत्याकारक-पसंशमर्वः ( परामर्शः ) स्वरूपतो वह्नित्वविधेयतावच्छेदककानुमितौ हेतुः सामानाधिकरण्यनिरूपकतावच्छेदकतया वह्नित्वत्वरूपेण वह्नित्वावगाहिनो धूमसमानाधिकरणाभावप्रतियोगितानवच्छेदकवह्नित्ववत्समानाधिकरणधूमवान् पर्वत इति परामर्शस्य च वह्नित्वत्वावच्छिन्नविधेयतावच्छेदकताकानुमिति( तिं ) प्रत्येव हेतुत्वम् । एवमन्यत्रापोति न काप्यनुपपत्तिः ।

**नव्यास्तु** स्वावच्छिन्नत्व-संयोगादिसम्बन्धावच्छिन्नत्वोभयाभाववद्धेतु-समानाधिकरणभावप्रतियोगितासामान्यकवह्नित्वावच्छिन्नसमानाधिकरणधूमत्वादि-रूपैव व्याप्तिर्निर्वक्तव्या । तत्र च स्वपदार्थस्य वह्नित्वादेर्यथा निवेशस्तथैवानुमितौ विषयत्वं( स्य, ) व्यभिचारज्ञानमपि तादृशप्रतियोगितावच्छेदकधर्मिकतदुभयवत्ताज्ञानमिति नानुम ( पप ) त्तिलेशोऽपीत्याहुः ।

**केचित्त्व**नवच्छेदकत्वांशे निर्धर्मितावच्छेदक[ क ]परामर्व( र्शः ) स्वरूपतो वह्नित्वादिविधेयतावच्छेदककानुमितौ हेतुः । वह्नित्वत्वाद्यवच्छिन्नविधेयतावच्छेदकताकानुमितौ च वह्नित्वत्वावच्छिन्नेऽनवच्छेदकत्वावगाहो परामश( र्श ) इति नानुमितेर्नियमतो द्विविधविषयताशानि( लि )त्वप्रसङ्गः । न चानवच्छेदकत्वांशे निर्धर्मितावच्छेदकबोधस्य व्यभिचारज्ञानाप्रतिबध्यतया तस्यानुमितिहेतुत्वे व्यभिचारस्य हेत्वाभासदा( ता )नुपपत्तिरिति वाच्यम्, निर्धमि( र्मि )तावच्छेदकबोधस्य सधर्मितावच्छेदकज्ञानाप्रतिबध्यत्वेऽपि निर्धर्मितावच्छेदक[ क ]ज्ञानप्रतिबध्यतया निर्धर्मितावच्छेदक[ क ]स्य वह्नित्वविशेष्यकहेतुसमानाधिकरणां( णा )भावप्रतियोगितावच्छेदकत्वप्रकारकग्रहात्मकस्यैकव्यभिचारज्ञानस्य तादृशपरामर्शप्रतिबन्धकतायाः सुवचत्वेन व्यभिचारस्य हेत्वाभासत्वोपपत्तेः ।

धर्मितावच्छेदकभेदेन प्रतिबध्यप्रतिबन्धकभावस्य भिन्नतया प्रकृते निर्धर्मितावच्छेदकबोधसाधारणस्य वह्नित्वत्वातिरिक्तधर्मानवच्छिन्नविशेष्यताकत्वरूपस्यैव वह्नित्वत्वावच्छिन्नविशेष्यताकत्वस्य व्यभिचारज्ञानप्रतिबध्यतावच्छेदककोटिप्रविष्टतयोक्तदोषाभावाच्चेति वदन्ति ।

ननु तथापि व्यापकत्वं स्वप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकवत्त्वम् । तत्र च स्वपदं नाभावसामान्यपरम्, अभाव-

सामान्यप्रतियोग्यनधिकरणीभूतहेत्वधिकरणस्य सर्वत्राप्रसिद्धेः। किन्तु स्वपदं तत्तदभावपरमेव। तथा च तत्तदभावप्रतियोग्यनधिकरणहेत्वधिकरणवृत्तितत्तदभावप्रतियोगितावच्छेदकभेदकूटवत्साध्यतावच्छेदकवत्त्वमेव प्रकृते व्यापकत्वमिति पर्यवसन्नम्। एवञ्च भेदकूटस्य प्रातिस्विकरूपेग ज्ञानं युगसहस्रेणापि न सम्भवतोति व्यापकसामानाधिकरण्यरूपव्याप्तेर्दुर्ज्ञो( र्ज्ञे )यतया कथमनुमितौ त्त( त )ज्ज्ञानहेतुता। न च सामान्यतो हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकप्रतियोगिकभेदत्वादिना ज्ञानसम्भवान्न तादृशव्याप्तेदु( र्दु )र्ज्ञयत्वमिति वाच्यम्, व्यभिचारज्ञानाप्रतिबध्यतया तादृशसामान्यरूपेण ज्ञानस्यानुमित्यनुपयोगित्वात्[1]।

न च साध्याभाववदवृत्तित्वरूपव्याप्तावपि साध्याभावे स्वप्रतियोग्यनधिकरणवृत्तित्वस्य निवेशनीयतया तुल्यमिदं दूषणमिति वाच्यम्, तत्र प्रतियोगिपदस्य साध्यपरत्वेनाननुगमाभावादिति चेत्?

**अत्र केचित्**—स्वप्रतियोग्यनधिकरणहेत्वधिकरणवृत्तिमदभावान्तस्य स्वनिरूपकाभावनिरूपितत्व–स्वावच्छेदकावच्छिन्नाधिकरणानुयोगिकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्या या हेत्वधिकरणनिष्ठाधिकरणता, तन्निरूपकाभावेत्यर्थकतयाऽननुगमाभावोऽनु( वेनानु)पपत्त्यभावः। संयोगी द्रव्यत्वादित्यादौ च नाव्याप्तिस्तत्र द्रव्यादिनिष्ठसंयोगाभावं(वा)धिकरणता तथाविधोभयं(य)सम्बन्धेन संयोगत्वावच्छिन्नप्रतियोगिताविशिष्टैव,तदवच्छेदकसंयोगत्वावच्छिन्नाधिकरणानुयोगिकत्वस्य तन्निरूपकसंयोगाभावादिनिरूपकत्वस्य च सत्त्वात्। किन्तु तादृशोभयसम्बन्धेन प्रतियोगिताविशिष्टान्या हेत्वधिकरणनिष्ठाधिकरणता घटाभावाद्यधिकरणतेव, तन्निरूपकघटाद्यभावप्रतियोगितानवच्छेदकत्वस्य संयोगत्वे सत्त्वात्।

संयोगी सत्त्वादित्यादौ च नातिव्याप्तिः, तत्र गुणाद्यात्मकहेत्वधिकरणवृत्तिसंयोगाभावाधिकरणतायास्तादृशोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यत्वात्, अधिकरणभेदेनाधिकरणताभेदस्य सर्वैरेव स्वीकृतत्वादित्याह( हुः )।

तच्चिन्त्यम्, उपदर्शितोभयसम्बन्धेन प्रतियोगिताविशिष्टान्या या हेत्वधिकरणनिष्ठाधिकरणता तस्याः सर्वत्रैवाप्रसिद्धेः, सर्वस्या एवाधिकरणताया उपदर्शितोभव(य)सम्बन्धेन पूर्वक्षणवृत्तित्वविशिष्टत्वाभावरु( रू )पप्रतियोगिनिष्ठप्रतियोगिताव( व ? )विशिष्टत्वात्।

---

१. अनुमितिप्रतिबन्धकज्ञानविषयस्यैव हेत्वाभासतया तादृशसामान्यरूपेण ज्ञानं प्रति व्यभिचारज्ञानस्याप्रतिबन्धकत्वेन व्यभिचारस्य हेत्वाभासत्वानुपपत्तिः। अतस्तादृशसामान्यरूपेण ज्ञानस्यानुमित्यजनकत्वम्।

यदपि हेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तित्वमेवाभावविशेषणमुच्यते, न तु प्रतियोग्य[न]धिकरणवृत्तित्वम्। एवञ्च प्रतियोग्यनधिकरणवृत्तित्वस्य व्यापकसामानाधिकरण्यरूपव्याप्तिशरीरे प्रवेशाभावान्नाननुगमसम्भावनेति तदपि न्न(न), तथा सति कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभाववान्[1] आत्मत्वादित्यादावव्याप्तिप्रसङ्गात्।

वस्तुतस्तु स्वनिरूपकानुयोगिताविशिष्टनिरूपितत्वस्वावच्छेदकविशिष्टाधिकरणानुयोगिकत्वोभयसम्बन्धेन प्रतियोगिताविशिष्टान्यत्वं साध्यवनि(न्नि)ष्ठसाध्याभावाधिकरणताभिन्नत्वं वा हेतुमन्निष्ठाभावाधिकरणताविशेषणं देयमिति नाननुगमसम्भावना।

**नव्यास्तु** हेत्वधिकरणनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकावच्छिन्नत्वरूपमनुगतं प्रतियोगिवैयधिकरण्यनिरूपकत्वं प्रतियोगिताविशेषणं देयम्।

अथवा स्वावच्छ(च्छे)दकावच्छिन्नानधिकरणन(त्व)सम्बन्धेन हेत्वधिकरणनिष्ठप्रतियोगितावच्छेदकत्वस्वावच्छिन्नसामान्याभावघटितव्याप्तिज्ञानमेवानुमितिजनकमिति नानु(न)नुगम इत्याहुः।

अथ लघुरूपसमनियतगुरुरूपेण साध्यतायां व्यभिचारिण्यतिव्याप्तिवारणाय स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदककं यद्यत्स्वं तावद्भेदकूटविशिष्टसाध्या(ध्यता)वच्छेदकवत्त्वमेव व्यापकत्वमित्यवश्यं निर्वक्तं(क्त)व्यम्। तथा च तावद्भेदकूटज्ञानं युगसहस्रेणापि न सम्भवतीति व्यापकसामानाधिकरण्यरूपव्याप्तेर्दुरुद्धरतैवेति चेत्, न, साध्याभावन(व)दवृत्तित्वरूपव्याप्तिज्ञानहेतुतामतेऽपि लघुसमनियतगुरुधर्मावच्छिन्नसाध्यकसद्धेतौ साध्यतावच्छेदकावच्छिन्नप्रतियागिताकाभावाप्रसिद्ध्याऽव्याप्तेर्वारणाय साध्या(ध्य)तावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितानवच्छेदकधर्मावच्छिन्नाभाववदवृत्तित्वं विवक्षणीयम्। यत्र च साध्या(ध्य)तावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितान[व]च्छेदकत्वं न साध्यतावच्छेदकावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्न-

---

१. अत्र कालिकसम्बन्धः साध्यप्रतियोगितावच्छेदको न तु आकाशाभावप्रतियोगितावच्छेदकः, तस्य प्रथमोपस्थिताकाशाभावप्रतियोगितावच्छेदकत्वस्वीकारे तूक्तस्थलस्यासद्धेतुत्वं स्यात्। हेत्वधिकरणनिरूपितनिरवच्छिन्नवृत्तित्वस्याभावविशेषणत्वे प्रकृते तादृशाभावपदेन साध्याभावोऽपि धर्तुं शक्यते। साध्याभावस्य आकाशाभावस्वरूपस्य केवलान्वयितया हेतुसमानाधिकरणत्वात्। प्रतियोग्यनधिकरणत्वकल्पे तु साध्यात्मकप्रतियोग्यधिकरणे गगनादावपि गगनाभावात्मकसाध्याभावस्य वृत्तेः प्रतियोग्यनधिकरणत्वाभावेन घटाभावादिकमादाय लक्षणसमन्वयः।

प्रतियोगिताकभेदनत्व( वत्त्वम् )। तथा सति लघुसमनियतगुरुधर्मावच्छिन्नसाध्यक-सद्धेतावुक्ताव्याप्तेर्वारणासम्भवात्, तत्र प्रमेयवह्नित्वावच्छिन्नवन्निष्ठाभावाप्रतियोगितावच्छेदकत्वादेः स्वसमनियतवह्नित्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वाद्यपेक्षया गुरुत्वेन भेदप्रतियोगितानवच्छेदकत्वात्। किन्तु तत्तत्प्रतियोगितावच्छेदकव्या( व्य )क्तीः शृङ्गग्राहिकतयोपादाय त्ता( ता )वद्भेदकूटवत्त्वमेव तन्निर्वाच्यम्। तथा च तावद्भेदकूटस्य युगसहस्रेण ज्ञातुमशक्यतया भवन्मतेऽपि दुर्ज्ञेयतारूपदोषो दुरुद्धर एव। गुरुधर्मस्याभावप्रतियोगितावच्छेदकमतालम्बने चावयोस्तुल्य एव समाधिः। तस्माद् व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञाने( न )हेतुता[ या ]मपि हेतुतावच्छेदकभेदेन कार्यकारणभावानत्य( न्त्य )प्रयुक्ते( क्त )गौरवादिदोषाभावेन तज्ज्ञानहेतुत्वं निराबाधमेवेति, मैवम्, एवमपि व्यापकसामानाधिकरण्यरूपव्याप्तेर्गुरुशरीरतया तदपेक्ष[ या ]साध्याभाववदवृत्तिरूपव्याप्तेर्लघुशरीरतया शरीरलाघवप्रयुक्तलाघवस्यानपायेन तज्ज्ञानस्यैवानुमितिहेतुत्वौचित्यात्।

एतेन सर्वत्र साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानादेवानुमितिरिति न नियमः। परन्तु कुत्रचित्साध्याभाववदवृत्तित्क(त्व)रूपव्य(व्या)प्तिज्ञानात् कुत्रचिच्च व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानादपीत्यनियमपक्ष एव समीचीनः। तथा सत्याप्रामाण्यविशिष्टवह्निमत्पर्वतनिर्णयकालीनधूमव्यापकवह्निसमानाधिकरणधूमवान् पर्वतो वह्निमत्पर्वतवृत्तिघटवानित्यनन्तानुमितिसामग्रीणामनन्तभिन्नविषयप्रत्यक्षादिकं प्र[ति] प्रतिबन्धकत्वाकल्पनेन लाघवसम्भवात् तदानीं पर्वतविशेष्यकवह्न्यभाववत्तानिर्णयात्मकबाधबुद्ध्यभावाप्रामाण्यज्ञानानास्कन्दितसिद्ध्यभावादिघटितव्यापकसामानाधि - करण्यरू[प]व्याप्तिज्ञानघटित-पर्वतोद्देश्यकवह्निविधेयकानुमितिसामग्र्यास्तत्रावश्यकत्वात् तादृशसामग्र्याश्च भिन्नविषयकप्रत्यक्षादौ प्रतिबन्धकत्वस्य क्लृप्ततया तत एव तथाविधप्रत्यक्षाद्यनुत्पादोपपत्तेः।

न चैवं सति व्यापकसामाधिकरण्यरूपव्याप्तिज्ञानादेवानुमितिरुत्पद्यताम्, न तु साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानादिति वाच्यम्, साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानादनुमित्यभ्युपगमेऽप्यप्रामाण्यविशिष्टवह्निमत्पर्वतनिर्णयकालीनवह्न्यभाववदवृत्तिमत्पर्वता वह्निमत्पर्वतवृत्तिघटवानित्याद्यनन्तानुमितिसामग्र्या भिन्नविषयकप्रत्यक्षादौ प्रतिबन्धकत्वाकल्पनेन लाघवसम्भवात्।

न च नानाविधव्याप्तिज्ञानानामनुमितिहेतुत्वे त[त्त]त्कारणतायां परस्परं व्यभिचार इति वाच्यम्, क(का)र्यतावच्छेदककोटौ स्वाव्यवहितोत्तरत्वसम्बन्धेन तत्तद्व्याप्तिज्ञानवैशिष्ट्यस्य निवेशनीयत्वादित्यपि परास्तम्, सामग्रीप्रतिबन्धकत्वाकल्पनप्रयुक्तलाघवस्य तुल्यत्वेऽपि शरीरलाघवप्रयुक्तलाघवस्याधिक्येन साध्याभाववदवृत्तित्वरूपव्याप्तिज्ञानस्यैवानुमितिहेतुत्वस्य युक्तत्वात्।

ननु शरीरलाघवात्साध्याभाववदवृत्तित्वरूपव्याप्तिरेवानुमित्युपयोगिनीत्ययुक्तम्, व्यापकतागर्भव्याप्तौ वह्नित्वादिरूपसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्-वृत्तित्वाभावस्य च तुल्यशरीरत्वेन शरीरलाघवाभावात्। न च विशेषणस्योभयमते तुल्यशरीरत्वेऽपि व्यापकतागर्भव्याप्तौ साध्यसामानाधिकरण्यरूपाधिकांशस्य निवेशेन गौरवम्, एतन्मते तदनिवेशेन लाघवमिति वाच्यम्, एतन्मतेऽपि पर्याप्तसम्बन्धेन घटत्वादिसाध्यकघटपटोभयत्वादिहेतौ घटत्वाद्यभाववति प्रत्येकस्मिन् पटादौ घटपटो-भयत्वादेः पर्याप्तिसम्बन्धेनावृत्तितयातिव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेन साध्याधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तित्वरूपसाध्यसामानाधिकरण्यस्यावश्यं निवेशनीयत्वादिति चेत्, न, समुदायस्य प्रत्येकानतिरिक्तात्वया(क्ततया)प्रत्येकावृत्तेः समुदायावृत्तित्वनियमेन द्वित्वादेः पर्याप्तिसम्बन्धेन प्रत्येकस्मिन्नपि वृत्तितयोक्त-रीत्यातिव्याप्त्यभावेन साध्यसामानाधिकरण्यस्यानिवेशनीयत्वात्। न चेवम् 'एको न द्वौ' इत्यतो बोधानुपपत्तिः, एकस्मिन्नपि द्वित्वादिपर्याप्तेः सत्त्वेन पर्याप्तिसम्बन्धा-वच्छिन्नप्रतियोगितावच्छेदकताकभेदस्य बोधयितुमशक्यत्वादिति वाच्यम्, द्वित्वादि-पर्याप्तेरुभयादिवृत्तिधर्मावच्छेद्यत्वनियमेन तदनवच्छेदकैकमात्रवृत्तिधर्मावच्छेदेन तद्वद्-भेदस्य तद्वति वृत्तौ बाधकाभावात्।

अथैवं द्वित्वादेः पर्याप्त्या[ख्यविल]क्षणसम्बन्ध एव प्रमाणाभावः, 'इमौ द्वौ' इत्यादिप्रतीतेः समवाय(या)दिसम्बन्धविषयकत्वेनैवोपपत्तेः। 'एको द्वौ' इत्यादिप्रतीते-स्त्वेकत्वादेर्द्वित्वानवच्छेदकत्वादेव वारणात्। अन्यथा पर्याप्त्यङ्गीकारो(रेऽ)प्युक्तरीत्या तादृशप्रतीतेर्दुर्वारत्वादिति चेत्, न, द्वित्वादिकं द्व्यादौ पर्याप्तमिति प्रतीत्या तत्सिद्धेः।

वस्तुतस्तु पर्याप्त्याख्यविलक्षणसम्बन्धोऽप्रामाणिक एव, उक्तप्रतीत्या द्वित्वादौ द्वित्वाद्यवच्छिन्नवृत्तिकत्वस्य विषयीकरणात्। अन्यथा पर्याप्त्यङ्गीकारेऽप्युक्तरीत्याऽ-भि(नि)र्वाहात्। न चाभेदेनावच्छेद्यावच्छेदकभावानुपपत्तिरिति वाच्यम्, द्वित्वादिव्यक्ती-नां नानात्वेनैकस्य[1] द्वित्वादेर्वृत्तावपरस्यावच्छेदकत्वे बाधकाभावात्। न च पर्याप्त-(प्ते)रनङ्गीकारे 'एको न द्वौ' इत्यादिप्रतीतेः समवायसम्बन्धावच्छिन्नप्रतियोगिता-वच्छेदकताकभेदविषयकत्वमेव वाच्यम्। तच्च न सम्भवति, एकस्मिन्नपि द्वित्वादि-समवायसत्त्वादिति वाच्यम्, एकस्मिन् द्वित्वादिसमवायसत्त्वेऽपि द्वित्वादावुभयादि-प्रवृत्तिधर्मावच्छिन्नत्वोपगमेन 'तदनवच्छेदकैकत्वावच्छेदेन तद्वतो भेदस्य वृत्तौ बाधका-भावात्। अन्यथा पर्याप्त्यङ्गीकारेऽप्यगतेरित्यस्यासकृद(द्)विदितत्वात्।

---

१. 'द्वित्वादिव्यक्तीनेकस्य' इति पाठो मातृकायाम्।

अत्र **नव्याः**—"आकाशौ" इत्यादिवाक्यजन्यशाब्दबोधस्य भ्रमत्वोपपादनाय पर्याप्त्याख्यविलक्षणसम्बन्धस्वीकार आवश्यकः। तादृशबुद्धेः समवायविषयकत्वे घटाकाशादिवृत्तिद्वित्वसमवायस्याकाशादौ सत्त्वेन भ्रमत्वोपपादनस्याशक्यत्वात्। न चोभयवृत्तिधर्मावच्छेदेनैव समवायेन द्वित्वस्याकाशादौ वृत्तेराकाशत्वाद्यवच्छेदेन तेन सम्बन्धेन तदभावसत्त्वाद् भ्रमत्वमुपपद्यत इति वाच्यम्, वृक्षः संयोगवानित्यादि-ज्ञानस्य भ्रमत्वापत्तिवारणाय निरवच्छिन्नतदभाववति तत्प्रकारकज्ञानस्यैव भ्रमरूपा-(पत्वात्,) आकाशत्वाद्यवच्छिन्नद्वित्वाभाववता( त्व )मादाय भ्रमत्वस्योपपाद-यितुमशक्यत्वात्। न च पर्याप्तेः संसर्गतोपगमेऽपि तदो( ददो )षतादवस्थे( स्थ्य )-घटाकाशादौ द्वित्वादेः पर्याप्तिसत्त्वे प्रत्येकमाकाशादौ पर्याप्तिर्नास्तीत्यस्य वक्तु-मशक्यत्वात्, प्रत्येकस्योभयानतिरिक्तत्वादिति, ( वाच्यम् ? ) उद्देश्यतावच्छेदकव्याप्य-त्वविशिष्टसमवायस्य संसर्गतोपगमेनैव निर्वाहे किं पर्याप्त्येति वाच्यम्, तथा सति 'घटौ' इत्यादिवाक्यजन्यबोधस्यापि [ भ्र ]मत्वापत्तेः, समवायस्यैक्येन घटादि-निष्ठस्य द्वित्वादिसमवायस्य पटादावपि सत्त्वेन घटत्वाद्यव्याप्यत्वात्। न चोद्देश्यता-वच्छेदकव्याप्तिविशिष्टपर्याप्तेः संसर्गतोपगमेऽपि कथं भ्रमत्वोपपत्तिः, तादृशा(श)-विशिष्टसंसर्गस्याप्रसिद्धत्वेव(न) तेन सम्बन्धेन भ्रमत्वायोगादिति वाच्यम्, द्वित्वादि-पर्याप्तावन्यत्र प्रसिद्धस्याकाशत्वादिव्याप्यत्वस्य भ्रमत्वस्वीकारात्। न चैवं सम्ब-न्धांश एव भ्रमत्वं फलितम्, तच्च न सम्भवति, तदभाववद्विशेष्यतानिरूपित-तत्प्रकारताशालिज्ञानत्वस्यैव भ्रमत्व[रू]पत्वात्[1] सम्बन्धांशे विशेष्यत्वप्रकारत्व-योरभावादिति वाच्यम्, सांसर्गिकविषयतायामपि विशेष्यतात्वप्रकारतात्वयोरङ्गी-कारेणोक्तदोषाभावात्। न चौ( चै )वं तदभाववत्ताज्ञानकाले तत्संसर्गि( र्ग )क-भानस्याप्यनुदयप्रसङ्ग इति वाच्यम्, इष्टत्वात्, तदभाववत्ताज्ञानप्रतिबध्यता-वच्छेदककोटौ प्रकारतायां सांसर्गिकविषयताभिन्नत्वनिवेशेनोक्तदोषवारणसम्भ-वाच्चेत्याहुः, तच्चिन्त्यम्; एवमपि यत्रैकघटतात्पर्येण 'घटौ' इति वाक्यप्रयागस्तत्र तादृशवाक्यजन्यशाब्दबोधस्य भ्रमत्वोपपादनासम्भवात्, घटद्वयवृत्तिद्वित्वस्य घटत्व-व्याप्यपर्याप्तिसम्बन्धेनैकघटेऽपि सत्त्वात्।

अथ यज्ज्ञानीययत्प्रकारतानिरूपितविशेष्यतात्वं यन्निरूपिताधिकरणतावच्छे-दकं [ किञ् ]चिद्धर्मव्यापकतानवच्छेदकं तज्ज्ञानीयतत्प्रकारताकत्वमेव तज्ज्ञानस्य तद्भ्रमत्वं वाच्यम्। प्रकृते च घटद्वयवृत्तिद्वित्वप्रकारतानिरूपितविशेष्यत्वमेकघट एव तादृशद्वित्वाधिकरणतावच्छेदकद्वित्वान्तरञ्च घटान्तरेऽपीति तद्व्यापकतानवच्छे-दकत्वं तादृशविशेष्यतात्वस्येति तादृशवाक्यजन्यशाब्दबोधस्य भ्रमत्वोपपादनसम्भवे न तादृशापत्तेः संसर्गतास्वीकारस्य व्यर्थत्वाद् घटाकाशोभयवृत्तिद्वित्वप्रकारतानिरूपित-

---

१. 'पाच्च' इति पाठो मातृकायाम्।

विशेष्यत्वस्याकाश एव सत्त्वेन तादृशद्वित्वाधिकरणतावच्छेदकद्वित्वान्तरस्य च घटेऽपि सत्त्वेन तादृशद्वित्वप्रकारतानिरूपितविशेष्यतात्वस्य तादृशद्वित्वनिरूपिताधिकरणतावच्छेदकद्वित्वान्तररूपकिञ्चिद्धर्मव्यापकतानवच्छेदक[ त्वा ]त् ।

तस्मात् साध्याभाववदवृत्तित्वरूपव्याप्तौ साध्यसामानाधिकरण्यनिवेशस्यानावश्यकतया तदनिवेशप्रयुक्तशरीरलाघवानपायेन तद्व्याप्त्यवगाहिपरामर्श एवानुमितिहेतुर्न तु गुरुशरीरव्यापकसामानाधिकरण्यरूपव्याप्त्यवगाहिपरामर्शोऽनुमितिहेतुरिति सिद्धमिति कृतं पल्लवितेन ।

नव्यरीत्या परामशे(र्शो)ऽनुमाहेतुत्वमद्भुतम् ।
महादेवेन गदितं तनोतु विदुषां मुदम् ॥ १ ॥
अतिभावनया लब्धं प्रमेयं नूतनं हि यत् ।
तदत्र गृह्यतां सूक्ष्मदृष्टिमालम्ब्य सज्जनाः ॥ २ ॥

॥ इति पुण्यस्तम्भकरोपना[म]कमहादेवविरचितो
नव्यानुमितिपरामर्शकार्यकारणभावविचारः समाप्तः ॥



# परिशिष्टम्

## ग्रन्थे समागतानां नियमविशेषाणां सूचिः

पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. **वाजसनेयिसंहिता तथा तैत्तिरीयसंहिता का तुलनात्मक अध्ययन**—ग्रन्थोऽयं वैदिकसाहित्यस्य मूर्द्धन्यविदुषा डॉ० केशवप्रसादमिश्रेण प्रणीतः। ग्रन्थेऽस्मिन् विदुषा लेखकेन वाजसनेयि-तैत्तिरीयसंहितयोस्तुलनात्मकं विश्लेषणं राष्ट्रभाषामाध्यमेन कृतमस्ति। यथोक्तसंहितयोर्मन्त्राणां निगूढतत्त्वानां मौलिकं विश्लेषणमेव ग्रन्थस्यास्य वैशिष्ट्यम्— ३५०-००

२. **वाजसनेय-प्रातिशाख्य : एक परिशीलन**—वैदिकवाङ्मयस्य विश्रुतैर्विद्वद्भिः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य वेदविभागाध्यक्षैः, प्रतिकुलपतिभिः प्रो० युगलकिशोरमिश्रमहोदयैः प्रणीतेऽस्मिन् ग्रन्थे प्रातिशाख्यसाहित्यदृशा "वाजसनेयप्रातिशाख्यस्य" पाश्चात्यदृष्ट्या पौरस्त्यदृष्ट्या च गभीरमनुशीलनं कृतम्। विविधैरानुषङ्गिकपरिशिष्टैर्विस्तृतभूमिकादिभिश्चास्य ग्रन्थस्य महिमा संवर्द्धिताऽस्ति— २४०-००

३. **काशीमाहात्म्यम्**—स्वामिश्रीशिवानन्दसरस्वतिमहाराजैः प्रणीतेऽस्मिन् ग्रन्थे वैदिकसाहित्ये पौराणिकसाहित्ये च वर्णितं काश्या वैभवं सम्यग्रूपेण समालोचितम्, हिन्दीभाषानुवादेन स्पष्टीकृतञ्च। विश्वविद्यालयस्य प्रकाशनाधिकारिभिः डॉ० हरिश्चन्द्रमणित्रिपाठिभिः सुसम्पाद्य ग्रन्थोऽयं प्रकाशितः — १००-००

४. **अष्टादशपुराणेषु नारी**—डॉ० लक्ष्मीदेवीशर्मा-अय्यर-प्रणीतेऽस्मिन ग्रन्थे पौराणिकसाहित्यानुसारं भारतीयनारीणामुत्कर्षः, उत्सर्गः, वैदुष्यम्, सामाजिकजीवने राष्ट्रियजीवने च तासां सामाजिकप्रेरणादिपक्षाणामनुसन्धानात्मकमनुशीलनं कृतमस्ति, सहैव पूर्वपीठिकारूपेण वैदिकसाहित्यमपि समालोचितमस्ति— २० -००

५. **भगवन्नाममाहात्म्यसङ्ग्रहः ( द्वितीयं संस्करणम् )**—ग्रन्थोऽयं परमहंसपरिव्राजकश्रीरघुनाथेन्द्रयतिप्रणीतः। ग्रन्थेऽस्मिन् भक्तिशास्त्रदृशा भागवन्नाममाहात्म्यं विश्लेषितमस्ति। निश्चयरूपेणायं भगवद्भक्तेर्मौलिकतायाः, व्यापकतायाः, भास्वरतायाश्च परिचायकोऽस्ति— १४०-००

६. **श्रीतन्त्रालोक**.—ग्रन्थोऽयं महामाहेश्वराचार्यश्रीमदभिनवगुप्तविरचितः। अशेषागमोपनिषदालोकोऽय ग्रन्थ आचार्यश्रीजयरथकृतया **'विवेक'**व्याख्यया, अथ च डॉ० परमहंसमिश्रकृतया **'नीर-क्षीर-विवेक'**-हिन्दीव्याख्यया समलङ्कृत्य प्रकाशितः —

प्रथमो भागः १२४-०० द्वितीयो भागः १३२-००
तृतीयो भागः १६०-०० चतुर्थो भागः १८०-००
पञ्चमो भागः १८०-००

७. **पाणिनीयव्याकरणे प्रमाणसमीक्षा (द्वितीयं संस्करणम्)**—व्याकरणशास्त्रस्य पाणिनिभूतैराचार्यश्रीरामप्रसादत्रिपाठिमहोदयैः प्रणीतेऽस्मिन् ग्रन्थरत्ने प्रमाणसामान्यम्, प्रत्यक्षप्रमाणम्, वाक्यस्य स्फोटरूपता, शक्तिसम्बन्धस्य लक्षणम्, शक्तिभेदप्रभृतिविषयाणां गभीरं विश्लेषणं कृतमस्ति — ४००-००

८. **बृहच्छब्देन्दुशेखरः ( द्वितीयं संस्करणम् )**—व्याकरणशास्त्रस्य मूर्द्धन्योऽयं ग्रन्थ आचार्यश्रीनागेशभट्टप्रणीतः। ग्रन्थस्यास्य सम्पादनं प्रख्यातविद्वद्भिः श्रीसीतारामशास्त्रिभिः कृतम्— प्रथमो भागः —२२०-००

९. **प्रशस्तपादभाष्यम् ( द्वितीयं संस्करणम् )**—प्रशस्तपादाचार्यप्रणीतो न्यायवैशेषिकदर्शनस्यापूर्वोऽयं ग्रन्थः श्रीश्रीधरभट्टकृतया **'न्यायकन्दली'**-संस्कृतव्याख्यया, अथ च प्रख्यातविदुषा श्रीदुर्गाधरझाविरचितेन हिन्दीभाषानुवादेन समलङ्कृत्य प्रकाशितः — ४८०-००

१०. **शाण्डिल्यसंहिता ( द्वितीयं संस्करणम् )**—नारदपाञ्चरात्रसंहितास्वन्यतमायां श्रीशाण्डिल्यर्षिप्रणीतायां संहितायामस्यां जगतः प्रादुर्भावः, भक्तिसम्प्रदायः, आचरणाचारः, युगपरिमाणादिकलिकर्तव्याकर्तव्यधर्माधर्मादिविषयाः सम्यग्रूपेण समालोचिताः — १३२-००

**पत्रव्यवहारसङ्केतः—प्रकाशनाधिकारी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी—२२१००२**